तृतीयआह ॥ द्वयोरिति ॥ अस्तिनास्तीतिपक्षयोर्द्वयोरपिमध्यगतंसद्रूपत्वादस्ति निराकारत्वाच्चनास्तीतिपक्षद्वयसाधारणं प्रकाशानांसौर चांद्रवैद्युतादीनांजडप्रकाशानांप्रकाशनंप्रतीतिहेतुं आत्मानंसमुपास्महे ॥२४॥ चतुर्थआह ॥ सशिरस्कमिति ॥ अशेषाकारसंस्थितं सुरन रतिर्यगादिशरीरेषुसर्वेष्वंतर्यामितयास्थितं सशिरस्कंसशब्दांतंहकारादिंहंसमंत्रमजस्रमुच्चरंतं स्वमात्मानमुपास्महे ॥२५॥२६॥ सर्वेति ॥ येनमुमुक्षुणासर्वाशाः ऐहिकामुष्मिकविषयान्सर्वानपिमनोरथान्संत्यज्यएतदात्मोपासनरूपंफलमवाप्यते । येनात्मकोपासकेन अशाएव

द्वयोर्मध्यगतंनित्यमस्तिनास्तीतिपक्षयोः ॥ प्रकाशनंप्रकाशानामात्मानंसमुपास्महे ॥ २४ ॥ सशिर स्कंहकारादिमशेषाकारसंस्थितम् ॥ अजस्रमुच्चरंतंस्वमात्मानंसमुपास्महे ॥२५॥ संत्यज्यहृद्गुहेशानं देवमन्यंप्रयांतिये ॥ तेरत्नमभिवांछंतित्यक्तहस्तस्थकौस्तुभम् ॥ २६ ॥ सर्वाशाःकिलसंत्यज्यफल मेतदवाप्यते ॥ येनाशाविषवल्लीनांमूलमालाविलूयते ॥२७॥ बुध्वाप्याद्यंतवैरस्यंयःपदार्थेषुदुर्मतिः ॥ बध्नातिभावनांभूयोनरोनासौसगर्दभः ॥ २८ ॥ उत्थितानुत्थितानेतानिन्द्रियारीन्पुनःपुनः ॥ हन्या द्विवेकदंडेनवज्रेणेवहरिर्गिरीन् ॥ २९ ॥ हस्तंहस्तेनसंपीड्यदंतैर्दंतान्विचूर्ण्यच ॥ अंगान्यंगैःसमाक्र म्यजयेदादौस्वकंमनः ॥ ३० ॥ उपशमसुखमाहरेत्पवित्रंशमवशतःशममेतिसाधुचेतः ॥ प्रशमितम नसःस्वकेस्वरूपेभवतिसुखेस्थितिरुत्तमाचिराय ॥ ३१ ॥

विषवल्यःसंतापहेतुकत्वात् तासां मूलमालामूलभूताज्ञानसंतानो विलूयतेछिद्यते ॥ २७ ॥ बुध्वापीति ॥ दुर्मतिरल्पबुद्धिर्यः पदार्थेष्वाद्य तवैरस्यं आद्यंतयोःप्राग्भावप्रध्वंसाभावयोर्वैरस्यंनिःसारत्वंबुध्वापिभूयोभावनांवासनांबध्नाति असौनरोगर्दभोनेतिन ॥ २८ ॥ २९ ॥३०॥ उपशमेति ॥ मुमुक्षुः पूर्वंपवित्रंनिर्दोषंउपशमसुखमाहरेत्संपादयेत् । ततःशमवशतउपशमसुखसामर्थ्यात् विषयसुखेषुचेतः साधुशममुपश

ममेति ततश्चप्रशांतमनसः पुरुषस्यस्वकेस्वरूपेसुखेउत्तमास्थितिः चिरायभवति ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ कियदिति ॥ कियन्मात्रमत्यल्पमित्यर्थः अतःकारणादेतेनराज्येनकिंनकिंचित्प्रयोजनमित्यर्थः हतधीर्यथानष्टबुद्धिरिववृथैवास्मिन् राज्येतिष्ठामि



वसिष्ठउवाच ॥ इतिसिद्धगणोद्गीर्णांगीतांश्रुत्वामहीपतिः ॥ विषादमाजगामाशुभीरूरणरवादिव ॥ ३२ ॥ परिवारमशेषेणविसृज्यस्वंस्वमालयम् ॥ एकएवाविशद्राजामृगेन्द्रइवभूधरम् ॥ ३३ ॥ तत्रप्रोद्भूयनालोलखगपक्षतिचंचलाः ॥ आलोकयंल्लोकगतीर्विललापेदमातुरः ॥ ३४ ॥ हाकष्टमितिकष्टासुलोलललोकदृशास्वयम् ॥ पाषाणेष्विवपाषाणमालुवामिभ्रमादहम् ॥ ३५ ॥ अपर्यंतस्यकालस्यकोऽप्यंशोजीव्यतेमया ॥ तस्मिन्भावंनिबध्नामिधिङ्मामधमचेतसम् ॥ ३६ ॥ कियन्मात्रमिदंनामराज्यमाजीवितंमम ॥ किमेतेनवृथाह्यस्मिंस्तिष्ठामिहतधीर्यथा ॥ ॥ ३७ ॥ यद्वस्तुयच्चवारम्यंयदुदारमकृत्रिमम् ॥ किंचित्तदिहनास्त्येवकिंनिष्ठेयंधृतिर्मम ॥ ३८ ॥ अथयेमहतांमूर्ध्नितेदिनैर्निपतंत्यधः ॥ हंतचित्तमहत्तायांकैषाविश्वस्ततातव ॥ ३९ ॥ तेमहाविभवाभोगास्तेसंतःस्निग्धबांधवाः ॥ सर्वंस्मृतिपथंप्राप्तंवर्तमानेऽत्रकाधृतिः ॥ ४० ॥ क्वधनानिमहीपानांब्रह्मणःक्वजगंतिवा ॥ प्राक्तानिप्रयातानिकेयंविश्वस्ततामम ॥ ४१ ॥



॥ ३७ ॥ यदिति ॥ यद्वस्तुतात्त्विकंरम्यंनिर्दोषंउदारंउत्कृष्टंअकृत्रिममकल्पितंतत्किंचिदिहजगतिनास्त्येवममधृतिःप्रीतिःकिंनिष्ठाकिमालंबना ॥ ३८ ॥ अथेति ॥ चित्तेतिसंबोधनम् ॥ ३९ ॥ ४० ॥ ४१ ॥

॥ ४२ ॥ संसारेति ॥ संसारएवरात्रिःतमोमयत्वात् तत्रदुःस्वप्नवद्दुःखमयोदेहरूपोभ्रमस्तत्रचेदास्थामनुबध्नाति तत्तर्हिममअस्थितिममर्या दांधिगस्तु ममेयमस्थितिःकष्टेत्यर्थः ॥ ४३ ॥ ४४ ॥ यदिति ॥ मध्येयौवनेमनोरमंदेहादिपर्यंतेमनोरमं चूतफलादि आपातेप्रथमंमनोर मंमालतीकुसुमादि ॥ ४५ ॥ ४६ ॥ ४७ ॥ सतइति ॥ सतोविद्यमानस्यवस्तुनःमूर्ध्निपर्यंते ॥ ४८ ॥ येषामिति ॥ येषांब्रह्मादीनांनिमे

कोटयोब्रह्मणांयातागताःस्वर्गपरंपराः ॥ प्रयाताःपांसुवद्भूपाःकाधृतिर्ममजीविते ॥ ४२ ॥ संसाररात्रिदुःस्वप्नेशून्येदेहमयेभ्रमे ॥ आस्थांचेदनुबध्नातितन्ममास्तुधिगस्थितिम् ॥ ४३ ॥ अजस्रमुपयातास्तेयांतिचाद्यापिवासराः ॥ अविनष्टैकसद्वस्तुर्दृष्टोनाद्यापिवासरः ॥ ४४ ॥ यन्मध्येयच्चपर्यंतेयच्चापातेमनोरमम् ॥ सर्वमेवापवित्रंतद्विनाशामेध्यदूषितम् ॥ ४५ ॥ श्वःश्वःपापीयसीमेवश्वःश्वःक्रूरतरामपि ॥ श्वःश्वःखेदकरीमेतिदशामिहजडोजनः ॥४६॥ अज्ञानैकहतोबाल्येयौवनेवनिताहतः ॥ शेषेकलत्रचिंतार्थःकिंकरोतुकदाजडः ॥ ४७ ॥ सतोऽसत्तास्थितामूर्ध्नि मूर्ध्निरम्येऽप्यरम्यता ॥ सुखेषुमूर्ध्निदुःखानिकिमेकंसंश्रयाम्यहम् ॥ ४८ ॥ येषांनिमेषणोन्मेषौजगतांप्रलयोदयौ ॥ तादृशाःपुरुषाःसंतिमादृशांगणनैवका ॥ ४९ ॥ संपदोऽपिविचित्रायास्ताश्चेच्चित्तेनसंमताः ॥ तत्ताअपिमहारंभाहंतमन्येमहापदः ॥ ५० ॥

षणोन्मेषौनिद्राप्रबोधौ ॥ ४९ ॥ संपदइति ॥ विचित्राःसंपदोऽपिपुत्रवियोगादिनादुःखितस्यचित्तेनसंमताश्चेत्तर्हिमहारंभाः ताअपिसंपदो महत्यआपदइतिमन्ये । दुःखितेमनसिसर्वमसह्यमितिन्यायात् ॥ ५० ॥

आपदइति ॥ विचित्रा आपदोऽपि महाभ्युदयशिरस्कतयाचित्ते नसंमताश्चेत्तर्हिता अपिसकलसंपदोमन्ये ॥ ५१ ॥ ५.।२ ॥ सहस्रेति ॥
सहस्रसंख्यैरंकुरादिभिःशालतेयस्तस्य तत्रअंकुरारागद्वेषादयः शाखाः पुत्रादयः आत्मा देहएवस्कंधः फलानिसुखदुःखानिपंशुखास्तद्वेतवः





आपदोऽपिविचित्रायास्ताश्चेन्मनसिसंमताः ॥ तत्ताअपिमहारंभामन्येमनसिसंपदः ॥ ५१ ॥ संसा
रएवदुःखानांसीमांतःकिलकथ्यते ॥ तन्मध्यपतितेदेहेसुखमासाद्यतेकथम् ॥ ५२ ॥ सहस्रांकुरशा
खात्मफलपल्लवशालिनः ॥ अस्यसंसारवृक्षस्यमनोमूलमितिस्थितम् ॥ ५३ ॥ संकल्पमेवतन्मन्ये
संकल्पोपशमेनतु ॥ शोषयामियथाशोषमेतिसंसारपादपः ॥ ५४ ॥ प्रबुद्धोऽस्मिप्रबुद्धोऽस्मिदृष्टश्चौरो
मयात्मनः ॥ मनोनामेहहन्म्येनंमनसास्मिचिरंहतः ॥ ५५ ॥ एतावंतमिमंकालंमनोमुक्ताफलंमम ॥
अविद्धमासीदधुनाविद्धंतुगुणमर्हति ॥ ५६ ॥ विबुधैःसाधुभिःसिद्धैरहंसाधुप्रबोधितः ॥ आत्मानम
नुगच्छामिपरमानंदसाधनम् ॥ ५७ ॥ अयमहमिदमाततंममेतिस्फुरितमपास्यबलादसत्यमंतः ॥
रिपुमतिबलिनंमनोनिहन्मिप्रशममुपैमिनमोऽस्तुतेविवेक ॥ ५८ ॥ वसिष्ठउवाच ॥ इतिसंचिंत्यज
नकस्तूष्णीमेवबभूवह ॥ शांतचापलचेतस्त्वाल्लिपिकर्मार्पितोपमः ॥ ५९ ॥ तूष्णीमथचिरंस्थित्वाज
नकोजनजीवनः ॥ व्युत्थितश्चितयामासमनसाशमशालिना ॥ ६० ॥



॥५३॥५४॥५५॥ एतावंतमिति ॥ अविद्धमशिक्षितंविद्धंसुशिक्षितंगुणंशमादिकम् । अन्यत्रविद्धंछिद्रितंगुणंग्रथनतंतुम् ॥ ५६ ॥ ५७ ॥ अय
मिति ॥ अयमहमिदंममेत्यहंममाभिमानाभ्यांबलादंतःस्फुरितमाततमसत्यमपास्य अतिबलिनंरिपुंमनोनिहन्मीत्यन्वयः ॥५८॥५९॥६०॥

किमिति ॥ स्वतएवशुद्धस्यनिष्कलंकस्यस्थिरस्यचितः सद्रूपस्यमेकाकल्पनास्ति नकिंचित्कल्पनीयमित्यर्थः ॥ ६१ ॥ ६२ ॥ ६३ ॥
॥ ६४ ॥ स्वेति ॥ तेनहेतुनाअशेषेणसर्वेणापिमुमुक्षुणा स्वविचारवशेनैवप्राप्यंपरंवस्तुप्राप्तं इतरयाईहयान क्रियांतरेणनप्राप्तम् ॥ ६५ ॥

जनकउवाच ॥ किमुपादेयमस्तीहयत्नात्संसाधयामिकिम् ॥ यतःस्थिरस्यशुद्धस्यचितःका
मेऽस्तिकल्पना ॥ ६१ ॥ नाभिवांछाम्यसंप्राप्तंसंप्राप्तंनत्यजाम्यहम् ॥ स्वच्छआत्मनितिष्ठा
मियन्ममास्तुतदस्तुमे ॥ ६२ ॥ वसिष्ठउवाच ॥ ॥ इतिसंचिंत्यजनकोयथाप्राप्तक्रियाम
सौ ॥ असक्तःकर्तुमुत्तस्थौदिनंदिनपतिर्यथा ॥ ६३ ॥ भविष्यंनानुसंधत्तेनातीतंचिंतयत्य
सौ ॥ वर्तमाननिमेषंतुहसन्नेवानुवर्तते ॥ ६४ ॥ स्वविचारवशेनैवतेनतामरसेक्षण ॥ प्राप्तंप्रा
प्यमशेषेणरामनेतरयेहया ॥ ६५ ॥ सुंदर्यानिजयाबुद्ध्याप्रज्ञयैववयस्यया ॥ पदमासाद्यतेरा
मननामक्रिययान्यया ॥ ६६ ॥ यएवयत्नःक्रियतेबाह्यार्थोपार्जनेजनैः ॥ सएवयत्नःकर्तव्यःपू
र्वंप्रज्ञाविवृद्धये ॥ ६७ ॥ सीमानंसर्वदुःखानामापदांकोशमुत्तमम् ॥ बीजंसंसारवृक्षाणांप्रज्ञा
मांद्यंविनाशयेत् ॥ ६८ ॥ चिंतामणिरियंप्रज्ञाहृत्कोशस्थाविवेकिनः ॥ फलंकल्पलतेवैषा
चिंतितंसंप्रयच्छति ॥ ६९ ॥ विवेकिनमसंमूढंप्राज्ञमाशागणोत्थिताः ॥ दोषानपरिबाधंतेसं
नद्धमिवसायकाः ॥ ७० ॥

॥ ६६ ॥ ६७ ॥ ६८ ॥ ६९ ॥ ७० ॥

॥ ७१ ॥ ७२ ॥ इतिश्रीसंसारतरणिनाम्निवासिष्ठविवरणेउपशमप्रकरणेजनकोपाख्यानंनामैकोनविंशःसर्गः ॥ १९ ॥ पूर्वमाकाश फलपातवदाकस्मिकसिद्धगीताकर्णनाज्जनकस्यचित्तोपशांतिरुक्ता । इदानीमतीतानेकजन्मानुस्मरणद्वारेणात्मावबोधनाच्चित्तस्योपशमः पुण्यपावनाख्यानेननिरूप्यते । तत्रतावच्चित्तोपशमोपायानुपदिशति ॥ मुष्टयइत्यादिना ॥ मुष्टयोबीजावापहेतवःकुंचितांगुलयःकराः ।





पिधानंपरमार्कस्यजडात्माविततोऽसितः ॥ अहंकारांबुदोमत्तःप्रज्ञावातेनपात्यते ॥ ७१ ॥ फलमभिलषताकृर्षीवलेनप्रथमतरं पदमतुलमुपैतुमिच्छताच्चैःप्रथममियंमतिरेवलालनीया ॥ इतिश्रीमोक्षोपायउपशमप्रकरणेजनकोपाख्यानंनामैकोनविंशःसर्गः ॥ १९ ॥ तनुकृष्यतेधरैव ॥ ७२ ॥ वसिष्ठउवाच ॥ ॥ मुष्टयोमोहबीजानांदृष्टयोविविधापदाम् ॥ कुदृष्टयःक्षयं यांतिदृष्टेतस्मिन्परावरे ॥ १ ॥ नित्यमंतर्विचारस्यपश्यतश्चंचलंजगत ॥ जनकस्येवकालेन स्वयमात्माप्रसीदति ॥ २ ॥ नदैवंनचकर्माणिनधनानिनबांधवाः ॥ शरणंभवभीतानांस्व प्रयत्नादृतेनृणाम् ॥ ३ ॥ अयमेवाहमित्यस्मिन्संकोचेविलयंगते ॥ समस्तभुवनव्यापीवि स्तारउपजायते ॥ ४ ॥ अयमेवाहमित्यस्यानिशायाउदितेक्षये ॥ स्वयंसर्वगतःस्फारःस्वा लोकःसंप्रवर्तते ॥ ५ ॥



दृष्टयोदर्शनहेतवः । कुदृष्टयोभ्रांतयः । मुष्टयोदृष्टयइतिचपदद्वयमपिकुदृष्टिविशेषणंद्रष्टव्यम् ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ अयमिति ॥ अयंदेहप रिमितएवाहमित्येवंरूपायाअहंकृतिःसैवनिशा तमोमयत्वात । तस्याःक्षयेउदितेसति सर्वगतःस्फारःस्वालोकःआत्मतत्त्वज्ञानंसंप्रवर्तते ॥५॥

उपादेयेति ॥ अत्रपामरदृष्ट्याहेयोपादेयविभागइतिद्रष्टव्यम् ॥ ६ ॥ मेति ॥ शेषस्थःसमदृष्टौस्थितः ॥ ७ ॥ समदृष्टौस्थितस्यलिंगभूतान्
गुणानाह ॥ निरितिश्लोकद्वयंवाक्यम् । निराशताइदंमेभूयादितिभाविविषयतृष्णानिवृत्तिः । निर्भयतासर्वभूताभयप्रदानात्स्वस्य
भयनिवृत्तिः नित्यतादेहातिरिक्तनित्यात्मभावः समतापरिपूर्णदृष्टिः ज्ञताज्ञाननिष्ठता निरीहताउपादेयेऽपिअप्रवृत्तिः निष्क्रियताअनिष्ट
स्यापिअचिकित्सा सौम्यताआह्लादकरत्वं निर्विकल्पताएकाग्रचित्तत्वम् ॥ ८ ॥ धृतिरचंचलत्वं मैत्रीसर्वत्रमित्रभावः मनस्तुष्टिःयथाला

उपादेयानुपतनंहेयैकांतविवर्जनम् ॥ यदेतन्मनसोरामतंबंधंविद्धिनेतरत ॥ ६ ॥ माखेदंभज
हेयेषुनोपादेयपरोभव ॥ हेयादेयदृशौत्यक्त्वाशेषस्थःसुस्थिरोभव ॥ ७ ॥ निराशतानिर्भय
तानित्यतासमताज्ञता ॥ निरीहतानिष्क्रियतासौम्यतानिर्विकल्पता ॥ ८ ॥ धृतिर्मैत्रीमन
स्तुष्टिर्मृदुतामृदुभाषिता ॥ हेयोपादेयनिर्मुक्तेज्ञेतिष्ठंत्यपवासनम् ॥ ९ ॥ गृहीततृष्णाशफ
रिवासनाजालमाविलम् ॥ संसारवारिप्रसृतंचिंतातंतुभिराततम् ॥ १० ॥ अनयातीक्ष्णयाता
तच्छिंधिबुद्धिशलाकया ॥ वात्ययांबुदजालंचछित्त्वातिष्ठपदेतते ॥ ११ ॥ मनसैवमनश्छि
त्वाकुठारेणेवपादपम् ॥ पदंपावनमासाद्यसद्यएवस्थिरोभव ॥ १२ ॥

भपरितुष्टता मृदुताअनिष्ठुरचित्तत्वं मृदुभाषिताप्रियंवदत्वम् ॥ ९ ॥ गृहीतेतिश्लोकद्वयंवाक्यम् । संसारवारिणिसंसारारण्येजलेप्रसृतंचिंता
भिरेवतंतुभिराततंविस्तृतं गृहीतातृष्णाएवशफर्योयेनतद्वासनाजालम् ॥ १० ॥ तीक्ष्णयाबुद्धिशलाकयाछिंधि वात्ययावातसमूहेनआंबु
दंअंबुदसंबंधिजालंसमूहमिवछित्त्वाचततेपदेतिष्ठेतिसंबंधः ॥ ११ ॥ १२ ॥

तिष्ठन्नितित्रिभिः सर्वावस्थास्वपिजगतोऽसत्तांनिश्चित्य तत्रास्थांपरित्यजेत्यर्थः ॥ १३ ॥ मनइति ॥ हतद्विपंसिंहंमांसलोभात्चित्स्वरूपमनुधावतीत्यर्थः ॥ १४ ॥ सिंहेति ॥ यथास्वतोऽसमर्थोऽपिश्टगालादिः सिंहमनुसरन्मांसंभुंक्ते तद्वन्मनःस्वयंजडमपिचिच्छायासंक्रांत्याविषयग्रहणसमर्थंभवतीत्यर्थः ॥ १५ ॥ दृश्यमिति ॥ दृश्याश्रयएवसचित्तत्वंबंधहेतुश्च दृश्यत्यागएवाचित्तत्वंमोक्षहेतुत्वंचेत्यर्थः ॥ १६ ॥ नेति ॥ आत्मनोऽपरिच्छिन्नतांजगतोऽसत्त्वंचध्यायन्गिरिरिवस्थिरोभूत्वाअनंताकाशवन्निर्मलहृदयो हृदयेश्वरेतिष्ठत्वम् ॥ १७ ॥

तिष्ठन्गच्छन्स्वपञ्जाग्रन्निश्वसन्नुत्पतन्पतन् ॥ असदेवेदमित्यंतर्निश्चित्यास्थांपरित्यज ॥ १३ ॥ मनःप्रकृत्यैवजडंचित्तत्वमनुधावति ॥ मांसगर्धेनमार्जारोवनेमृगपतिंयथा ॥ १४ ॥ सिंहवीर्यवशाल्लब्धंमांसंभुंक्तेऽनुगोहरेः ॥ संविद्वीर्यवशात्प्राप्तंदृश्यमाश्रयतेमनः ॥ १५ ॥ दृश्यमाश्रयसीदंचेत्तत्सचित्तोऽसिबंधवान् ॥ दृश्यंसंत्यजसीदंचेत्तदचित्तोऽसिमोक्षवान् ॥ १६ ॥ नाहंज्ञेयामितिध्यायंस्तिष्ठत्वमचलःसदा ॥ अनंताकाशसंकाशहृदयोहृदयेश्वरे ॥ १७ ॥ आत्मनोजगतश्चांतर्द्रष्टृदृश्यदशांतरे ॥ दर्शनाख्येस्वमात्मानंसर्वदाभावयन्भव ॥ १८ ॥ स्वाद्यस्वादकसंत्यक्तंस्वाद्यस्वादकमध्यगम् ॥ स्वादनांतःस्थितंध्यायन्नित्यमात्ममयोभव ॥ १९ ॥

आत्मनइति ॥ आत्मनोजगतश्चअंतर्मध्येयद्दर्शनंतद्द्रष्टृदृश्यदशांतरेवर्तते द्रष्टृदशांदृश्यदशांवाप्राप्यचिन्मात्ररूपेणवर्तते तादृग्दर्शनस्वरूपंस्वमात्मानंसर्वदाभावयन्भवतिष्ठ ॥ १८ ॥ अमुमेवार्थंभंग्यंतरेणाहश्लोकद्वयेन ॥ स्वाद्येति ॥ स्वाद्यंरसनीयंपानादिस्वादकोरसयितातयोर्मध्यगं मध्यगताभ्यांकर्तृकर्मभ्यां संत्यक्तंकेवलमनुपहितंयत्स्वादनंरसानुभवरूपंवस्तुतद्ध्यायन्परमात्ममयोभव ॥ १९ ॥

रागेति ॥ अनुभवनीयस्योपभोग्यस्यकांतादेरनुभवितुरुपभोक्तुश्चनिरालंबंकर्तृकर्मभावासंस्पृष्टंमध्यमनुभवरूपमवलंब्यतत्रमध्येस्थिरोभव ॥ २० ॥ एतामिति ॥ अहंभावमयीमेतांस्वस्यभावनामनहंभावशलाकया नाहमितियोभावःतयैवशलाकयाछित्वा प्रशांताखिलभूतभूतिःसन्भवांतभूमौसंसारस्यपारेभव ॥ २१ ॥ २२ ॥ यदीति ॥ अभिमानिकत्वाद्देहबंधस्याहंकारपरित्यागे देहत्यागएवस्यादित्य

रागानुभवनीयस्यसदानुभवितुःस्वयम् ॥ अवलंब्यनिरालंबंमध्यंमध्येस्थिरोभव ॥ २० ॥ एतामहंभावमयीमपुण्यांछित्वानहंभावशलाकयैव ॥ स्वभावनांभाव्यभवांतभूमौभवाभिभूताखिलभूतभूतिः ॥ २१ ॥ श्रीरामउवाच ॥ अतिगंभीरमेवैतद्भगवन्वचनंतव ॥ यदहंकारतृष्णांत्वंमागृहाणेतिवक्षिमाम् ॥ २२ ॥ यद्यहंकारसंत्यागंकरोमितदिमंप्रभो ॥ त्यजामिदेहनामानंसंनिवेशमशेषतः ॥ २३ ॥ अहंकारक्षयेदेहःकिलावश्यंविनश्यति ॥ मूलेक्रकचसंलूनेसुमहानिवपादपः ॥ २४ ॥ वसिष्ठउवाच ॥ ॥ सर्वत्रवासनात्यागोरामराजीवलोचन ॥ द्विविधःकथ्यतेतज्ज्ञैर्ध्येयोज्ञेयश्चनामतः ॥ २५ ॥ अहमेषांपदार्थानामेतेचममजीवितम् ॥ नाहमेभिर्विनाकश्चिन्नमयैतेविनाकिल ॥ २६ ॥ इत्यंतर्निश्चयंत्यक्त्वाविचार्यमनसासह ॥ नाहंपदार्थस्यनमेपदार्थइतिभाविते ॥ २७ ॥

र्थः ॥ २३ ॥ २४ ॥ २५ ॥ ध्येयज्ञेयनाम्नोर्वासनात्यागयोर्मध्ये प्रथमस्यलक्षणमाहश्लोकत्रयेण ॥ अहमिति ॥ आत्मनोदेहादिभिःपरस्परसंबंधाभिमानरूपमहंकारं विचारपूर्वकंमनसासहत्यक्त्वा देहादेःपदार्थस्यममचनकश्चित्संबंधइतिभावितेसति ॥ २६ ॥ २७ ॥

अंतःशीतलयारागद्वेषरहितयाबुद्ध्या क्रियाःकुर्वतोयोवासनात्यागःसोऽयंध्येयःप्रकीर्तितः ॥ २८ ॥ द्वितीयंवासनात्यागंलक्षयति ॥ सर्वमिति ॥ समस्तयाभेदरहितयाबुद्ध्यायंवासनाक्षयंकृत्वा निर्ममोनिर्गताहंममभावःसन् स्थूलसूक्ष्मकारणभेदेनत्रिविधमपिदेहं जहाति त्यजति असौवासनात्यागोज्ञेयइत्युच्यते ॥ २९ ॥ उक्तंत्यागद्वयमपिजीवन्मुक्तिविदेहमुक्त्योर्विभजते श्लोकद्वयेन ॥ अहमित्यादिना





अंतःशीतलयाबुद्ध्याकुर्वतोलीलयाक्रियाः ॥ योनूनंवासनात्यागोध्येयोरामसकीर्तितः ॥ २८ ॥ सर्वंसमस्तयाबुद्ध्यायंकृत्वावासनाक्षयम् ॥ जहातिनिर्ममोदेहंज्ञेयोऽसौवासनाक्षयः ॥ २९ ॥ अहंकारसर्वींत्यक्त्वावासनांलीलयैवयः ॥ तिष्ठतिध्येयसंत्यागीसजीवन्मुक्तउच्यते ॥ ३० ॥ निर्मूलकलनांत्यक्त्वावासनांयःसमंगतः ॥ ज्ञेयत्यागमयंविद्धिमुक्तंतंरघुनंदन ॥ ३१ ॥ द्वावेतौराघवत्यागौसमौमुक्तपदेस्थितौ ॥ द्वावेतौब्रह्मतांयातौद्वावेतौविगतज्वरौ ॥३२॥ आपतत्सुयथाकालंसुखदुःखेष्वनारतम् ॥ नहृष्यतिग्लायतियःसमुक्तइतिकथ्यते ॥ ३३ ॥ ईप्सितानीप्सितेनस्तोयस्यांतर्वस्तुदृष्टिषु ॥ सुषुप्तवद्यश्चलतिसमुक्तइतिकथ्यते ॥३४॥ हर्षामर्षभयक्रोधकामकार्पण्यदृष्टिभिः ॥ नपरामृश्यतेयोंऽतःसजीवन्मुक्तउच्यते॥३५॥ सुषुप्तवत्प्रशमितभाववृत्तिनास्थितंसदाजाग्रतितेनचेतसा ॥ कलान्वितोविधुरिवयःसदामुदानिषेव्यतेमुक्तइतीहसस्मृतः ॥३६॥

॥ ३० ॥ ३१ ॥ ३२ ॥ आपतत्स्वित्यादिनाश्लोकचतुष्टयेनजीवन्मुक्तलक्षणमाह ॥ ३३ ॥ वस्तुदृष्टिष्विष्टानिष्टदर्शनेषु ॥ ३४ ॥ अमर्षोऽत्राक्षांतिरूपेर्ष्या क्रोधःपरतिरस्कारादिभिर्मनसःप्रज्वलनं कामोऽभिलाषः कार्पण्यंदैन्यं ॥ ३५ ॥ तेनमुमुक्षुणा जाग्रद्दशायामपि सुषुप्तावस्थायामिवप्रशमितभाववृत्तिनानिवृत्तहर्षविषादादिभाववृत्तिनाचेतसाउपलक्षितेनस्थितमित्यन्वयः ॥ ३६ ॥

बाह्येति ॥ बाह्यार्थवासनोद्भूताबाह्यवस्तुवासनाभिर्भूयिष्ठा ॥ ३७ ॥ तृष्णास्वरूपमाह इदमिति ॥ तांतृष्णांशृंखलांविद्धिकलनांचेति सैवभावनातृष्णासैवबंधोबंधहेतुश्चेत्यर्थः ॥ ३८ ॥ ३९ ॥ ४० ॥ अन्यश्चेत्यादिश्लोकषट्केनचतुर्विधमहंकारमाह ॥ ४१ ॥ तत्रआपादम

वसिष्ठउवाच ॥ ॥ बाह्यार्थवासनोद्भूतातृष्णाबद्धेतिराघव ॥ सर्वार्थवासनोन्मुक्तातृष्णामुक्तेतिकथ्यते ॥ ३७ ॥ इदमस्तुममेत्यंतयैषाराघवभावना ॥ तांतृष्णांशृंखलांविद्धिकलनांचमहामते ॥ ३८ ॥ तामेतांसर्वभावेषुसत्स्वसत्सुचसर्वदा ॥ संत्यज्यपरमोदारपदमेतिमहामनाः ॥ ३९ ॥ बंधास्थामथमोक्षास्थांसुखदुःखदशामपि ॥ त्यक्त्वासदसदास्थांचतिष्ठाक्षुब्धमहाब्धिवत् ॥ ४० ॥ अन्यश्चराममनसिपुरुषस्यविचारिणः ॥ जायतेनिश्चयःसाधोस्फाराकारश्चतुर्विधः ॥ ४१ ॥ आपादमस्तकमहंमातृपितृविनिर्मितः ॥ इत्येकोनिश्चयोरामबंधायासद्विलोकनात् ॥ ४२ ॥ अतीतःसर्वभावेभ्योवालाग्रादप्यहंतनुः ॥ इतिद्वितीयोमोक्षायनिश्चयोजायतेसताम् ॥ ४३ ॥ जगज्जालपदार्थात्मासर्वमेवाहमक्षयः ॥ तृतीयोनिश्चयोप्येवंमोक्षायैवरघूत्तम ॥ ४४ ॥ जगच्चासदिदंशून्यंशून्यव्योमसमंसदा ॥ एवमेवचतुर्थोऽपिनिश्चयोमोक्षसिद्धये ॥ ४५ ॥

स्तकमेवाहमितिप्रथमः ॥ ४२ ॥ सर्वातीतःपरमसूक्ष्मोऽहमितिद्वितीयः ॥ ४३ ॥ सर्वात्मकोऽहमितितृतीयः ॥ ४४ ॥ अहमितिजगदितिचसकलंशून्यमेव अतोव्योमवत्सर्वविकल्पातीतोऽहमितिचतुर्थः ॥ ४५ ॥

अंतःशीतलयारागद्वेषरहितयाबुद्ध्या क्रियाःकुर्वतोयोवासनात्यागःसोऽयंध्येयःप्रकीर्तितः ॥ २८ ॥ द्वितीयंवासनात्यागंलक्षयति ॥ स
र्वमिति ॥ समस्तयाभेदरहितयाबुद्ध्यायंवासनाक्षयंकृत्वा निर्ममोनिर्गताहंममभावःसन् स्थूलसूक्ष्मकारणभेदेनत्रिविधमपिदेहं जहाति
त्यजति असौवासनात्यागोज्ञेयइत्युच्यते ॥ २९ ॥ उक्तंत्यागद्वयमपिजीवन्मुक्तिविदेहमुक्त्योर्विभजते श्लोकद्वयेन ॥ अहमित्यादिना

अंतःशीतलयाबुद्ध्याकुर्वतोलीलयाक्रियाः ॥ योनूनंवासनात्यागोध्येयोरामसकीर्तितः ॥ २८ ॥
सर्वंसमस्तयाबुद्ध्यायंकृत्वावासनाक्षयम् ॥ जहातिनिर्ममोदेहंज्ञेयोऽसौवासनाक्षयः ॥ २९ ॥ अ
हंकारसखींत्यक्त्वावासनांलीलयैववयः ॥ तिष्ठतिध्येयसंत्यागीसजीवन्मुक्तउच्यते ॥ ३० ॥ नि
र्मूलकलनांत्यक्त्वावासनांयःसमंगतः ॥ ज्ञेयत्यागमयंविद्धिमुक्तंतंरघुनंदन ॥ ३१ ॥ द्वावेतौरा
घवत्यागौसमौमुक्तपदेस्थितौ ॥ द्वावेतौब्रह्मतांयातौद्वावेतौविगतज्वरौ ॥३२॥ आपतत्सुयथा
कालंसुखदुःखेष्वनारतम् ॥ नहृष्यतिग्लायतियःसमुक्तइतिकथ्यते ॥ ३३ ॥ ईप्सितानीप्सितेन
स्तोयस्यांतर्वस्तुदृष्टिषु ॥ सुषुप्तवद्यश्चलतिसमुक्तइतिकथ्यते ॥३४॥ हर्षामर्षभयक्रोधकामकार्प
ण्यदृष्टिभिः ॥ नपरामृश्यतेयोऽतःसजीवन्मुक्तउच्यते ॥३५॥ सुषुप्तवत्प्रशमितभाववृत्तिनास्थि
तंसदाजाग्रतितेनचेतसा ॥ कलान्वितोविधुरिवयःसदामुदानिषेव्यतेमुक्तइतीहसस्मृतः ॥३६॥

॥ ३० ॥ ३१ ॥ ३२ ॥ आपतत्स्वित्यादिनाश्लोकचतुष्टयेनजीवन्मुक्तलक्षणमाह ॥ ३३ ॥ वस्तुदृष्टिषुइष्टानिष्टदर्शनेषु ॥ ३४ ॥ अ
मर्षोऽत्राक्षांतिरूपेर्ष्या क्रोधःपरतिरस्कारादिभिर्मनसःप्रज्वलनं कामोऽभिलाषः कार्पण्यंदैन्यं ॥ ३५ ॥ तेनमुमुक्षुणा जाग्रद्दशायामपि
सुषुप्तावस्थायामिवप्रशमितभाववृत्तिनानिवृत्तहर्षविषादादिभाववृत्तिनाचेतसाउपलक्षितेनस्थितमित्यन्वयः ॥ ३६ ॥

बाह्येति ॥ बाह्यार्थवासनोद्भूताबाह्यवस्तुवासनाभिर्भूयिष्ठा ॥ ३७ ॥ तृष्णास्वरूपमाह इदमिति ॥ तांतृष्णांश्रृंखलांविद्धिकलनांचेति सैवभावनातृष्णासैवबंधोबंधहेतुश्चेत्यर्थः ॥ ३८ ॥ ३९ ॥ ४० ॥ अन्यश्चेत्यादिश्लोकषट्केनचतुर्विधमहंकारमाह ॥ ४१ ॥ तत्रआपादम

वसिष्ठउवाच ॥ ॥ बाह्यार्थवासनोद्भूतातृष्णाबद्धेतिराघव ॥ सर्वार्थवासनोन्मुक्तातृष्णामुक्तेतिकथ्यते ॥ ३७ ॥ इदमस्तुममेत्यंतर्यैषाराघवभावना ॥ तांतृष्णांश्रृंखलांविद्धिकलनांचमहामते ॥ ३८ ॥ तामेतांसर्वभावेषुसत्स्वसत्सुचसर्वदा ॥ संत्यज्यपरमोदारपदमेतिमहामनाः ॥ ३९ ॥ बंधास्थामथमोक्षास्थांसुखदुःखदशामपि ॥ त्यक्त्वासदसदास्थांचतिष्ठाक्षुब्धमहाब्धिवत् ॥ ४० ॥ अन्यश्चराममनसिपुरुषस्यविचारिणः ॥ जायतेनिश्चयःसाधोस्फाराकारश्चतुर्विधः ॥ ४१ ॥ आपादमस्तकमहंमातृपितृविनिर्मितः ॥ इत्येकोनिश्चयोरामबंधायासद्विलोकनात् ॥ ४२ ॥ अतीतःसर्वभावेभ्योवालाग्रादप्यहंतनुः ॥ इतिद्वितीयोमोक्षायनिश्चयोजायतेसताम् ॥ ४३ ॥ जगज्जालपदार्थात्मासर्वमेवाहमक्षयः ॥ तृतीयोनिश्चयोप्येवंमोक्षायैवरघूत्तम ॥ ४४ ॥ जगच्चासदिदंशून्यंशून्यव्योमसमंसदा ॥ एवमेवचतुर्थोऽपिनिश्चयोमोक्षसिद्धये ॥ ४५ ॥

स्तकमेवाहमितिप्रथमः ॥ ४२ ॥ सर्वातीतःपरमसूक्ष्मोऽहमितिद्वितीयः ॥ ४३ ॥ सर्वात्मकोऽहमितितृतीयः ॥ ४४ ॥ अहमितिजगदितिचसकलंशून्यमेव अतोव्योमवत्सर्वविकल्पातीतोऽहमितिचतुर्थः ॥ ४५ ॥

एतेषांमध्येप्रथमोबंधयोग्यतृष्णाप्रोतत्वाद्बंधायैव । अन्येतुत्रयःशुद्धतृष्णान्वितत्वाज्जीवन्मुक्तेष्वेवविलसंति ॥ ४६ ॥ उपादेयेष्वपित्रिषु सर्वात्माहमितिनिश्चयःश्रेयानित्याह ॥ सर्वमिति ॥ सर्वमहंचात्मैवेतियोनिश्चयइत्यन्वयः ॥ ४७ ॥ शून्यवादशंकानिरासायशून्यमित्यादयःशब्दाःकथंचिदात्मपर्यायाइत्याह ॥ शून्यमिति तत्रनिराकारत्वात् शून्यं परोक्षत्वात् जगदुपादानत्वात् प्रकृतिः विविधविक्षेपहेतुत्वान्माया बृंहणाद्ब्रह्म विशुद्धज्ञानरूपत्वाद्विज्ञानं कल्याणरूपत्वाच्छिवः पूरकत्वात्पुरुषः ईशितृत्वादीशानः इत्येवमात्मैवनित्यंकथ्यते

एतेषांप्रथमःप्रोक्तःतृष्णयाबंधयोग्यया ॥ शुद्धतृष्णास्त्रयःस्वच्छाजीवन्मुक्तविलासिनः ॥ ४६ ॥ सर्वमात्माहमेवेतिनिश्चयोयोमहात्मते ॥ तमादायविषादायनभूयोयातितेमतिः ॥ ४७ ॥ शून्यं प्रकृतिर्मायेतिब्रह्मविज्ञानमित्यपि ॥ शिवःपुरुषईशानोनित्यमात्मेतिकथ्यते ॥ ४८ ॥ द्वैताद्वैत समुद्भेदैर्जगन्निर्माणलीलया ॥ परमात्ममयीशक्तिरद्वैतैवविजृंभते ॥ ४९ ॥ आत्मीयेपरकीयेवा सर्वस्मिन्नेवसर्वदा ॥ नष्टेचोपचितेकार्येसुखदुःखेगृहाणमा ॥ ५० ॥ सर्वातीतपदालंबीपूर्णेंदुशिशिराशयः ॥ नोद्वेगीनचतुष्टात्मासंसारेनावसीदति ॥ ५१ ॥ समःशत्रौचमित्रेचदयादाक्षिण्य संयुतः ॥ प्राप्तकर्मकरोनित्यंसंसारेनावसीदति ॥ ५२ ॥

॥ ४८ ॥ द्वैतेति ॥ द्वयोर्भावोद्विताद्वितैवद्वैतंभेदइतियावत् । द्वैतंचअद्वैतंचतयोःसमुद्भेदोमेलनंचतैःप्रकारैः याजगन्निर्माणरूपालीलातयेत्थंभूतापरमात्ममयीशक्तिःचिच्छक्तिरद्वैतैवसर्वत्रसच्चिदानंदात्मनःस्वरूपस्याविच्छेदादभिन्नैवविजृंभते प्रकाशते तरंगादिवैचित्र्येऽपि समुद्रस्यैक्यमिवेतिभावः । तत्रकार्यकारणयोःक्वचिद्द्वैतमेवप्रतीयते । यथागोमयाद्वृश्चिकोजायतेइत्यत्र । क्वचिदद्वैतम् यथासुवर्णात्कटककुंडलमुकुटादिः । क्वचिद्द्वैताद्वैते यथाक्षीराद्दध्यादि ॥ ४९ ॥ ५० ॥ ५१ ॥ ५२ ॥

नेति ॥ यःखलुमुमुक्षुःप्राप्तंसुखंतत्साधनंचनाभिनंदतिनानुमोदते दुःखंचतत्साधनंचप्राप्तंनद्वेष्टि इष्टेविनष्टेनशोचति अप्राप्तमिष्टंनकांक्षति तस्मादीहितानीहितैरिष्टानिष्टैर्मुक्तःसपुमान्संसारेनावसीदति । जन्मादिदुःखैर्नखिद्यते ॥ ५३ ॥ सर्वस्येति ॥ स्वभावतःपेशलोक्तिमान् मृदुभाषी चोदितःकिमीहितमितिपरैश्चोदितःसन्सर्वस्याप्यभिमतंउचितमेववक्ता । ताच्छीलिकस्तृन्प्रत्ययः । तेननलोकाव्ययेतिकृद्योग लक्षणायाःषष्ठ्यानिषेधादभिमतमितिद्वितीयायुज्यते । अभिमतत्वनिश्चयःकथमित्यत्राह । आशयज्ञश्चभूतानामिति आशयोऽभिप्रायः

नाभिनंदतिनद्वेष्टिनशोचतिनकांक्षति ॥ ईहितानीहितैर्मुक्तःसंसारेनावसीदति ॥ ५३ ॥
सर्वस्याभिमतंवक्ताचोदितःपेशलोक्तिमान् ॥ आशयज्ञश्चभूतानांसंसारेनावसीदति ॥ ५४ ॥
पूर्णांदृष्टिमवष्टभ्यध्येयत्यागविलासिनीम् ॥ जीवन्मुक्ततयास्वस्थोलोकेविहरराघव ॥ ५५ ॥
अंतःसंत्यक्तसर्वाशोवीतरागोविवासनः ॥ बहिःसर्वसमाचारोलोकेविहरराघव ॥ ५६ ॥
बहिःकृत्रिमसंरंभोहृदिसंरंभवर्जितः ॥ कर्ताबहिरकर्तांतर्लोकेविहरराघव ॥ ५७ ॥ त्यक्ताहं कृतिरासुप्तमतिराकाशशोभनः ॥ अगृहीतकलंकांकोलोकेविहरराघव ॥ ५८ ॥ उदारपेशलाचा रःसर्वाचारानुवृत्तिमान् ॥ अंतःसर्वपरित्यागीलोकेविहरराघव ॥ ५९ ॥

॥ ५४ ॥ पूर्णामितिश्लोकषट्केनजीवन्मुक्तव्यवहारमाह ॥ ध्येयत्यागविलासिनीं पूर्वोक्ताहंकाररूपवासनात्यागोध्येयत्यागःतेनविलासिनीं परिस्फुरंतींपूर्णांदृष्टिंब्रह्मदृष्टिमित्यर्थः ॥ ५५ ॥ अंतरिति ॥ भाविन्यभिमतेआशावर्तमानेरागःभूतेवासनातत्त्रितयरहितः ॥ ५६ ॥ ब हिरिति ॥ कृत्रिमसंरंभःकल्पितरागद्वेषादिविकारःहृदिसंरंभवर्जितःनिर्वासनत्वान्निर्विकारः ॥ ५७ ॥ त्यक्तेति ॥ अगृहीतकलंकांकः अ गृहीताःकलंकाअंकाश्चयेन । तत्रकलंकामनोदोषाअंकास्तुव्यावृत्तिहेतवोलांछनानि ॥ ५८ ॥ उदारेति ॥ पेशलाचारःमृदुव्यवहारःसर्वा

चारानुवृत्तिमान्सर्वेषामाचारमनुवर्तमानः अनुमोदमानइत्यर्थः । जोषयेत्सर्वकर्माणिविद्वान्मुक्तःसमाचरन्इतिन्यायात् ॥ ५९ ॥ अंतरि



ति ॥ बहिराशोन्मुखेहितःआशानुकूलचेष्टितः ॥६०॥ अयमिति ॥ अयंबंधुःअयंतुपरः । अयमेवाहंअयंतुभवान् । इतियामिथ्यादृशोभेद



दृष्टयःताअधुनाविगलंतु अधुनाप्रबुद्धस्यतवविगलंतुविनश्यंतु ॥६१॥ अयमिति ॥ लघुचेतसां लघुनिपरिच्छिन्नेस्वस्यजीवस्यात्मत्वेनगृही तेदेहेचेतोयेषांतेषामेवायमेवबंधुरयंनेतिगणनाविचारणाभवेत् । उदारचरितानामुदारेमहतिपरिपूर्णेब्रह्मणिचरितंनिष्ठायेषांतेषांब्रह्मनिष्ठानां

अंतर्नैराश्यमादायबहिराशोन्मुखेहितः ॥ बहिस्तप्तोऽतराशीतोलोकेविहरराघव ॥ ६० ॥ अ
यंबंधुःपरश्चायमयंचाहमयंभवान् ॥ इतिमिथ्यादृशोरामविगलंतुतवाधुना ॥ ६१ ॥ अयंबंधु
रयंनेतिगणनालघुचेतसाम् ॥ उदारचरितानांतुवसुधैवकुटुंबकम् ॥६२॥ विविधजन्मशताहित
संभ्रमेजगतिबंधुरबंधुरितीक्षणम् ॥ भ्रमदशैवविभातिनवस्तुतास्त्रिभुवनंचिरबंधुरबंध्वपि ॥६३॥
अत्रैवोदाहरंतीममितिहासंपुरातनम् ॥ भ्रात्रोस्त्रिपथगातीरेसंवादंमुनिपुत्रयोः ॥६४॥ अस्त्य
स्यजंबूद्वीपस्यकस्मिंश्चिद्दिङ्निकुंजके ॥ वनव्यूहमहोत्तंसोमहेंद्रोनामपर्वतः ॥ ६५ ॥ तस्यैक
देशेविततेरत्नसानौमनोरमे ॥ आसीदभ्युदितज्ञानस्तपोराशिरुदारधीः ॥ ६६ ॥

पुनर्वसुधैवप्रपंचःसर्वोऽपिकुटुंबकं भोगोपकरणद्रव्यमित्यर्थः ॥ ६२ ॥ विविधेति ॥ विविधैःसुरनरतिर्यगादिरूपैःजन्मशतैराहितसंभ्रमेविर



चितविपर्यये अस्मिन्जगति बंधुरयमितिवायंपुनरबंधुरितिईक्षणंभ्रमदशैवकेवलंविभाति भ्रांतदशास्फुरणमेव । वस्तुतस्तुविचार्यमाणंबंधुरपि स्यात् अबंधुरपिस्याज्जन्मभेदात् । जन्मभेदात्प्रेषयासंबंधानामनियमादितिभावः ॥ ६३ ॥ ६४ ॥ ६५ ॥ ६६ ॥

॥ ६७ ॥ ६८ ॥ ६९ ॥ पावनइति ॥ पूर्वसंध्यांबुजंप्रभातसंध्यायामंबुजंतद्वदर्धप्रबुद्धःमौर्ख्यात् अत्यंताभावात् अतिगतःअतिक्रांतः अनाप्तपदःअप्राप्तब्रह्मपदनिष्ठः ॥ ७० ॥ ततइतिश्लोकद्वयंवाक्यम् । कलितकारणे कलितानिप्रेरितानिजन्मादिकारणानियेनतस्मिन् ॥ ७१ ॥ कलनापक्षिणीनीडं कलनाअहंकृतिःसैवपक्षिणीतस्यानीडंस्थानम् । वैवधिकः विवधःभारयष्टिःतद्वाहकः ॥७२॥ प्रशांतेति ॥

मुनिर्दीर्घतपानामतपोमूर्तिरिवास्थितः ॥ मुनेर्बभूवतुस्तस्यपुत्रौद्वाविंदुसुंदरौ ॥ ६७ ॥ पुण्यपावननामानौद्वौकचाविववाक्पतेः ॥ सताभ्यांसहपुत्राभ्यांचिरकालमुवासह ॥ ६८ ॥ अथकालेतयोस्तस्यपुत्रयोर्ज्ञानवानभूत् ॥ पुण्यनामातयोर्ज्येष्ठोगुणज्येष्ठश्चराघव ॥ ६९ ॥ पावनोऽर्धप्रबुद्धोऽभूत्पूर्वसंध्यांबुजंयथा ॥ मौर्ख्यादतिगतोऽनाप्तपदोदोलामिवास्थितः ॥ ७० ॥ ततोवहत्यकलितेकालेकलितकारणे ॥ रतिमुत्सृज्यसंसाराज्जराजर्जरजीवितः ॥ ७१ ॥ कलनापक्षिणीनीडंदेहंदीर्घतपामुनिः ॥ जहौगिरिगुहागेहेभारंवैवधिकोयथा ॥ ७२ ॥ प्रशांतकलनारंभंचेत्यमुक्तचिदास्पदम् ॥ पदंजगामनीरागंपुष्पगंधइवांबरम् ॥ ७३ ॥ पितर्युपरतेतस्मिन्नौर्ध्वदेहिककर्मणि ॥ पुण्यएवस्थितोऽव्यग्रःपावनोदुःखमाययौ ॥ ७४ ॥ शोकोपहतचित्तोऽसौभ्रमन्कानननवीथिषु ॥ ज्यायांसमनवेक्ष्यैवपावनोविललापह ॥ ७५ ॥

प्रशांतकलनारंभं कलनाबंधहेतवःसंकल्पादयः प्रशांतःकलनानामारंभोयस्मिंस्तत् । चेत्यमुक्तचिदास्पदं चेत्यमुक्तायाश्चितआस्पदंप्रतिष्ठारूपं नीरागंपदंरागादिरहितंकैवल्यं जगाम पुष्पगंधोऽम्बरमिव । पुष्पगंधोहिमुकुलबंधान्निर्गतःअंबरंव्याप्नोति ॥ ७३ ॥ ७४ ॥ ७५ ॥

॥ ७६ ॥ ७७ ॥ ७८ ॥ ७९ ॥ ८० ॥ अज्ञानेति ॥ अज्ञानमेवविस्तीर्णोमरुदेशःतत्रस्ववासनातापमरीचिवारि स्ववासनैवतापःआ तपःतेनकल्पितंमरीचिरूपंवारिएतज्जगच्छुभाशुभस्पंदमयैस्तरंगैरनंतरूपंसत्परिस्फुरति ॥ ८१ ॥ ८२ ॥ बंधुत्वइति ॥ विषामृतदशेव तत्र



अथौर्ध्वदैहिकंकृत्वापितुःपरमधार्मिकः ॥ आययौविपिनेपुण्यःपावनंशोकलालसम् ॥ ७६ ॥ पुण्यउवाच ॥ किंपुत्रदृढतांशोकंनयस्यांध्यैककारणम् ॥ पितातवमहाप्राज्ञगतःप्रज्ञावतांवरः ॥ ७७ ॥ स्वामेवपरमामात्मपदवींमोक्षनामिकाम् ॥ स्वभावमभिसंपन्नेकिंपितर्यनुशोचसि ॥ ७८ ॥ मातापितृसहस्राणिसमतीतानितेसुत ॥ पुत्रबांधववृंदानिजंतोर्जन्मनिजन्मनि ॥ ७९ ॥ शोचनीयायदिस्नेहान्मातापितृसुताःसुत ॥ तदतीतानशोच्यंतेकिमजस्रंसह स्रशः ॥ ८० ॥ अज्ञानविस्तीर्णमरौविलोलंशुभाशुभस्पंदमयैस्तरंगैः ॥ स्ववासनातापमरीचिवारिपरिस्फुरत्येतदनंतरूपम् ॥ ८१ ॥ बंधुमित्रसुतस्नेहद्वेषमोहदशामयः ॥ स्वसंज्ञामात्रकेणैवप्रपंचोऽयंवितन्यते ॥ ८२ ॥ बंधुत्वेभावितोबंधुःपरत्वेभावितःपरः ॥ विषामृतदशेवेह स्थितिर्भावनिबंधिनी ॥ ८३ ॥ एकत्वेविद्यमानस्यसर्वगस्यकिलात्मनः ॥ अयंबंधुःपरश्चायमित्येषाकलनाकुतः ॥ ८४ ॥



परत्वापरत्वभावनारूपास्थितिर्विषदशेव बंधुत्वभावनारूपात्वमृतदशेव भावनिबंधिनी भावोभावनातयानिबध्यतइत्यर्थः ॥ ८३ ॥ एकत्वइति ॥ विद्यमानस्यपरमार्थस्यसतःसर्वगस्यात्मनएकत्वेअद्वितीयत्वेसति अयंबंधुरयंपरइत्यसौकलनाकल्पनाकुतः ॥ ८४ ॥

रक्तेति ॥ यद्यपिनायंदेहएवात्मा रक्तमांसादिसंघातरूपत्वात् तथापितथाभूताद्देहादेवारभ्यको ऽहंस्यामितिविचारयेत्यर्थः ॥ ८५ ॥ आ स्तामयंविचारप्रयासः इयमिहपारमार्थिकीदृष्टिरालंब्यतामित्याह ॥ दृष्ट्येति ॥ पारमार्थिक्यापर्यालोचनप्रवणयातुदृष्ट्या परामृश्यमानेत्व मितिनकश्चित्पदार्थः अहमित्यपिनकश्चित् किंतर्हिमिथ्याज्ञानमेवेदं पुण्यइतिपावनइतिच वल्गतिस्फुरति । पुण्यो ऽहंपावनस्त्वमितिमिथ्या

रक्तमांसादिसंघाताद्देहादेवास्थिपंजरात् ॥ को ऽहंस्यामितिचित्तेनस्वयंपुत्रविचारय ॥ ८५ ॥ दृष्ट्या तुपारमार्थिक्यानकश्चित्त्वंनचाप्यहम् ॥ मिथ्याज्ञानमिदंपुण्यःपावनश्चेतिवल्गति ॥ ८६ ॥ बभूवुस्ते सुपुण्यासुस्थलीषुमृगयोनिषु ॥ बहवोबंधवोमार्गास्तान्कथंनानुशोचसि ॥ ८७ ॥ बभूवुस्तेमहाभ्रे षुशिखरेषुमहीभृताम् ॥ बहवोबांधवाःसिंहाःकिंतानपिनशोचसि ॥ ८८ ॥ बभूवाथदशार्णेषुकपि लोवनवानरः ॥ राजपुत्रस्तुषारेषुपुंड्रेषुवनवायसः ॥ ८९ ॥ हैहयेषुचमातंगस्त्रिगर्तेष्वथगर्दभः ॥ श ल्वेषुसरमापुत्रःपतत्रीसरलद्रुमे ॥ ९० ॥ एतास्वन्यासुचान्यासुबह्वीषुजनयोनिषु ॥ जातो ऽसि जंबूद्वीपे ऽस्मिन्पुराशतसहस्रशः ॥ ९१ ॥ अनंताःपितरोयांतियांत्यनंताश्चमातरः ॥ इहसंसारिणां पुंसांवनेपादपपर्णवत् ॥ ९२ ॥ भावाभावविनिर्मुक्तंजरामरणवर्जितम् ॥ संस्मरात्मानमव्यग्रो माविमूढमतिर्भव ॥ ९३ ॥ सर्वैषणामयकलंकविवर्जितेनस्वच्छात्मभावकलितेनहृदब्जमध्ये ॥ पुत्रा त्मनात्मनिमहामतिनामुनैवसंत्यज्यसंभ्रममलंपरितोषमेहि ॥ ९४ ॥

ज्ञानकल्पितत्वाद्भ्रांतिरेवेत्यर्थः ॥ ८६ ॥ बभूवुरिति ॥ मार्गामृगसंबंधिनः ॥ ८७ ॥ ८८ ॥ ८९ ॥ ९० ॥ ९१ ॥ ९२ ॥ ९३ ॥ सर्वेति ॥ एषणाःपुत्रकलत्रादिविषयेच्छाः तन्मयकलंकवर्जितेनस्वच्छात्मभावकलितेनस्वच्छभावयुक्तेनआत्मनांतःकरणेनसंभ्रमंसंत्यज्य

आत्मन्येवपरितोषमेहीत्यन्वयः ॥ ९४ ॥ एवमिति ॥ प्रभाते भूतलंकर्तृ । प्राकाश्यंप्रकाशमानत्वम् ॥ ९५ ॥ उभाविति ॥ ज्ञानविज्ञानपारगौज्ञानविज्ञानेपरोक्षापरोक्षब्रह्मज्ञाने ॥ ९६ ॥ एवमिति ॥ प्राग्भुक्तदेहानांपूर्वजन्मानुभूतदेहसंबंधिन्यो जनबंधुजाःअनंताआशाः किंगृह्यतेइतिबुद्धिप्रदानायानुजंपृच्छति किमत्रयुक्तमाशायाग्रहणंत्यागोवेति त्यागएवयुक्तइतिभावः ॥ ९७ ॥ चिंतनेति ॥ कथमिष्टसिद्धि

वसिष्ठउवाच ॥ ॥ एवंप्रबोधितस्तेनतदापुण्येनपावनः ॥ प्रबोधमापप्राकाश्यंप्रभातइवभूतलम् ॥ ९५ ॥ उभावपिततःसिद्धौज्ञानविज्ञानपारगौ ॥ विचेरतुर्वनेतस्मिन्यावदित्थमनिंदितौ ॥ ९६ ॥ एवंप्राग्भुक्तदेहानामनंताजनबंधुजाः ॥ किमाशागृह्यतेताभ्यःकिंवासंत्यज्यतेऽनघ ॥ ९७ ॥ चिंतनेनैधतेचिंताग्निर्विधनेनेवपावकः ॥ नश्यत्यचिंतनेनैवविनेंधनमिवानलः ॥ ९८ ॥ ध्येयत्यागरथारूढःकरुणोदारयादृशा ॥ लोकमालोकयन्दीनमातिष्ठोत्तिष्ठराघव ॥ ९९ ॥ एषाब्राह्मीस्थितिःस्वस्थानिःकामाविगतामया ॥ एनांप्राप्यमहाबाहोविमूढोऽपिनमुह्यति ॥ १०० ॥ एकंविवेकंसुहृदमेकांप्रौढसखींधियम् ॥ आदायविहरन्नेवंसंकल्पेषुनमुह्यति ॥ १ ॥ विनिवारितसर्वार्थादपहस्तितबांधवात् ॥ नस्वधैर्यादृतेकिंचिदभ्युद्धरतिसंकटात् ॥ २ ॥

रितिविचारश्चिंता दृष्टार्थानांपुनःपुनरनुस्मरणंचिंतनम् ॥ ९८ ॥ ध्येयेति ॥ आतिष्ठसुखमास्व उत्तिष्ठजीवन्मुक्त्यर्थंउद्यमंकुरु ॥ ९९ ॥ ॥ १०० ॥ १ ॥ विनिवारितेति ॥ विनिवारिताःसर्वेऽर्थाःसांसारिकप्रयोजनानियेनतस्मात् अपहस्तिताहस्तेनापसारिता बांधवायेनतथाभूतात्स्वधैर्यादृते स्वस्यविवेकवैराग्यधैर्यंविना किंचिदपिसंकटात्संसारान्नोद्धरतीत्यन्वयः । स्वधैर्यमेवसंकटादुद्धरतीत्युक्तम् ॥ २ ॥

इदानींधैर्यसंपादनप्रकारमाह । वैराग्येणेति ॥ आपद्विघातार्थंसंसारनिवृत्तये वैराग्यादिभिःसाधनैः स्वयमेवमनउन्नमयेत् धैर्ययुक्तंकुर्यादित्यर्थः ॥ ३ ॥ नेति ॥ महत्त्वोपबृंहितान्महत्त्वादिगुणैरुन्नतीकृताच्चित्ताद्यत्फलंकैवल्यरूपमासाद्यते तत्त्रिभुवनैश्वर्यादिभिरपिनासाद्यतइत्यन्वयः ॥ ४ ॥ पूर्णइति ॥ मनसिपूर्णेसंतुष्टेसतिसर्वंजगत्सुधाद्रवैरमृतरसैःपूर्णमेवसुखायजायतइत्यर्थः ॥ ५ ॥ कथंमनसःपूर्णतेत्यत्राह । वैराग्यादिति ॥ वैराग्यादेवमनःपूर्णतामेति । आशावशानुगंतुनकदाचित्पूर्णतामेति । यदाहपाराशरः । नजातुकामःकामा

वैराग्येणाथशास्त्रेणमहत्त्वादिगुणैरपि ॥ यत्नेनापद्विघातार्थंस्वमेवोन्नमयेन्मनः ॥ ३ ॥ नत
त्त्रिभुवनैश्वर्यान्नकोशाद्रत्नधारिणः ॥ फलमासाद्यतेचित्ताद्यन्महत्त्वोपबृंहितात् ॥ ४ ॥ पू
र्णेमनसिसंपूर्णंजगत्सर्वंसुधाद्रवैः ॥ उपानद्गूढपादस्यननुचर्मास्तृतैवभूः ॥ ५ ॥ वैराग्यात्पूर्ण
तामेतिमनोनाशावशानुगम् ॥ आशयारिक्ततामेतिशरदीवसरोजलम् ॥ ६ ॥ हृदयंशून्यता
मेतिप्रकटीकृतकोटरम् ॥ अगस्त्यपीतार्णववदाशाविवशचेतसाम् ॥ ७ ॥ नतथाभातिपूर्णे
दुर्नपूर्णःक्षीरसागरः ॥ नलक्ष्मीवदनंकांतंस्पृहाहीनंयथामनः ॥ ८ ॥ यथाभ्रलेखाशशिनंसु
धालेपंमषीयथा ॥ दूषयत्येवमेवांतर्नरमाशापिशाचिका ॥९॥ प्रशमितसकलैषणोमहात्माभव
भवबंधमपास्यमुक्तचित्तः ॥ मनसिनिगडरज्जवःकदाशाःपरिगलितासुचतासुकोनमुक्तः ॥१०॥

नामुपभोगेनशाम्यति । हविषाकृष्णवर्त्मेवभूयएवाभिवर्धते । इति ॥ ६ ॥ हृदयस्यप्रकटीकृतकोटरत्वंनामतृष्णातिशयप्रकाशनम् ॥ ७ ॥ नेति ॥ पूर्णेंदुप्रभृतीनांक्षयवृद्धिसंभवादनित्याशोभा निस्पृहस्यतुमनसःकदाचिदपिहर्षविषादाभावान्नित्याशोभेतितात्पर्यार्थः ॥ ८ ॥ यथेति ॥ अभ्रलेखामेघपंक्तिः । सुधालेपंचूर्णादिद्रव्यलेपम् ॥ ९ ॥ प्रशमितेति ॥ प्रशमितसकलैषणःसन्भवबंधमपास्यमुक्तचित्तोभव । य

तःकारणान्मनसिवर्तमानाः कदाशाःपुत्रकलत्रैषणादिरूपाःकुत्सिताआशाः निगडरज्जवःशृंखलारज्जुवद्बंधनहेतवः अतःकारणात्तासुपरिग
लितासुकोनमुक्तः सर्वोऽपिमुच्यतइत्यर्थः ॥ १० ॥ इतिश्रीसंसारतरणिनाम्निवासिष्ठविवरणउपशमप्रकरणेपुण्यपावनोपाख्यानंनामविंशः
सर्गः ॥ २० ॥ पूर्वमतीतानेकजन्मानुस्मरणद्वारास्वरूपज्ञानेनचित्तोपशांतिरुक्ता इदानींपुण्यप्रकर्षात्कुत्रचिद्वैषयिकमपिसुखं चित्तोप





इतिश्रीवाल्मीकीयेमोक्षोपायउपशमप्रकरणेपुण्यपावनोपाख्यानंनामविंशःसर्गः ॥ २० ॥ व
सिष्ठउवाच ॥ अथवारघुवंशाख्यनभःपूर्णनिशाकर ॥ बलिवद्बुद्धिभेदेनज्ञानमासादयामलम्
॥ १ ॥ श्रीरामउवाच ॥ बलिवज्ज्ञानसंप्राप्तिंपुनर्मद्बोधवृद्धये ॥ विभोकथयखिद्यंतेसंतोनाव
नतंप्रति ॥ २ ॥ श्रीवासिष्ठउवाच ॥ अस्त्यस्मिन्जगतःकोशेकस्मिंश्चिद्दिङ्निकुंजके ॥ पाताल
मितिविख्यातोलोकोभूमेरधःस्थितः ॥ ३ ॥ तस्मिन्नसुरदोःस्तंभधार्यमाणमहाभरे ॥ बभूव
दानवोराजाविरोचनसुतोबलिः ॥ ४ ॥ लीलानिर्जितनिःशेषभुवनाभोगभूषणः ॥ दशको
टीःसवर्षाणांदैत्यराज्यंचकारह ॥ ५ ॥ अथगच्छत्स्वनल्पेषुयुगेष्वावर्तवृत्तिषु ॥ सुरासुरम
हौघेषुप्रोत्पतत्सुपतत्सुच ॥ ६ ॥ अजस्रमुपभुक्तेषुत्रैलोक्योदरवर्तिषु ॥ भोगेष्वभजदु
द्वेगंबलिर्दानवनायकः ॥ ७ ॥



शांतयेभवतीतिबल्युपाख्यानेननिरूप्यते । तत्रचिरोपभोगाद्भोगेष्वरुचिरुत्पन्नेत्याह । अथेत्यादिनाश्लोकद्वयेन ॥ १ ॥ २ ॥ ३ ॥
॥ ४ ॥ ५ ॥ आवर्तवृत्तिषु । स्यादावर्तोऽभसांभ्रमः । तस्यवृत्तिरिववृत्तिर्येषांतेषु ॥ ६ ॥ उद्वेगमरुचिम् ॥ ७ ॥

॥ ८ ॥ ९ ॥ पुनरिति ॥ लज्जायै महतामुच्छिष्टस्यपुनर्भोगानर्हत्वादितिभावः ॥ १० ॥ ११ ॥ पुनरिति ॥ पुनःपुनरहंमन्येइतियेषां पुनःपुनःप्रवृत्तिः इयंप्राज्ञस्यविडंबनेतिअहंमन्येइत्यन्वयः ॥ १२ ॥ कृतयेति ॥ कृतकार्ययाकृतप्रयोजनयाप्यनयाक्रिययानित्यंकृतयाता दृशःकोऽर्थःस्यात् येनार्थेनपुनःकर्मनविद्यते कृतकृत्यताहेतुःकापिक्रियानास्तीत्यर्थः ॥१३॥ भोगादिति ॥ भोगादृतेभोगरूपं विषयसुखं

एकदाचिंतयामासप्रासादशिखरस्थितः ॥ महतामभराज्येनत्रैलोक्याद्भुतकारिणा ॥ ८ ॥ किंवाभवतिभुक्तेनभूरिभोगातिभारिणा ॥ आपातमात्रमधुरमावश्यकपरिक्षयम् ॥ भोगोप भोगमात्रंमेकिंनामेदंसुखावहम् ॥ ९ ॥ पुनरालिंग्यतेकांतापुनरेवचभुज्यते ॥ सेयंशिशुजन क्रीडालज्जायैमहतामिह ॥ १० ॥ तमेवभुक्तविरसंव्यापारौघंपुनःपुनः ॥ दिवसेदिवसेकुर्व न्प्राज्ञःकस्मान्नलज्जते ॥ ११ ॥ पुनर्दिनंपुनारात्रिःपुनःकार्यपरंपरा ॥ पुनःपुनरहंमन्येप्रा ज्ञस्येयंविडंबना ॥ १२ ॥ कृतयाप्यनयानित्यंक्रिययाकृतकार्यया ॥ कोऽर्थःस्यात्तादृशोयेन पुनःकर्मनविद्यते ॥ १३ ॥ भोगादृतेकिमन्यत्तत्स्याद्द्रव्यमविनाशियत् ॥ एतत्संचिंतयाम्या शुदध्यौमत्वेत्यसौबलिः ॥ १४ ॥ अथाभ्युवाचासुरराट्आःसंस्मृतमितिक्षणात् ॥ स्वात्मन्ये वमनस्यर्थंसभ्रूभंगंनिवेशयन् ॥ १५ ॥

मुक्त्वा यदन्यदविनाशिद्रव्यंतत्किंस्यादितिएतद्वस्तुसंचिंतयामीतिमत्वानिश्चित्य बलिर्दध्यावित्यन्वयः ॥ १४ ॥ अथेति ॥ अथानंतरमसु रराट्बलिर्मनसिविचारितमर्थं सभ्रूभंगंस्वात्मन्येवस्वबुद्धावेवनिवेशयन्स्थापयन्क्षणात्क्षणादुपरि आःसंस्मृतमित्यभ्युवाच। सभ्रूभंगमितिवि

चारदृष्ट्यभिनयः । आः इति स्मृतिद्योतकमव्ययम् ॥ १५ ॥ स्मृतमनुवदति । पुरेत्यादिना ॥ दृष्टलोकपरावरः । परंपर्यवसानहेतुः अवरमा दिकारणम् ॥ १६ ॥ स्वप्रश्नप्रकारमनुवदति । पितरिति ॥ हेपितः सकलदुःखानांसुखानांचवैषयिकाणांसीमांतःपरमावधिःकोऽसावुच्य ताम् ॥ १७ ॥ सर्वभ्रमाणांशांतिमेवप्रपंचयति । क्वेतिश्लोकद्वयंवाक्यम् । यत्रवस्तुनिविरागरहितंअरुचिविनिर्मुक्तंचिरंविश्रमणंविश्रां

पुराकिलेहभगवान्पृष्टोऽभूत्सविरोचनः ॥ पितामयात्मतत्त्वज्ञोदृष्टलोकपरावरः ॥ १६ ॥ पि तःसकलदुःखानांसुखानांचमहामते ॥ यत्रसर्वेभ्रमाःशांताःकोऽसौसीमांतउच्यताम् ॥ १७ ॥ क्वोपशांतोमनोमोहःक्वातीताःसकलैषणाः ॥ विरागरहितंकुत्रतातविश्रमणंचिरम् ॥ १८ ॥ यत्रातिविततानंदसुंदरंकिंचिदेवमे ॥ तादृक्कथयतत्रस्थश्चिरंविश्रांतिमेम्यहम् ॥ १९ ॥ म त्पितोवाच ॥ अस्तिपुत्रातिविततोदेशोविपुलकोटरः ॥ त्रैलोक्यानांसहस्राणियत्रमांतिबहू न्यपि ॥ २० ॥ यत्रपृथ्वीननाकाशंसागरानचनाद्रयः ॥ नवनानिनतीर्थानिननद्योनसरांसिच ॥ २१ ॥ एकएवास्तिसुमहांस्तत्रराजामहाद्युतिः ॥ सर्वकृत्सर्वगःसर्वःसचतूष्णींव्यवस्थितः ॥ २२ ॥ तेनसंकल्पितोमंत्रीसर्वतोमंत्रणोन्मुखम् ॥ अघटंघटयत्याशुघटंविघटयत्यलम् ॥ २३ ॥



तिसुखंसंभवति यत्रवस्तुनिमेमदीयंरूपंअतिविततानंदसुंदरंसत्किंचिदेवअव्यपदेश्यमेवभवति । तादृग्वस्तुकथय । तत्रस्थोऽहंचिरंविश्रां तिमेमीत्यन्वयः ॥ १८ ॥ १९ ॥ स्वपितुरुत्तरमनुभाषते । मत्पितेत्यादिना ॥ देशोमोक्षःराजाआत्मामंत्रीमनइति ॥ २० ॥ २१ ॥ बलिप्रश्नानंतरंविरोचनएववक्ष्यति ॥ २२ ॥ तेनेतिश्लोकद्वयंवाक्यम् । तेनराज्ञासंकल्पितःसऐक्षतलोकान्नुसृजाइतीति सिसृक्षामा

त्रकल्पितोमंत्रीमंत्रणोन्मुखं विचारपूर्वकंतत्सर्वराजकार्यमघटंदुर्घटमपिघटयति घटंसुघटितमपिकार्यमनभिमतंचेद्विघटयतिनाशयतीत्यर्थः ॥ २३ ॥ किंचिदपिभोक्तुंनशक्नोति किंचननचजानाति मनसःअचेतनत्वादितिभावः ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥

भोक्तुंनकिंचिच्छक्नोतिनचजानातिकिंचन ॥ राजार्थंकेवलंसर्वंकरोत्यविरतोदयम् ॥ २४ ॥ सएवसर्वकार्यैककर्तातस्यमहीपतेः ॥ राजाकेवलमेकांतेस्वस्थएवावतिष्ठति ॥ २५ ॥ बलिरुवाच ॥ आधिव्याधिविनिर्मुक्तःकःसदेशोमहामते ॥ कथमासाद्यतेवापिकेनवाधिगतःप्रभो ॥ २६ ॥ कःसतादृग्विधोमंत्रीराजावापिमहाबलः ॥ हेलालूनजगज्जालैर्योऽस्माभिरपिनोजितः ॥ २७ ॥ विरोचनउवाच ॥ सतत्रमंत्रीबलवान्देवासुरगणैःस्तुत ॥ समेतैर्लक्षगुणितैरपिनाक्रम्यतेमनाक् ॥ २८ ॥ तत्रासिमुशलप्रासवज्रचक्रगदादयः ॥ हेतयःकुंठतांयांतिदृषदीवोत्पलाहतिः ॥ २९ ॥ समंत्रीकेवलंतत्रतेनैवप्रभुणायदि ॥ जीयतेतत्सुजेयोऽसावन्यथात्वचलाचलः ॥ ३० ॥ पुत्रयुक्त्यागृहीतोऽसौक्षणादायातिवश्यताम् ॥ युक्तिंविनादहत्येषआशीविषइवोद्धतः ॥ ३१ ॥ शृणुयःपुत्रदेशोऽसौपूर्वंप्रकटयामिते ॥ देशनाम्नामयोक्तस्तेमोक्षःसकलदुःखहा ॥ ३२ ॥ राजातुतत्रभगवानात्मासर्वपदातिगः ॥ तेनमंत्रीकृतःप्राज्ञोमनोनाममहामते ॥ ३३ ॥ विषयान्प्रतिभोःपुत्रसर्वानेवहिसर्वथा ॥ अनास्थापरमाह्येषासायुक्तिर्मनसोजये ॥ ३४ ॥

॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥

॥ ३५ ॥ चित्तजयक्रमं अधिकारिभेदेनत्रिभिःश्लोकैराह । चित्तस्येति ॥ चित्तस्यव्यवहारकालंचतुर्धाविभज्यसत्क्रमेज्ञानाभ्यासेअव्युत्पन्नस्याशिक्षितस्यचित्तस्यप्रथमंभोगैर्विषयभोगैर्द्वौभागौपूरयेत्कालद्वयंनयेदित्यर्थः ॥ शास्त्रेणअध्यात्मशास्त्रेणैकंभागंपूरयेत् । गुरुशुश्रूषयाचतुर्थभागंपूरयेत् ॥ ३६ ॥ किंचिदिति ॥ किंचिद्व्युत्पत्तियुक्तस्यभोगैरेकंकालंगुरुशुश्रूषयाकालद्वयंशास्त्रार्थचिंतयाचतुर्थकालंनयेदित्यर्थः ॥ ३७ ॥ व्युत्पत्तिमिति ॥ सम्यग्व्युत्पन्नस्यचित्तस्यद्वौव्यवहारकालौ शास्त्रवैराग्यैरध्यात्मशास्त्रविचारैर्विषयाणांहेयत्वविचारैश्च

एषैवपरमायुक्तिरनयैवमहामदः ॥ स्वमनोमत्तमातंगोद्रागित्येवविदम्यते ॥ ३५ ॥ चित्तस्यभोगैर्द्वौभागौशास्त्रेणैकंप्रपूरयेत् ॥ गुरुशुश्रूषयाभागमव्युत्पन्नस्यसत्क्रमे ॥ ३६ ॥ किंचिद्व्युत्पत्तियुक्तस्यभागंभोगैःप्रपूरयेत् ॥ गुरुशुश्रूषयाभागौभागंशास्त्रार्थचिंतया ॥ ३७ ॥ व्युत्पत्तिमनुयातस्यपूरयेच्चेतसोऽन्वहम् ॥ द्वौभागौशास्त्रवैराग्यैर्द्वौध्यानगुरुपूजया ॥ ३८ ॥ प्रज्ञाविचारवशतः शममेवसदासुत ॥ आत्मावलोकनंतृष्णासंत्यागंचसमाहरेत् ॥ ३९ ॥ विचारोभोगगर्हातोविचाराद्भोगगर्हणम् ॥ अन्योन्यमेतेपूर्यंतेसमुद्रजलदाविव ॥ ४० ॥

द्वौचकालौध्यानसहितयागुरुपूजयाच पूरयेत् ॥ ३८ ॥ प्रज्ञेति ॥ इत्थंप्रज्ञाविचारवशतः प्रज्ञावशाद्विचारवशाच्च शमंचित्तोपशमंतृष्णायाःसंत्यागमात्मावलोकनंच समाहरेत्संपादयेत् ॥ ३९ ॥ विचारइति ॥ भोगगर्हातःविषयसुखानांदोषदर्शनात्पुरुषार्थविचारःपूर्यते पुरुषार्थविचाराच्चभोगानांगर्हणं अपुरुषार्थत्वात्कुत्सितार्थत्वंच पूर्यतइत्येवमेते विचारभोगगर्हणे अन्योन्यंपूर्यंते यथासमुद्रोजलदाद्वृष्टिद्वारापूर्यंते समुद्रोदकाच्चजलदास्तद्वदित्यर्थः ॥ ४० ॥

देशेति ॥ अल्पविगर्हणेनस्वल्पदोषेण देशक्रमेणदेशाचारक्रमेणधनमर्जय । तेनचधनेनमानपूर्वंसत्कारपूर्वकंसाधुजनमर्जय । तत्संगमोत्थ विषयाद्यवहेलनेन साधुसंगमसंजातविषयवैराग्येण सम्यग्विचारविभवेनचतवआत्मलाभोभविष्यतीत्यन्वयः ॥ ४१ ॥ एतदिति ॥ पित्रामेपूर्वंकथितमेतत् । इदानींसंस्मृतमित्यन्वयः ॥ ४२ ॥ दिष्ट्येत्यव्ययमानंदे ॥ ४३ ॥ अहोइति ॥ शमभूःशमदशा ॥ ४४ ॥ कोऽह

देशक्रमेणधनमल्पविगर्हणेनतेनांगसाधुजनमर्जयमानपूर्वम् ॥ तत्संगमोत्थविषयाद्यवहेलनेनसम्यग्विचारविभवेनतवात्मलाभः ॥ ४१ ॥ बलिरुवाच ॥ एतन्मेकथितंपूर्वंपित्राचारुविचारिणा ॥ इदानींसंस्मृतंदिष्ट्यासंप्रबोधमहंगतः ॥ ४२ ॥ अद्येयंममसंजाताभोगान्प्रत्यरतिःस्फुटम् ॥ दिष्ट्याशमसुखंस्वस्थंविशाम्यमृतशीतलम् ॥ ४३ ॥ अहोनुखलुरम्येयंशमभूःशीतलांतरा ॥ सर्वाएवसमंयांतिसुखदुःखदृशःशमे ॥ ४४ ॥ कोऽहंतावदयंकिंस्यादात्मेत्यात्मावलोकिनम् ॥ पृच्छाम्युशनसंनाथंनूनमज्ञानशांतये ॥ ४५ ॥ वसिष्ठउवाच ॥ इतिसंचिंत्यबलवान्बलिरामीलितेक्षणः ॥ दध्यौकमलपत्राक्षःशुक्रमाकाशमंदिरम् ॥ ४६ ॥ अथसर्वगतानंताचिदात्माभार्गवःप्रभुः ॥ आनिनायसदेहंस्वंरत्नवातायनंबलेः ॥ ४७ ॥ अथरत्नार्घदानेनमंदारकुसुमोत्करैः ॥ पादाभिवंदनेनैनंपूजयामासभार्गवम् ॥ ४८ ॥

मिति ॥ आत्मावलोकिनमुशनसंनाथंगुरुं कोऽहंअयमात्माकिंस्यादित्यहंशब्दार्थमात्मस्वरूपंचपृच्छामीत्यन्वयः ॥ ४५ ॥ ४६ ॥ अथेति ॥ अथसभार्गवःस्वंदेहंबलेरवस्थानप्रदेशभूतंरत्नवातायनमानिनाय । तत्राजगामेत्यर्थः ॥ ४७ ॥ ४८ ॥

॥ १९ ॥

बलिरुवाच ॥ भार्गवत्वत्प्रसादोत्थाप्रतिभेयंपुरस्तव ॥ नियोजयतिमांवक्तुंकार्यंकर्तुमिवार्कभाः ॥ ४९ ॥ किमिहास्तिकियन्मात्रमिदंकिमयमेववा ॥ कोऽहंकस्त्वंकिमेतेवालोकाइतिवदाशुमे ॥ ५० ॥ शुक्रउवाच ॥ बहुनात्रकिमुक्तेनखंगंतुंयत्नवानहम् ॥ सर्वदानवराजेंद्रसारंसंक्षेपतः शृणु ॥ ५१ ॥ चिदिहास्तिहिचिन्मात्रमिदंचिन्मयमेवच ॥ चित्त्वंचिदहमेतेचलोकाश्चिदिति संग्रहः ॥ ५२ ॥ भव्योऽसिचेत्तदेतस्मात्सर्वमाप्नोषिनिश्चयात् ॥ नोचेत्तद्बहुपिप्रोक्तंत्वयिभस्मनिहूयते ॥ ५३ ॥ चिच्चेत्यकलिताबंधस्तन्मुक्तामुक्तिरुच्यते ॥ चिदचेत्याकिलात्मेतिसर्वसिद्धांतसंग्रहः ॥ ५४ ॥ एवंनिश्चयमादायविलोकयधियेद्धया ॥ स्वयमेवात्मनात्मानमनंतपदमाप्स्यसि ॥ ५५ ॥ खंव्रजाम्यहमत्रैतेमुनयःसप्तसंगताः ॥ केनापिसुरकार्येणवस्तव्यंतत्रवैमया ॥ ५६ ॥ वसिष्ठउवाच ॥ इत्युक्त्वाभगवाञ्छुक्रआरुरोहनभस्तलम् ॥ बलिस्तुचिंतयामासचिदात्मकमिदंजगत् ॥ ५७ ॥ बलिरुवाच ॥ युक्तमुक्तंभगवताचिदेवेदंजगत्त्रयम् ॥ चिदहंचिदिमेलोकाचिदाशाश्चिदियंक्रिया ॥ ५८ ॥

॥ १९ ॥

चेत्यकलिताचिदेवबंधउच्यते चेत्यंमुक्त्वातुचिन्मुक्तिरिति । अचेत्याचेत्यासंस्पृष्टाचिदेवात्मेतिसंग्रहः ॥ ५४ ॥ ५५ ॥ ५६ ॥ ५७ ॥ ५८ ॥

दृश्येति ॥ दृश्यदर्शननिर्मुक्तः दृश्यानिभूतानिभौतिकानिच दर्शनानिज्ञानसाधनानि तेभ्योनिर्मुक्तोव्यतिरिक्तः अतश्चकेवलामलरूप वान् नित्योदितोनित्यप्रकाशः निराभासोभासकांतरनिरपेक्षः द्रष्टासर्वसाक्षीपरमेश्वरोऽस्मीति ॥ ५९ ॥ चेत्येति ॥ चेत्यनिर्मुक्तचिद्रूपं वि शुद्धचिदात्मकंविष्वगंतर्बहिश्चसर्वतोविश्वावपूरकं संशांतसर्वसंवेद्यं उपरतसर्वविषयवासनं महत्परिपूर्णं संविन्मात्रमहमस्मि ॥ ६० ॥

दृश्यदर्शननिर्मुक्तःकेवलामलरूपवान् ॥ नित्योदितोनिराभासोद्रष्टास्मिपरमेश्वरः ॥ ५९ ॥ चेत्यनिर्मुक्तचिद्रूपंविष्वग्विश्वावपूरकम् ॥ संशांतसर्वसंवेद्यंसंविन्मात्रमहंमहत् ॥ ६० ॥ इतिसं चिंतयन्नेवबलिःपरमकोविदः ॥ ॐकारादर्धमात्रार्थंभावयन्ध्यानमास्थितः ॥ ६१ ॥ संशांत सर्वसंकल्पःप्रशांतकलनागणः ॥ निःशंकमतिदूरास्तचेत्यचिंतकचिंतनः ॥ ६२ ॥ ध्यातृध्ये यध्यानहीनोनिर्मनाःशान्तवासनः ॥ बभूवावातदीपाभोबलिःप्राप्तमहापदः ॥ ६३ ॥ प्रश मितैषणयापरिपूर्णयामननदोषदशोज्झितयैतया ॥ बलिरराजतनिर्मलसत्तयाविघनमच्छत येवशरन्नभः ॥ ६४ ॥ वसिष्ठउवाच ॥ अथतेदानवास्तत्रबलेरनुचरास्तदा ॥ तद्गृहंस्फाटि कंसौधमुच्चैरारुरुहुःक्षणात् ॥ ६५ ॥ निर्विकल्पसमाधानेस्थितवाचिरमुदारधीः ॥ व्यबुध्यत बलिस्तत्रपुरस्तेषांमहामते ॥ ६६ ॥

इतीति ॥ ॐकारादर्धमात्रार्थं प्रणवान्निष्कृष्यअर्धमात्रार्थमेवपरब्रह्मरूपंभावयन्ध्यानमास्थितः ॥ ६१ ॥ संशांतेति श्लोकद्वयंवाक्यम् । निःशंकंयथातथाअतिदूरेअस्तंक्षिप्तंचेत्यंचिंतकंचिंतनंचेति त्रयंयेनेत्यनेन बहिर्मुखविक्षेपराहित्यमुक्तम् ॥ ६२ ॥ ६३ ॥ ६४ ॥ ६५ ॥ ६६ ॥

ध्यातृध्यानध्येयहीनइत्यनेनअंतर्मुखोऽपिनविक्षेपइत्याह ॥ अथेति ॥ ध्येयत्यागमयात्मना अहंममतादिवासनात्यागो ध्येयत्यागः तन्म
यस्वरूपेणमनसा । इत्थंभूतोराजकार्याणिसंव्यधात् ॥ ६७ ॥ ६८ ॥ ऊहेति ॥ इष्टसाधनोत्प्रेक्षणमूहः अनिष्टनिरासोत्प्रेक्षणमपोहः
तेषांसहस्राणिपदार्थानांभावाभावशतानिच बलिनापरिदृष्टानितथापिअसौबलिःक्वासमाश्वासं विश्वासमेति नक्वापीत्यर्थः । असक्तएव
राज्यंचकारेतियावत् ॥ ६९ ॥ श्रीरामंप्रतिहितमुपदिशति ॥ धावमानमिति ॥ इहास्मिन्लोकेअमुत्रपरलोकेचधावमानंविषयसुखवांछया

अथवैरोचनिस्तत्रध्येयत्यागमयात्मना ॥ मनसासकलान्येवराजकार्याणिसंव्यधात् ॥ ६७ ॥ आपदं
संपदंदृष्ट्वासमयैवसपश्यति ॥ नास्तमेतिनवोदेतितत्प्रज्ञासुखदुःखयोः ॥ ६८ ॥ ऊहापोहसहस्राणिभा
वाभावशतानिच ॥ बलिनापरिदृष्टानिक्वसमाश्वासमेत्यसौ ॥ ६९ ॥ धावमानमिहामुत्रलुठितंलोकवृ
त्तिषु ॥ संस्थापयनिरुध्यैतन्मनोहृदयकोटरे ॥ ७० ॥ येषुयेषुप्रदेशेषुमनोमज्जतिबालवत् ॥ तेभ्यस्ते
भ्यःसमुद्धृत्यतद्धितत्त्वेनियोजयेत् ॥ ७१ ॥ एवमभ्यसताभ्यासंमनोमत्तमतंगजम् ॥ निबध्यसर्वभावेन
परंश्रेयोऽधिगम्यते ॥ ७२ ॥ इतिश्रीमोक्षोपायउपशमप्रकरणेबल्युपाख्यानंनामएकविंशःसर्गः ॥ २१ ॥
वसिष्ठउवाच ॥ अथेमंपरमंरामविज्ञानाधिगमक्रमम् ॥ शृणुदैत्येश्वरःसिद्धःप्रह्लादःस्वात्मनायथा ॥ १ ॥

वेगेनगच्छत् लोकवृत्तिषुअर्थार्जनादिषुलौकिकव्यापारेषुलुठितमासक्तं एतच्चेतोनिरुध्य विवेकवैराग्यादिभिःनिरुध्य हृदयकोटरेहृत्पुंडरी
केसंस्थापय । आत्मानुसंधानतत्परंकुर्वित्यर्थः ॥ ७० ॥ ७१ ॥ ७२ ॥ इतिश्रीसंसारतरणिनाम्निवासिष्ठविवरणेउपशमप्रकरणेबल्युपा
ख्यानंनामएकविंशःसर्गः ॥ २१ ॥ पूर्वपुण्यप्रकर्षात् वैषयिकमपिसुखंकचिच्चित्तोपशांतयेभवतीत्युक्तम् । इदानीमीश्वरानुग्रहादेवकदाचि
दात्मतत्त्वावबोधोभवतीतिप्रह्लादाख्यानेनप्रतिपाद्यते ॥ तत्रप्रह्लादवृत्तांतंतावत्प्रस्तौति अथेत्यादिना ॥ १ ॥

॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ तत्रवपुषइतिश्लोकद्वयंवाक्यम् । परावरः परेब्रह्मादयोऽप्यवरेअधमाय

हतेत्रिदशवृंदानांहिरण्यकशिपौरिपौ ॥ प्रह्लादश्चिंतयामासशोकसंविग्नमानसः ॥ २ ॥ एते
तातादयःसर्वेविष्णुनासुरसत्तमाः ॥ घातिताःक्षुब्धकल्पांतवातेनेवकुलाचलाः ॥ ३ ॥ अभ्य
स्ताबहवस्तेनमिथःप्रेरितपर्वताः ॥ भीमाःसमरसंरंभाःसममस्मात्पितामहैः ॥ ४ ॥ तासुतास्व
तिघोरासुवितितास्वसुराजिषु ॥ योनभीतइदानींसभयमेष्यतिकाकथा ॥ ५ ॥ तस्मात्तस्याति
वीरस्यहरेराक्रमणेस्फुटम् ॥ मन्येतद्व्यतिरेकेणविद्यतेनप्रतिक्रिया ॥ ६ ॥ सर्वात्मनासर्वधि
यासर्वसंरंभरंहसा ॥ सएवशरणंदेवोगतिरस्तीहनान्यथा ॥ ७ ॥ अस्मान्निमेषादारभ्यनाराय
णमजंसदा ॥ संप्रपन्नोऽस्मिसर्वत्रनारायणमयोह्यहम् ॥ ८ ॥ नमोनारायणायेतिमंत्रःसर्वार्थसा
धकः ॥ नापैतिममहृत्कोशादाकाशादिवमारुतः ॥ ९ ॥ अविष्णुःपूजयन्विष्णुंनपूजाफल
भाग्भवेत् ॥ विष्णुर्भूत्वायजेद्विष्णुमयंविष्णुरहंस्थितः ॥ १० ॥ वसिष्ठउवाच ॥ प्रह्लादइ
त्थंसंचिंत्यकृत्वानारायणींतनुम् ॥ पुनःसंचिंतयामासपूजार्थमसुरद्विषम् ॥ ११ ॥ वपुषोवैष्ण
वादस्मान्मरुन्मूर्तिःपरावरः ॥ अयंप्राणप्रवाहेणबहिर्विष्णुःस्थितोऽपरः ॥ १२ ॥ तमेनंपूज
याम्याशुपरिवारसमन्वितम् ॥ सपर्ययामनोमय्यासर्वसंभाररम्यया ॥ १३ ॥

स्मात्तसोऽयंविष्णुः वैष्णवादस्माद्वपुषोबहिः प्राणप्रवाहेणवायोर्निःसरणेन मरुन्मूर्तिर्वायुरूपोयोऽपरःस्थितः ॥ १२ ॥ तमेनंवायुस्वरूपेवर्न

मानंविष्णुंपूजयामीत्यन्वयः ॥ १३ ॥ प्रह्लादइतिश्लोकद्वयंवाक्यम् ॥ संभारभरभारिणा संभारःपूजोपकरणानि ॥ १४ ॥ १५ ॥ अथे



प्रह्लादइतिसंचिंत्यसंभारभरभारिणा ॥ मनसापूजयामासमाधवंकमलाधवम् ॥ १४ ॥ रत्नार्घ पात्रपटलैश्चंदनादिविलेपनैः ॥ धूपैर्दीपैःपवित्रैश्चनानाविभवभूषणैः ॥ १५ ॥ अथदेवगृहेतस्मि न्बाह्यार्थैःपरिपूर्णया ॥ पूजयापूजयामासदानवेन्द्रोजनार्दनम् ॥ १६ ॥ ततस्ततःप्रभृत्येवप्र ह्लादःपरमेश्वरम् ॥ तथैवप्रत्यहंभक्त्यापूजयामासपूर्णया ॥ १७ ॥ अथतस्मिन्पुरेदैत्यास्त तःप्रभृतिवैष्णवाः ॥ सर्वएवाभवन्भक्त्याराजाह्याचारकारणम् ॥ १८ ॥ जगामवार्तागगनंदेव लोकमथारिहन् ॥ विष्णोर्द्वेषंपरित्यज्यभक्त्यादैत्याःश्रिताइति ॥ १९ ॥ देवाविस्मयमाजग्मुःश क्राद्याःसमरुद्गणाः ॥ गृहीतावैष्णवीभक्तिर्दैत्यैःकिमितिराघव ॥ २० ॥ क्षीरोदेभोगिभोगस्थं विबुधाविस्मयाकुलाः ॥ जग्मुरंबरमुत्सृज्यहरिमाहवशालिनम् ॥ २१ ॥ देवाऊचुः ॥ किमेत द्भगवन्दैत्याविरुद्धायेसदैवते ॥ तेहित्वन्मयतांयाताविस्मयोनोविजृंभते ॥ २२ ॥ क्वकिलात्यं तदुर्वृत्तादानवादलिताद्रयः ॥ क्वपाश्चात्त्यमहाजन्मलभ्याभक्तिर्जनार्दने ॥ २३ ॥ प्राकृतोगुण वाञ्जातइत्येषाभगवन्कथा ॥ अकालपुष्पमालेवासुखायोद्वेजनायच ॥ २४ ॥ क्वाधमःप्राकृतारं भोहीनकर्ममतिःसदा ॥ वराकोदानवस्तुच्छजातिर्भक्तिःक्ववैष्णवी ॥ २५ ॥



ति ॥ पूजयापूजाविधिना ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ क्वेति ॥ वराकःशोच्यः ॥ २५ ॥

॥ २६ ॥ २७ ॥ आत्मीयानीति ॥ प्राह्लादीप्रह्लादसंबंधिनी गुणितागुणवत्तोद्भवोत्कृष्टप्रभावा ॥ २८ ॥ इतीति ॥ तापिच्छगुच्छवत्त
मालपुष्पस्तबकवत् ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ प्राह्लादीमिति ॥ क्षीरोदमंदिरात्क्षीरोदमंदिरेस्थित्वैवसर्वगतयाधियाविवेदे

श्रीभगवानुवाच ॥ विबुधामाविषण्णाःस्थप्रह्लादोभक्तिमानिति ॥ पाश्चात्यंजन्मतस्येदंमोक्षा
र्होऽसावरिंदमाः ॥ २६ ॥ गुणवान्निर्गुणोजातइत्यनर्थक्रमंविदुः ॥ निर्गुणोगुणवान्जातइत्या
हुःसिद्धिदंक्रमम् ॥ २७ ॥ आत्मीयानिविचित्राणिभुवनान्यमरोत्तमाः ॥ प्रयातनासुखायैषाप्रा
ह्लादीगुणितोद्भवा ॥२८॥ इत्युक्त्वाभगवांस्तत्रक्षीरोदार्णववीचिषु ॥ अंतर्धानंययौदेवस्तटता
पिच्छगुच्छवत् ॥ २९ ॥ सोऽपिसंपूजितहरिःसुरौघोऽव्रजदंबरम् ॥ प्रह्लादंप्रतिगीर्वाणास्ततः
स्निग्धत्वमाययुः ॥ ३० ॥ वसिष्ठउवाच ॥ प्रत्यहंपूजयामासदेवदेवंजनार्दनम् ॥ मनसाकर्मणा
वाचाप्रह्लादोभक्तिमानिति ॥ ३१ ॥ अथपूजापरस्यास्यदृश्येस्थलइवाब्जिनी ॥ नविश्रामचे
तोऽस्यभोगत्यागानुरंगतः ॥ ३२ ॥ त्यक्तभोगादिकलनंविश्रांतिमनुपागतम् ॥ चेतःकेवलम
स्यासीद्दोलायामिवयोजितम् ॥ ३३ ॥ प्राह्लादींतांस्थितिंकृष्णोदेवःक्षीरोदमंदिरात् ॥ विवेद
सर्वगतयाधियापरमकांतया ॥ ३४ ॥ अथपातालमार्गेणविष्णुराह्लादिताग्रगः ॥ देवपूजागृहं
तस्यप्रह्लादस्यसमाययौ ॥ ३५ ॥

त्यन्वयः । मंदिरादित्यधिकरणेचोपसंख्यानमितिल्यब्लोपेपंचमी ॥ ३४ ॥ अथेति ॥ विष्णुःपातालमार्गेणतस्यदेवपूजागृहंसमाययौ ।

क्षीरोदे निमज्य तस्य देवपूजागृहाद्उन्ममज्जेत्यर्थः । आह्लादिताग्रगः भक्तानुग्रहव्यग्रतया परितोषितपरिवार इत्यर्थः ॥ ३५ ॥ ३६ ॥ ३७ ॥



अथाष्टभिःश्लोकैःप्रह्लादोविष्णुंस्तौति । त्रिभुवनेति ॥ त्रिभुवनमेवभवनंतस्याभिरामःकोशोऽर्थौघइव सर्वैरुपजीव्यत्वात्तादृशम् ॥ ३८ ॥



कुवलयेति ॥ कुवलयदलानांशैलःशैलाकारोराशिस्तत्संनिकाशं भ्रमरतिमिरकज्जलांजनाभं कज्जलरूपमंजनं अंजनस्यनयनप्रसादहेतोः

विज्ञायाभ्यागतंदेवंपूजयाद्विगुणेद्धया ॥ दैत्येंद्रःपुंडरीकाक्षमादरात्प्रत्यपूजयत ॥ ३६ ॥ पूजागृहगतंदेवंप्रत्यक्षावस्थितंहरिम् ॥ प्रह्लादःसुपरिप्रीतोगिरातुष्टावपुष्टया ॥ ३७ ॥ प्रह्लादउवाच ॥ त्रिभुवनभवनाभिरामकोशंसकलकलंकहरंपरंचकास्ति ॥ अशरणशरणंशरण्यमीशंहरिमजमच्युतमीश्वरंप्रपद्ये ॥३८॥ कुवलयदलशैलसंनिकाशंशरदमलांबरकोटरोपमानम् ॥ भ्रमरतिमिरकज्जलांजनाभंसरसिजचक्रगदाधरंप्रपद्ये ॥ ३९ ॥ विमलमलिकलापकोमलांगंसितदलपंकजकुड्मलाभशंखम् ॥ श्रुतिरणितविरिंचिचंचरीकंस्वहृदयपद्मजलाशयंप्रपद्ये ॥ ४० ॥ सितनखतरतारकावकीर्णंस्मितधवलाननपीवरेंदुबिंबम् ॥ हृदयमणिमरीचिजालगंगंहरिशरदंबरमानतंप्रपद्ये ॥ ४१ ॥

द्रव्यस्यबहुविधत्वाद्विशेषणोपादानम् ॥ ३९ ॥ विमलेति ॥ श्रुतिभिर्वेदैरणितोमुखरितोविरिंचिरेवचंचरीकोभ्रमरोयस्मिंस्तं स्वहृदयस्य प्रह्लादहृदयस्यैवपद्मस्यजलाशयमिवाश्रयभूतम् ॥ ४० ॥ सितेति ॥ हृदयमणिमरीचिजालगंगं वक्षसिस्थितानांमुक्तामणीनांमरीचिजालमेवगंगामंदाकिनीयस्यतम् ॥ ४१ ॥ 

त्रिभुवनेति ॥ त्रिभुवनमेवनलिनीसरसीतस्यांसितारविंदं सितत्वंचनरसिंहाद्यवताराभिप्रायेण । तिमिरसमानविमोहदीपं ज्ञानप्रतिबंधकत्वात् तिमिरसमानस्यमोहस्यदीपमिवनिवर्तकम् ॥ ४२ ॥ नवेति ॥ नवविकसितपद्मरेणुवद्गौरेणकमलायावक्षःस्थलस्थितायाःश्रियोवपुषाउपभूषितानिअंगानियस्य दिनशमसमयःसंध्यातद्वदरुणोऽगरागोयस्य ॥ ४३ ॥ अविरतेति ॥ अत्रअविरतकृतविश्वसर्गलीलस्यसततमजातत्वं अवर्धनस्यविशालत्वंजरठस्यअभिजातदेहत्वंअर्भकत्वंच विरुद्धमितिविरोधाभासःप्रतीयते । अवर्धनंविशालं असत्येववर्धने

त्रिभुवननलिनीसितारविंदंतिमिरसमानविमोहदीपमग्र्यम् ॥ स्फुटतरमजडंचिदात्मतत्त्वंजगदखिलार्तिहरंहरिंप्रपद्ये ॥ ४२ ॥ नवविकासितपद्मरेणुगौरस्फुटकमलावपुषोपभूषितांगम् ॥ दिनशमसमयारुणांगरागंकनकनिभांबरसुंदरंप्रपद्ये ॥ ४३ ॥ अविरतकृतविश्वसर्गलीलंसततमजातमवर्धनंविशालम् ॥ युगशतजरठाभिजातदेहंतरुदलशायिनमर्भकंप्रपद्ये ॥ ४४ ॥ दितिसुतनलिनीतुषारपातंसुरनलिनीसततोदितार्कबिंबम् ॥ कमलजनलिनीजलावपूरंहृदिनलिनीनिलयंविभुंप्रपद्ये ॥ ४५ ॥ इतिगुणबहुलाभिर्वाग्भिरभ्यर्चितोऽसौहरिरसुरविनाशीश्रीनिषण्णांसदेशः ॥ जलदइवमयूरेप्रीतिमान्प्रीयमाणंकुवलयदलनीलःप्रत्युवाचासुरेंद्रम् ॥ ४६ ॥ श्रीभगवानुवाच ॥ वरंकुलनिधेदैत्यकुलानर्घ्यमहामणे ॥ गृहाणाभिमतंभूयोजन्मदुःखोपशांतये ॥ ४७ ॥

विपुलं स्वभावतएवव्यापकत्वात् । युगशतजरठाभिजातदेहं युगशतेषुजरठोजीर्णोऽप्यभिजातोरम्योदेहोयस्यतं तरुदलशायिनंवटपत्रशायिनम् ॥ ४४ ॥ दितिसुतेति ॥ दितिसुताएवनलिन्यःतासांतुषारपातःसंहारहेतुत्वात् । कमलजोब्रह्मा सएवनलिनी अनेकमुखपद्मयुक्तत्वात् तस्याजलावपूरोजलाशयःतंहृदिनलिनीनिलयं नलिनीशब्दोऽत्रपद्ममात्रवाची । हृदिवक्षसियानलिनीयत्पुंडरीकंतन्निलयम् ॥ ४५ ॥ ४६ ॥ ४७ ॥

॥४८॥ ४९ ॥५० ॥ विष्णाविति ॥ पाश्चात्यंपश्चाद्भवं उद्वासनांगभूतमित्यर्थः । मणिरत्नपरिष्कृतं मणिश्रेष्ठैरलंकृतम् ॥५१॥ पद्मेति ॥ प द्मासनंतु । ऊर्वोरुपरिविप्रेंद्रकृत्वापादतलेउभे । पद्मासनंभवेदेतत्सर्वेषामपिपूजितम् ॥ इत्युक्तलक्षणंस्तोत्रपाठविधावत्रपूर्वोक्तस्तोत्रविष





प्रह्लादउवाच ॥ सर्वसंकल्पफलदःसर्वलोकांतरस्थितः ॥ यदुदारतमंवेत्सितदेवादिशमेविभो ॥ ४८ ॥ श्रीभगवानुवाच ॥ सर्वसंभ्रमसंशांत्यैपरमायफलायच ॥ ब्रह्मविश्रांतिपर्यंतोविचा रोऽस्तुतवानघ ॥ ४९ ॥ वसिष्ठउवाच ॥ इत्युक्त्वादितिपुत्रेंद्रंविष्णुरंतरधीयत ॥ कृतघर्घररानि र्ह्रादस्तरंगस्तोयधेरिव ॥ ५० ॥ विष्णावंतर्हितेदेवेपूजायैकुसुमांजलिम् ॥ पाश्चात्यंदानव स्त्यक्त्वामणिरत्नपरिष्कृतम् ॥ ५१ ॥ पद्मासनस्थोऽपिमुदाह्युपविष्टोऽधरासने ॥ स्तोत्रपाठवि धिप्रांतेचिंतयामासचिंतया ॥ ५२ ॥ विचारवानेवभवान्भवत्विंतिभवारिणा ॥ देवेनोक्तो ऽस्मितेनांतःकरोम्यात्मविचारणम् ॥ ५३ ॥ किमहंतावदेवस्यांयोऽस्मिन्भुवनडंबरे ॥ वच्मि गच्छामितिष्ठामिप्रयतेविहरामिच ॥ ५४ ॥ जगत्तावदिदंनाहंसवृक्षतृणवीरुधम् ॥ यद्बाह्यंजड मत्यंतंतत्स्यांकथमहंकिल ॥ ५५ ॥ असन्नभ्युत्थितोमूकःपवनेनैवविस्फुरन् ॥ कालेनाल्पेनर्वावि लयींदेहोनाहमचेतनः ॥ ५६ ॥



ये ॥ ५२ ॥ ५३ ॥ किमिति ॥ वच्मीत्यादि सर्वेन्द्रियव्यापारोपलक्षणम् । वच्मीत्यादिरूपेणसर्वेन्द्रियव्यापाराभिमानीअहंकिंस्यामि तिविचारोपक्रमः ॥ ५४ ॥ इदंजगदहंन। बाह्यत्वाज्जडत्वाच्चेत्यर्थः ॥ ५५ ॥ असन्निति॥ वस्तुतोऽसन्नेवाभ्युत्थितःकल्पितःभूतेंद्रियसंघातस्य

देहव्यपदेशाद्देहोनाहं अचेतनत्वाज्जडत्वात् कुतश्चाचेतनत्वं असदभ्युत्थत्वान्मूकत्वात्पवनप्रेर्यत्वाच्चेत्यर्थः ॥ ५६ ॥ जडयेति ॥ शून्याकृतिःअ मूर्तत्वात् । शून्यभवःआकाशप्रभवत्वात् । अत्रापिपूर्ववत्साध्यसाधनभावोयोज्यः ॥ ५७ ॥ त्वचेति ॥ त्वचात्वगिंद्रियेणप्राप्यः प्रकारांतरेणत्वप्राप्यत्वात् चित्प्रसादेनइंद्रियप्रवर्तकतयाबहिःप्रसृतेन उपलब्धात्माप्रकाशितस्वरूपः ॥ ५८ ॥ लब्धेति ॥ लोलाक्षणिकासत्तायस्यास्तया ॥ ५९ ॥ दृश्येति ॥ दृश्यंघटादिदर्शनंचक्षुस्तयोर्लीनंसमवेतं केवलेद्रष्टरिक्षीणमविद्यमानम् केवलग्रहणमुपहितनिवृत्त्यर्थम् ॥ ६० ॥

जडयाकर्णशष्कुल्याकल्पमानःक्षणस्थया ॥ शून्याकृतिःशून्यभवःशब्दोनाहमचेतनः ॥५७ ॥
त्वचाक्षणविनाशिन्याप्राप्योऽप्राप्योऽयमन्यथा ॥ चित्प्रसादोपलब्धात्मास्पर्शोनाहमचेतनः
॥ ५८ ॥ लब्धात्माजिह्वयातुच्छोलोलक्षणिकसत्तया ॥ स्वल्पस्पंदोद्रव्यनिष्ठोरसोनाहमचे
तनः ॥ ५९ ॥ दृश्यदर्शनयोर्लीनंक्षयिक्षणविनाशिनोः ॥ केवलेद्रष्टरिक्षीणंरूपंनाहमचेतन
म् ॥ ६० ॥ नासयागंधजडयाक्षयिणापरिकल्पितः ॥ पेलवोऽनियताकारोगंधोनाहमचेतनः
॥६१॥ निर्ममोऽमननःशांतोगतपंचेंद्रियभ्रमः ॥ शुद्धचेतनएवाहंकलाकलनवर्जितः ॥ ६२ ॥
चेत्यवर्जितचिन्मात्रमहमेवावभासकः ॥ सबाह्याभ्यंतरव्यापीनिष्कलामलसन्मयः ॥ ६३ ॥

नासयेति ॥ गंधजडया गंधवत्याजडयाचेत्यर्थः । पेलवोविरलः अनियताकारः क्षणांतरेगंधांतरस्यप्रादुर्भावात् ॥ ६१ ॥ तर्हिकस्त्वमित्यत्राह । निर्ममइति ॥ तत्रगतपंचेंद्रियभ्रमः इत्यनेनचक्षुरादींद्रियतादात्म्यंवारयति ॥ अमननइति ॥ मनोरूपता मननंहिमनोव्यापारः निर्ममइत्यनहंकारत्वं ममेत्यव्ययं निर्गतोममेत्यभिमानोयस्मात् । कलाकलनवर्जितइतिमायासंबंधरहितइत्यर्थः ॥ ६२ ॥ जीवभावंचवारयति ॥ चेत्येति ॥ निष्कलामलसन्मय निष्कलं निरंशं अमलं [illegible] ॥ ६३ ॥

आइति ॥ आइतिस्मृतिद्योतकमव्ययम् । सत्यमखिलंसर्वात्मकंचैतद्रूपंमयास्मृतमित्यन्वयः । तदेवरूपंनिर्विकल्पेत्यादिनादर्शयति ॥ ६४ ॥ मयैवेति ॥ मयैवदीपेनचेतनेनेमेघटपटादयःसूर्यांताअवभासंते । तस्यभासासर्वमिदंविभातीतिश्रुतेः ॥ ६५ ॥ मयैवेति ॥ एताविचित्राइंद्रियवृत्तयोऽपि अंतःप्रकाशमानेनमयैवतेजसास्फुरंति अंतर्गताग्नयःकाष्ठशलाकाइवेति ॥ ६६ ॥ विरिंचीति ॥ मेरूपंचैतन्यं विरिंचिसदनात्सत्यलोकात्परतोऽपिकल्पांतेऽपिपदंस्थानमाहरत्संपादयत् प्रसरत्येव । अद्यापिननिवर्तते । देशकालाभ्यामपरिच्छि

आइदानींस्मृतंसत्यमेतत्तदखिलंमया ॥ निर्विकल्पचिदाभासएषआत्मास्मिसर्वगः ॥ ६४ ॥ मयैवचेतनेनेमेसर्वेघटपटादयः ॥ सूर्यांताअवभासंतेदीपेनोत्तमतेजसा ॥ ६५ ॥ मयैवैताः स्फुरंतीहविचित्रेंद्रियवृत्तयः ॥ तेजसांतःप्रकाशेनयथाग्निकणपंक्तयः ॥ ६६ ॥ विरिंचिसदनात्पारेकल्पांतेऽप्याहरत्पदम् ॥ प्रसरत्येवमेरूपमद्यापिननिवर्तते ॥ ६७ ॥ अयंनामाहमित्यंतः कुतोनिरवलंबनः ॥ अपर्यंताकृतेरेषाकिलासीत्स्वल्पताामम ॥ ६८ ॥ अनंतानंदसंभोगापरोपशमशालिनी ॥ शुद्धेयंचिन्मयीदृष्टिर्जयत्यखिलदृष्टिषु ॥ ६९ ॥ सर्वभावांतरस्थायचेत्यमुक्तचिदात्मने ॥ प्रत्यक्चेतनरूपायमह्यमेवनमोनमः ॥ ७० ॥

न्नत्वात्सर्वत्रपरिपूर्णंमेस्वरूपमित्यर्थः ॥ ६७ ॥ अयमिति ॥ अपरिच्छिन्नस्यात्मनोऽयमिति परिच्छेदोनिरालंबोनिर्हेतुकश्चेत्यर्थः ॥ ६८ ॥ अनंतेति ॥ प्रकृष्टोपशमशालिनीइयंमदीयादृष्टिः अखिलदृष्टिषुसमस्तवस्तुदर्शनेषुअनंतमानंदमनुभवंतीचिन्मयीजयतीत्यन्वयः ॥ ६९ ॥ सर्वेति ॥ आत्मैवदेवताःसर्वाइतिश्रुतेः आत्मनश्चाद्वितीयत्वात् स्वस्यैवनमस्कारोयुज्यते । सर्वपदार्थांतर्यामिणेविषयासंस्पृष्टसद्रूपाय प्रत्यगात्मनेमह्यंनमः ॥ ७० ॥

विचित्रेति ॥ स्वच्छयासमयानिर्विकारयाचपरया चितैवकलंकमलमुक्तया विचित्राः शक्तयोजगत्सृष्ट्याद्यनुकूलाब्रह्मादिरूपामूर्तयः क्रियंते ॥ ७१ ॥ कालेति ॥ अतीतमनागतंवर्तमानंचकालमुपेक्षतेनानुसंधत्ते याचित्साचेत्यबंधनैः हर्षविषादादिभिः हीयते । तस्या श्चेत्यंदृश्यभेदमुपेक्षमाणायाश्चितः समतैवपूर्णतैवावशिष्यते । उपेक्षित्र्याइति तृन्नंतादृन्नेभ्योङीबितिङीपिरूपम् ॥ ७२॥ साहीति । सा हिसमतामापन्नाचिद्वाचामगम्यत्वादव्यपदेश्यत्वात् शाश्वतींसमतामुपगतेवनैरात्म्यसिद्धांतदशां शून्यवादिसिद्धांतावस्थांशून्यरूपतामुप

विचित्राःशक्तयःस्वच्छासमयानिर्विकारया ॥ चिताक्रियंतेपरयाकलंकमलमुक्तया ॥ ७१ ॥ का लत्रयमुपेक्षिण्याहीनायाश्चेत्यबंधनैः ॥ चितश्चेत्यमुपेक्षित्र्याःसमतैवावशिष्यते ॥ ७२ ॥ सा हिवाचामगम्यत्वादसत्तामिवशाश्वतीम् ॥ नैरात्म्यसिद्धांतदशामुपयातेवतिष्ठति ॥ ७३ ॥ ई हानीहमयैरंतर्याचिदावलितामलैः ॥ साहिनोत्पतितुंशक्तापाशबद्धेवपक्षिणी ॥ ७४ ॥ इच्छाद्वे षसमुत्थेनद्वंद्वमोहेनजंतवः ॥ धराविवरलग्नानांकीटानांसमातांगताः ॥ ७५ ॥ आत्मनेस्तुन मोमह्यमविच्छिन्नचिदात्मने ॥ लोकालोकमणेदेवचिरेणाधिगतोऽस्म्यहम् ॥ ७६ ॥ परामृष्टो ऽसिलब्धोऽसिप्रोदितोऽस्यचिरायच ॥ उद्धृतोऽसिविकल्पेभ्योयोऽसिसोऽसिनमोऽस्तुते ॥७७॥

यातेवावशिष्यते ॥ ७३॥ ईहेति ॥ ईहानीहमयैःरागद्वेषमूलैर्मलैःमनोदोषैर्याचिदावलितावेष्टिताभवति साचित्पाशबद्धापक्षिणीव उत्पति तुंमुक्ताभवितुंनशक्ता ॥ ७४ ॥ ७५ ॥ आत्मनइति ॥ लोकालोकमणे लोकानालोकयतिप्रकाशयतीति लोकालोकःसचासौमणिश्चतस्या मंत्रणम् ॥ ७६ ॥ परामृष्टइति ॥ परामृष्टःश्रुत्याचार्यवाक्यैःसम्यग्विचारितोऽसि ततोविकल्पेभ्यःकल्पिताकारेभ्यःउद्धृतोऽसि ततश्चप्रो दितोऽसिकृप्रष्टेनसत्यज्ञानानंदादिलक्षणेनस्वरूपेणप्रादुर्भूतोऽसि ततश्चलब्धोऽसिऐक्येनसोऽहमित्यपरोक्षमनुभूतोऽसि इत्थंपूर्वयोऽसियद्रू

पोऽसि तद्रूपएवेदानींअसि कल्पिताकारनिवृत्त्यास्वरूपेणैवावस्थितोऽसि तथाभूतायतेनमोऽस्त्वित्यन्वयः ॥ ७७ ॥ मह्यमिति ॥ जीव परमात्मनोरैक्यान्मह्यंमद्रूपायतुभ्यंनमः । तुभ्यंत्वद्रूपायमह्यंनमः । देवानामधिदेवायपरायपरमात्मनेनमः ॥ ७८ ॥ गतेति ॥ गतकल नावरणंनिवृत्ताविद्यावरणम् । अतश्चगतघनंपूर्णमिंदुबिंबमिवस्थितं मुदितेआनंदात्मकेस्ववपुषिस्वरूपे नपुनःस्वव्यतिरिक्तआधारे स्वयमा त्मनैव नकारणांतरेण स्वसंस्थंस्वस्वरूपभूतंनतुक्रियारूपासंस्थास्थितिर्यस्यतं स्वयमेवउदितंआविर्भूतंस्ववशंअनन्याधीनंस्वमेवरूपंनमामि ॥ ७९ ॥ तिष्ठन्निति ॥ निष्क्रियत्वात्तिष्ठन्नपिआसीनोनभवति । अवस्थितदेहानभिमानात् । गच्छन्नपिदेशांतरंव्याप्नुवन्नपिनगच्छति ।

मह्यंतुभ्यमनंतायतुभ्यंमह्यंशिवात्मने ॥ नमोदेवाधिदेवायपरायपरमात्मने ॥ ७८ ॥ गतघ नमिवपूर्णमिंदुबिंबंगतकलनावरणंस्वमेवरूपम् ॥ स्ववपुषिमुदितेस्वयंस्वसंस्थंस्वयमुदितंस्वव शंस्वयंनमामि ॥ ७९ ॥ तिष्ठन्नपिहिनासीनोगच्छन्नपिनगच्छति ॥ शांतोऽपिव्यवहारस्थःकुर्व न्नपिनलिप्यते ॥ ८० ॥ मनांसिक्षोभयत्येषपल्लवानीवमारुतः ॥ वाहयत्यक्षपंक्तिंस्वामश्वाली मिवसारथिः ॥ ८१ ॥ एषएवसदान्वेष्यःस्तुत्योध्यातव्यएवच ॥ जरामरणसंमोहादनेनोत्ती र्यंगम्यते ॥ ८२ ॥

गमनक्रियायादेहनिष्ठत्वात् । आत्मनश्चतद्व्यतिरिक्तत्वात् । शांतोऽपिनिर्विकारचित्तोऽपिव्यवहारस्थः । सर्वेन्द्रियप्रवर्तकत्वात् । इत्थंकुर्व न्नपिव्यवहरन्नपिआत्मानलिप्यते पुण्यपापैर्नश्लिष्यते अहंकारस्यनिवृत्तत्वात् ॥ ८० ॥ मनांसीति ॥ मनांसिमनोबुद्ध्यादीन्यंतःकरणानि अक्षपंक्तिंबाह्येन्द्रियगणम् ॥ ८१ ॥ एषइति ॥ एषआत्मैवसदान्वेष्यः । सोऽन्वेष्टव्यःसविजिज्ञासितव्यइतिश्रुतेः । एवंचसतिअनेनात्म नाजरामरणसंमोहात्संसाराद्युत्तीर्यस्वरूपंगम्यते ॥ ८२ ॥

॥ ८३ ॥ ८४ ॥ एतावंतमिति ॥ एकांतंपरैरविज्ञातंयथातथा अवपोथितोहिंसितः ॥ ८५ ॥ मनसेति ॥ मनसाशास्त्रसंस्कृतेनमनोवृत्ति विशेषेण मनसिसंसारवासितेचेतसिछिन्नेनिरहंकारतांगतेसतिभावेनब्रह्माद्वैतविषयेणतात्पर्येण संसारालंबिनिभावेगलितेसति केवलःस्व च्छःतिष्ठामि ॥ ८६ ॥ निर्भावमिति ॥ निर्भावमित्यादितिष्ठतिक्रियाविशेषणम् भावःसंसारवासना ॥ ८७ ॥ ८८ ॥ ८९ ॥ जयेति

सुलभश्चायमत्यंतंसुजेयश्चाप्तबंधुवत् ॥ शरीरपद्मकुहरेसर्वेषामिवषट्पदः ॥ ८३ ॥ नमेभोग स्थितौवांछानमेभोगविवर्जने ॥ यदायातितदायातुयत्प्रयातिप्रयातुतत् ॥ ८४ ॥ एतावंतम हंकालमज्ञानरिपुनामुना ॥ हत्वाविवेकसर्वस्वमेकांतमवपोथितः ॥ ८५ ॥ मनसामनसिछिन्ने निरहंकारतांगते ॥ भावेनगलितेभावेस्वस्थस्तिष्ठामिकेवलः ॥ ८६ ॥ निर्भावंनिरहंकारंनिर्मन स्कमनीहितम् ॥ केवलास्पंदशुद्धात्मन्यवतिष्ठतिमेवपुः ॥ ८७ ॥ तृष्णारज्जुगणंछित्वामच्छ रीरकपंजरात् ॥ नजानेक्वगतोडीयदुरहंकृतिपक्षिणी ॥ ८८ ॥ विद्यमानापिवस्तुश्रीर्नस्थितात्व यिनास्थिरे॥वनितारूपलावण्यसत्त्वेवगतचक्षुषः ॥ ८९ ॥ जयप्रोड्डामराकारजयशांतिपरायण ॥ जयसर्वांगमातीतजयसर्वांगमास्पद ॥ ९० ॥ जयजातजयाजातजयक्षतजयाक्षत॥ जयभावज याभावजयजेयजयाजय ॥ ९१ ॥

श्लोकद्वयेनात्मानंस्तौति ॥ प्रोड्डामरोभयंकरोभैरवाद्याकारोयस्यसर्वांगमातीतनामजाताद्यभावात् । सर्वांगमास्पद सर्वोपनिषत्समन्व यगम्यत्वात् सर्वात्मकत्वात् जाताजातादिरूपत्वम् ॥ ९० ॥ ९१ ॥

॥ ९२ ॥ ९३ ॥ एतावतेति ॥ तीक्ष्णंहिंसाभूयिष्ठं । मात्स्यन्यायोनामबलवताद्दुर्बलस्यबाधः । मत्स्याहिमहांतःस्वल्पान्मत्स्यान्गिलंति ॥ ९४ ॥ अथेति ॥ अखिलानांजगतांजालस्यतत्क्रमस्यवर्णाश्रमधर्ममर्यादायाश्चपालनायदेहवान् ॥९५॥ अष्टभिःश्लोकैर्भगवतश्चिंता । इत्थंचचिंतायाःक्रमःप्रह्लादस्यस्वपदविश्रांतत्वात् पातालेगतनायकेसतितत्रत्यानामनाथतयाक्षये ॥ ९६ ॥ सुरश्रेणीविजिगीषांविहायो

वसिष्ठउवाच ॥ इतिसंचिंतयन्नेवप्रह्लादःपरवीरहा ॥ निर्विकल्पपरानंदसमाधिंसमुपाययौ ॥ ९२ ॥ निर्विकल्पसमाधिस्थश्चित्रार्पितइवाबभौ ॥ पंचवर्षसहस्राणिपीनांसोऽतिष्ठदेकदृक् ॥ ९३ ॥ एतावताचकालेनतद्रसातलमंडलम् ॥ बभूवाराजकंतीक्ष्णंमात्स्यन्यायकदर्थितम् ॥ ९४ ॥ अथाखिलजगज्जालक्रमपालनदेहवान् ॥ क्षीरोदसागरेशेषशय्यासनगतोहरिः ॥९५॥ इदंसंचिंतयामासत्रैलोक्यांभोरुहांशुमान् ॥ प्रह्लादेपदविश्रांतेपातालेगतनायके ॥ ९६ ॥ कष्टंसृष्टिरियंप्रायोनिर्दैत्यत्वमुपागता ॥ दैत्याभावेसुरश्रेणीनिर्जिगीषुपदंगता ॥ शममेष्यत्यपद्वंद्वंमोक्षाख्यंपदमाप्स्यति ॥९७॥ देवौघेशांतिमायातेभुवियज्ञतपःक्रियाः ॥ भविष्यंत्यफलाःसर्वाःशममेष्यंत्यसंशयम् ॥ ९८ ॥ क्रियास्वथोपशांतासुभूर्लोकोऽस्तमुपेष्यति ॥ असंसारप्रसंगोऽथशेषेऽप्यर्थेभविष्यति ॥ ९९ ॥ ततोऽहमपिशून्येऽस्मिन्नष्टचंद्रार्कतारके ॥ चेतःप्रशांतिमाधायस्थितिमेष्याम्यतत्पदे ॥ १०० ॥

पशांतासतीमुमुक्षेत ॥ ९७ ॥ ततस्तद्भोगभूमेःस्वर्गस्याभावाद्भुवियज्ञतपःप्रमुखानि स्वर्गफलानिसत्कर्माण्युच्छिद्येरन् ॥ ९८ ॥ ततोधर्मस्याप्रवृत्तेःभूलोकस्याप्युपरतौअसंसारप्रसं [illegible] ॥ ९९ ॥ अहमपितत्पदेविश्राम्येयम् ॥ १०० ॥

ततश्चाकांडएवप्रलयःस्यादितिदानवानांजीवनमेववरंमन्ये ॥ १ ॥ ततोदैत्योद्योगेनविबुधानांविजिगीषायांयज्ञादिक्रियाप्रवृत्तौसंसार
स्यस्थितिर्नान्यथेति ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ महतेति ॥ वैष्णवप्राणजन्मना विष्णुसंबंधप्राणवायुजनितेन ॥ ७ ॥ ब्रह्मरंध्रेति ॥
अथप्रबोधानंतरंप्राणशक्तिश्चैतन्यशक्तिःब्रह्मरंध्रकृतोत्थाना पूर्वंसमाधिसमयेतत्रैवब्रह्मरंध्रेस्थितेति ततउत्थितासतीसर्वाभ्योनाडीभ्यःशनैर

अकांडएवमेवंहिजगत्युपशमंगते ॥ नेहश्रेयोनुपश्यामिमन्येजीवंतुदानवाः ॥ १ ॥ दैत्यो
द्योगेनविबुधास्ततोयज्ञतपःक्रियाः ॥ तेनसंसारसंस्थानमसंसारक्रमोऽन्यथा ॥ २ ॥ आकल्प
मिहवस्तव्यंदेहेनानेनतेनच ॥ एवंहिनियतिर्दैवीनिश्चितापारमेश्वरी ॥ ३ ॥ इतिसंचिंत्यसर्वा
त्मानिर्गत्यक्षीरसागरात् ॥ प्रह्लादनगरंप्राप्यप्रासादतलमाविशत् ॥ ४ ॥ वैनतेयासनस्थो
ऽसौलक्ष्मीविधुतचामरः ॥ स्वायुधादिपरीवारोदेवर्षिमुनिवंदितः ॥ ५ ॥ महात्मन्संप्रबुध्यस्वे
त्येवंविष्णुरुदाहरन् ॥ पांचजन्यंप्रदध्मानोध्वनयन्ककुभांगणम् ॥ ६ ॥ महतातेनशब्देन
वैष्णवप्राणजन्मना ॥ बभूवसप्रबुद्धात्मादानवेशःशनैःशनैः ॥ ७ ॥ ब्रह्मरंध्रकृतोत्थानाप्राण
शक्तिरथासुरम् ॥ शनैराक्रमयामासनाडीभ्यःसर्वतोमुखम् ॥ ८ ॥ प्राणेषुरंध्रवक्रेषुप्रवृत्तेष्व
थतस्यचित् ॥ चेत्योन्मुखीबभूवांतःप्राणदर्पणबिंबिता ॥ ९ ॥

सुरमाक्रमयामासव्याप्तवती ॥ ८ ॥ प्राणेष्विति ॥ रंध्रवक्रेषुनवकेषुनवसुरंध्रेषुप्राणेष्विन्द्रियेषुप्रवृत्तेषुसत्सुतस्यचित्अंतःप्राणदर्पणबिंबि
ता अंतःप्राणेअंतरिन्द्रियएवदर्पणेप्रतिबिंबिताचेत्योन्मुखीबभूव ॥ ९ ॥

चेतनीयेति ॥ चेतनीयंचेत्यंदृश्यमितिपर्यायः चेतनीयोन्मुखीचेत्याचित् अंतःकरणप्रतिबिंबितत्वाच्चेत्यभूतासाचित् मनस्तांमनोरूपतामुपायथौ मुखश्रीर्मुखशोभामुकुरसंक्रांतादर्पणप्रतिफलिताद्वित्वंरूपांतरमिवेति ॥ १० ॥ ११ ॥ प्राणेति ॥ प्राणापानपरामृष्टनाडीविवरसंविदः प्राणापानाभ्यांपरामृष्टाप्रबोधितानाडीविवरेषुसंविच्चेतनायस्यतस्य वातेरितपद्मस्येवस्पंदःसमजायतेति ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥



चेतनीयोन्मुखीचेत्यचिन्मनस्तामुपाययौ ॥ द्वित्वंमुकुरसंक्रांतामुखश्रीरिवराघव ॥ १० ॥ किंचिदंकुरितेचित्तेनेत्रेविकसनोन्मुखे ॥ शनैर्बभूवतुस्तस्यप्रांतनीलेयथोत्पले ॥ ११ ॥ प्राणापानपरामृष्टनाडीविवरसंविदः ॥ वातार्तस्येवपद्मस्यस्पंदोऽस्यसमजायत ॥ १२ ॥ निमेषांतरमात्रेणमनःपीवरतांययौ ॥ अथासौविकसन्नेत्रमनःप्राणवपुर्बभौ ॥ १३ ॥ प्रफुल्लनयनंजातमानसंपीवरस्मृतिम् ॥ उवाचैनंत्रिलोकेशःपर्जन्यइवबर्हिणम् ॥ १४ ॥ साधोस्मरमहालक्ष्मीमात्मीयांस्मरचाकृतिम् ॥ अकांडएवकिंदेहविरामःक्रियतेत्वया ॥ १५ ॥ हेयोपादेयसंकल्पविहीनस्यशरीरगैः ॥ भावाभावैस्तवानर्थःकस्तिष्ठोत्तिष्ठसंप्रति ॥ १६ ॥ जीवन्मुक्तेनभवताराज्यएवहितिष्ठता ॥ क्षेपणीयागतोद्वेगमाकल्पांतमियंतनुः ॥ १७ ॥ नोदिताद्वादशादित्यानविलीनाःशिलोच्चयाः ॥ नजगज्ज्वलितंसाधोतनुंत्यजसिवैमुधा ॥ १८ ॥



हेयेति ॥ हेयोपादेयविषयसंकल्पविहीनस्यतवशरीरगैर्भावाभावैःइष्टानिष्टैःकोऽनर्थःकाहानिः । तस्माज्जीवन्मुक्तपदेतिष्ठसमाधेरुत्तिष्ठ । ॥ १६ ॥ जीवन्निति ॥ क्षेपणीयाप्रवर्तनीया गतोद्वेगंविगतभयम् ॥ १७ ॥ १८ ॥

कृशइति ॥ दारिद्र्यादिदुःखवासनाविलुप्तधैर्यस्यैवमरणंशोभतइत्यर्थः ॥ १९ ॥ आशेति ॥ अंतः अंतःकरणे आशापाशनिबद्धत्वात्विलो लमनोवृत्त्यापशुवदितस्ततोनीयमानस्यसुखलेशाभावान्मरणमेववरमित्यर्थः ॥ २० ॥ जीवन्मुक्तस्यतुजीवितमेवशोभतइत्याहत्रिभिः य स्येति ॥ यस्यभावोऽन्तःकरणवृत्तिःनाहंकृतः देहादावहंममाभिमानशून्यः बुद्धिश्चहर्षविषादादिभिःनलिप्यतेनस्पृश्यते यश्चसर्वभूतेषुसमः

कृशोऽतिदुःखीमूढोऽहमेताश्चान्याश्चभावनाः ॥ मतिंयस्यावलुंपंतिमरणंतस्यराजते ॥ १९ ॥ आशापाशनिबद्धोंऽतरितश्चेतश्चनीयते ॥ योविलोलमनोवृत्त्यामरणंतस्यराजते ॥ २० ॥ यस्य नाहंकृतोभावोबुद्धिर्यस्यनलिप्यते ॥ यःसमःसर्वभूतेषुजीवितंतस्यशोभते ॥ २१ ॥ योंऽतःशी तलयाबुद्ध्यारागद्वेषविमुक्तया ॥ साक्षिवत्पश्यतीदंहिजीवितंतस्यशोभते ॥ २२ ॥ येनस म्यक्परिज्ञायहेयोपादेयमुक्तताः ॥ चित्तस्यांतेऽर्पितंचित्तंजीवितंतस्यशोभते ॥ २३ ॥ ग्राह्यग्रा हकसंबंधेक्षीणेशांतिरुदेत्यलम् ॥ स्थितिमभ्यागताशांतिर्मोक्षनाम्नाभिधीयते ॥ २४ ॥ तदु त्तिष्ठासुराधीशसिंहासनमुपाश्रय ॥ यावदाश्वभिषेकंतेस्वयमेवददाम्यहम् ॥ २५ ॥ पांचज न्यरवंश्रुत्वायइमेसमुपागताः ॥ सिद्धाःसाध्याःसुरौघाश्चकुर्वंतुतवमंगलम् ॥ २६ ॥

समदर्शीतस्यजीवितंशोभते ॥ २१ ॥ २२ ॥ येनेति ॥ सम्यक्परिज्ञाय आत्मतत्वमितिशेषः । चित्तस्यांतेचित्तलयस्थाने स्वात्मन्येव चित्तमर्पितंतदायत्तंकृतमित्यर्थः ॥ २३ ॥ ग्राह्येति ॥ ग्राह्यग्राहकसंबंधेक्षीणे ग्राह्यादिभेदप्रतीतौनिवृत्तायां याशांतिःचित्तस्यनिर्विकार ताउदेतिसैवस्थितिमभ्यागतासतीमोक्षइत्युच्यते ॥ २४ ॥ २५ ॥ २६ ॥

॥२७॥२८॥२९॥३०॥ परेपदइति ॥ परेपदेब्रह्मणिपरिणतंतादात्म्यमापन्नम् ॥३१॥ भ्रष्टेति ॥ भ्रष्टबीजोपमा अतएवभूयोजन्मरूपेणांकुरेणविवर्जिता शुद्धावासनाजीवन्मुक्तानांहृदिवसति ॥ ३२ ॥ तामेवविशिनष्टि ॥ पावनीति ॥ पावनीपापलेपाभावात् । परमोदाराकैवल्यसुखप्रदत्वात् । शुद्धसत्वानुपातिनीरजस्तमोभ्यामसंभिन्नंसत्वगुणमेवानुवर्तमाना आत्मध्यानमयीसाशुद्धवासनाजीवन्मुक्तेसुषुप्तस्थ

अथैनंहरिराहूतैःक्षीरोदाद्यैर्महाब्धिभिः ॥ गंगादिभिःसरित्पूरैःसर्वतीर्थजलैस्तथा ॥ २७ ॥ अभिषिक्तमुवाचेदंप्रह्लादंमधुसूदनः ॥ २८ ॥ यावसुरासुरैःस्तूयमानंस्तूयमानःसुरासुरैः ॥ अखंडितगुणश्लाघीतावद्राजाभवानघ ॥ २९ ॥ वसिष्ठन्मेरुर्धरायावद्यावच्चंद्रार्कमंडलम् ॥ अखंडितगुणश्लाघीतावद्राजाभवानघ ॥ २९ ॥ वसिष्ठउवाच ॥ इत्युक्त्वापुंडरीकाक्षःसनरामरकिंनरः ॥ द्वितीयइवसंहारस्तत्रैवांतर्धिमाययौ ॥ ३० ॥ रामउवाच ॥ परेपदेपरिणतंपांचजन्यस्वनैर्मनः ॥ कथंप्रबुद्धंभगवन्प्रह्लादस्यमहात्मनः ॥ ॥ ३१ ॥ वसिष्ठउवाच ॥ भ्रष्टबीजोपमाभूयोजन्मांकुरविवर्जिता ॥ हृदिजीवद्विमुक्तानांशुद्धावसतिवासना ॥ ३२ ॥ पावनीपरमोदाराशुद्धसत्वानुपातिनी ॥ आत्मध्यानमयीनित्यंसुषुप्तस्थेवतिष्ठति ॥ ३३ ॥ अपिवर्षसहस्रांतेतयैवांतरवस्थया ॥ सतिदेहेप्रबुध्यंतेकुतोऽप्युच्छूनयाशनैः ॥ ३४ ॥

वासनावन्निलीनातिष्ठति ॥ ३३ ॥ अपीति ॥ अंतरवस्थया अंतरवस्थायस्यास्तयाकुतोऽपिकारणात्शनैरुच्छूनयाप्रवृद्धयातयैववासनयादेहेसतिवर्षसहस्रांतेऽपिप्रबुध्यंते ॥ ३४ ॥

इतिसंसारतरिणिनाम्निवासिष्ठविवरणउपशमप्रकरणेप्रह्लादोपाख्यानंनामद्वाविंशःसर्गः ॥ २२ ॥ पूर्वमीश्वरानुग्रहादेवात्मतत्त्वावबोधेनसंसाराख्योपशांतिरुक्ता इदानींचित्तजयमंतरेणजगन्मायानोपशाम्यतीतिदर्शयितुंमायावैचित्र्यप्रतिपादनाय लवणवृत्तांतवद्गाधिवृत्तांतो

इतिश्रीवाल्मीकीयेमोक्षोपायउपशमप्रकरणेप्रह्लादोपाख्यानंनामद्वाविंशःसर्गः ॥ २२ ॥ वसिष्ठ उवाच ॥ रामापर्यवसानेयंमायासंसृतिनामिका ॥ आत्मचित्तजयेनैववश्यमायातिनान्यथा ॥ १ ॥ जगन्मायाप्रपंचस्यवैचित्र्यप्रतिपत्तये ॥ इतिहासमहंवक्ष्येशृणुष्वावहितोऽनघ ॥ २ ॥ अस्त्यस्मिन्वसुधापीठेकोसलोनाममंडलम् ॥ तत्राभूद्ब्राह्मणःकश्चिद्गुणीगाधिरितिश्रुतः ॥ ३ ॥ किमप्यधिगतंकार्यंविनिधायसचेतसि ॥ बंधुवृंदाद्विनिष्क्रम्यतपस्तप्तुंवनंययौ ॥ ४ ॥ उत्फुल्लकमलंप्रापसरस्तत्रसविप्रराट् ॥ आकंठमंबुनिर्मग्नस्तपस्तत्रचकारसः ॥ ५ ॥ ययौमासाष्टकं तस्यमग्नस्यसरसोंऽभसि ॥ अथैनंतपसातप्तमाजगामैकदाहरिः ॥ ६ ॥ श्रीभगवानुवाच ॥ विप्रोत्तिष्ठपयोमध्याद्गृहाणाभिमतंवरम् ॥ अभीप्सितफलोपेतोजातस्तेनियमक्रमः ॥ ७ ॥ गाधिरुवाच ॥ असंख्येयजगद्भूतहृत्पद्मकुहरालिने ॥ जगत्त्रयैकनलिनीसरसेविष्णवेनमः ॥ ८ ॥ मायामिमांत्वद्रचितांभगवन्पारमात्मिकीम् ॥ द्रष्टुमिच्छामिसंसारनाम्नीमाश्चर्यकारिणीम् ॥ ९ ॥

निरूप्यते ॥ रामेत्यादिना ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ असंख्येयेति ॥ सर्वभूतांतर्यामिणेसर्वजगदधिष्ठानायचेत्यर्थः ॥ ८ ॥ मायामिति ॥ पारमात्मिकींपरमात्मसंबंधिनीम् ॥ ९ ॥

॥ १० ॥ ११ ॥ १२ ॥ एकदेति ॥ मानसेमानसाख्येसरसिमहर्षिरिव ॥ १३ ॥ जलस्येति ॥ तस्मिन्विधौस्नानविधौ ॥ १४ ॥ १५ ॥
आवृत्तमिति ॥ नवव्यंजनलांछिते नवयौवनेनप्रत्यग्रश्मश्रुचिह्निते चिबुकेवक्त्रस्याधोभागेवात्सल्यान्मात्राग्रहीतमित्यन्वयः ॥ १६ ॥





वसिष्ठउवाच ॥ इमांद्रक्ष्यसिमायांत्वंततस्त्यजसिचेत्त्यज ॥ इत्युक्त्वांतर्दधेविष्णुर्गांधर्वमिव
पत्तनम् ॥ १० ॥ गतेविष्णौसमुत्तस्थौजलात्सब्राह्मणेश्वरः ॥ बभूवपरितुष्टात्मादर्शनेनजग
त्पतेः ॥ ११ ॥ अथास्यकतिचित्तस्मिन्दिवसानिययुर्वने ॥ हरिसंदर्शनानंदवतोब्राह्मणक
र्मणा ॥ १२ ॥ एकदारब्धवान्स्नानंसरस्युदितपंकजे ॥ चिंतयन्वैष्णवंवाक्यंमहर्षिरिवमानसे
॥ १३ ॥ जलस्यांतेविधावंतर्जलमेषचचारह ॥ अंतर्जलविधौतस्मिन्विस्मृतध्यानमंत्रधीः
॥ १४ ॥ मृतमात्मानमात्मीयेसदनेऽपश्यदातुरः ॥ प्राणापानप्रवाहेनमुक्तमंतर्धिमागतम्
॥ १५ ॥ आवृतंबंधुभिःखिन्नैर्भार्यययापादयोःश्रितम् ॥ मात्राग्रहीतंचिबुकेनवव्यंजनलांछिते
॥ १६ ॥ अथतत्कालकल्लोलप्रलापाकुलचेष्टितैः ॥ नीतंश्मशानमास्थानंवसापंककलंकितम् ॥
तत्रतेज्वलनेदीप्तेचक्रुस्तंभस्मसाच्छवम् ॥ १७ ॥ अथापश्यदसौगाधिःस्वाधिपीवरयाधिया ॥
हूणमंडलपर्यंतग्रामोपांतनिवासिनाम् ॥ १८ ॥ श्वपचानांस्त्रियोगर्भेस्थितमात्मानमाकुलम् ॥
शनैःपुक्कसयाकालेप्रसूतंमेचकच्छविम् ॥ १९ ॥



अथेति ॥ अष्टभिःश्लोकैःगर्भप्रवेशमारभ्यगाधेरुत्तरोत्तरावस्थानदर्शनम् ॥ १७ ॥ अथेति ॥ स्वाधिपीवरयास्वमनोदुःखस्थूलया ॥ १८ ॥ १९ ॥

संपन्नंश्वपचागारेशिशुंश्वपचवल्लभम् ॥ द्वादशाब्दिकतांत्यक्त्वासंस्थितंषोडशाब्दिकम् ॥२०॥
पीवरांगमुदारांसंपयोदमिवमेदुरम् ॥ तमालल्लतयेवाथवृतंश्वपचकांतया ॥ २१ ॥ स्तनस्तब
कशालिन्यानवपल्लवहस्तया ॥ विश्रांतंवनकुंजेषुसुप्तंगिरिदरीषुच ॥ २२ ॥ निलीनंपत्रकुंजेषु
गुल्मकेषुकृतालयम् ॥ प्रसूतमथशैलेषुपुत्रान्निजकुलांकुरान् ॥ २३ ॥ कलत्रवंतंसंपन्नंस्थितंप्रक्षी
णयौवनम् ॥ संस्थितंमठिकांपर्णैःकृत्वादूरेमुनींद्रवत् ॥ २४ ॥ जराजरठतांयांतंस्वदेहमनुपु
त्रकम् ॥ अथापश्यदसौगाधिर्यावत्तस्यकलत्रिणः ॥ २५ ॥ तत्कलत्रमशेषेणनीतमाहृत्यमृत्यु
ना ॥ ततःशोकपरीतात्माप्रलापविकलाननः ॥ २६ ॥ तंविहायनिजंदेशंविगतःसाश्रुलोचनः ॥
विजहारबहून्देशान्दुःखितश्चितयान्वितः ॥ २७ ॥ एकदाप्रापकीराणांमंडलेश्रीमतींपुरीम् ॥
सामंतैर्ललनाभिश्चनागरैश्चनिरंतरम् ॥ २८ ॥ स्वर्गमार्गोपमंराजमार्गमस्यामवापसः ॥ मणिर
त्नकृतद्वारंतत्रमंगलहस्तिनम् ॥ २९ ॥ ददर्शामलशैलेंद्रमिवसंसारचंचलम् ॥ मृतेराजनिराजा
र्थंविहरंतमितस्ततः ॥ ३० ॥ आलोकयंतमादायतंकरेणसुचारुणा ॥ स्वकंठेयोजयन्मेरुतटेऽर्क
मिवसादरम् ॥ ३१ ॥ तस्मिन्कंठगतेनेदुर्जयदुंदुभयोऽभितः ॥ पूरिताशोऽवनौराजाजयतीति
जनस्वनः ॥ उद्ययौसंप्रबुद्धानांविहगानामिवारवः ॥ ३२ ॥

॥३३॥ ३४ ॥ परीति ॥ परिविसृतनृपौजाः सर्वतःप्रसृतराजतेजाःकतिपयदिवसेहासिद्धदेशव्यवस्थः कतिपयैरल्पैरेवदिवसैरीहासिद्धास्वेच्छामात्रेणैवसिद्धादेशव्यवस्थादेशमर्यादायस्यसःप्रकृतिभिरमात्यादिभिः ऊढोऽशेषोराज्यत्वस्यराज्यस्यभारोयस्य ॥ ३५ ॥ ३६ ॥३७ ॥





तंतत्रवरयामासुर्मंडनार्थंवरांगनाः ॥ तादृशंतमुपाजग्मुःसर्वाःप्रकृतयस्ततः ॥ ३३ ॥ एवंसश्वपचोराज्यंप्रापकीरपुरांतरे ॥ कीरीकरतलांभोजप्रमृष्टचरणांबुजः ॥ ३४ ॥ परिविसृतनृपौजाःसर्वदिक्संस्थिताज्ञःकतिपयदिवसेहासिद्धदेशव्यवस्थः ॥ प्रकृतिभिरलमूढाशेषराजत्वभारःसगवलइतिनाम्नातत्रराजाबभूव ॥ ३५ ॥ वसिष्ठउवाच ॥ विलासिनीभिर्वलितोमंत्रिमंडलपूजितः ॥ वंदितःसर्वसामंतैश्छत्रचामरशोभितः ॥ ३६ ॥ कीरेषुश्वपचोराज्यंवर्षाण्यष्टौचकारह ॥ यदृच्छयैकदायोऽसावतिष्ठत्त्यक्तभूषणः ॥ ३७ ॥ एकएवाजिरंबाह्यंतादृग्वेषःसनिर्ययौ ॥ तत्रापश्यद्घनश्यामंपीनंश्वपचपेटकम् ॥ ३८ ॥ धुनानंवल्लरींतंत्रींकरपल्लवलीलया ॥ एकस्तस्मात्समुत्तस्थौजरावाग्रक्तलोचनः ॥ ३९ ॥ भोकटंजेतिसहसावदन्कीरमहीपतिम् ॥ उवाचेदंसकीरेशंहेबंधोभोकटंजक ॥ ४० ॥ क्वनुस्थितोऽसिदिष्ट्याद्यदृष्टोऽसिचिरबांधव ॥ क्वासिविश्रांतवान्कालमेतावंतंवनांतरे ॥ ४१ ॥ श्वपचोऽग्रेवदत्येवंराजायावत्तयातया ॥ चकारतत्कालतयाचेष्टयैवावधीरणम् ॥ ४२ ॥



तत्रेति ॥ श्वपचपेटकःश्वपचसमूहः ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥

तावद्द्वातायनगताःकांताःप्रकृतयस्तथा ॥ श्वपचोऽयमितिज्ञात्वाम्लानतामलमाययुः ॥ ४३ ॥
सत्वरंप्रविवेशांतःपुरमाम्लानमानवम् ॥ मंत्रिणोनागरानार्यस्ततस्त्वेनंमहीपतिम् ॥ ४४ ॥
नास्प्राक्षुरपितिष्ठंतंगृहएवशवंयथा ॥ एकएवबभूवासौजनमध्यगतोऽपिसन् ॥ ४५ ॥ सार्था
दिगणनिर्मुक्तःपरदेशइवाध्वगः ॥ अथसर्वेवयंदीर्घकालंश्वपचदूषिताः ॥ ४६ ॥ प्रायश्चित्तैर्नशु
द्ध्यामःप्रविशामोहुताशनम् ॥ इतिनिर्णीयनगरेनागरामंत्रिणस्तथा ॥ ४७ ॥ अभितोज्वाल
यित्वाग्निंविविशुःसहबंधुभिः ॥ राजासज्जनसंपर्कपवित्रीकृतधीरधीः ॥ ४८ ॥ एकलश्चिंतया
मासशोकव्याकुलचेतनः ॥ मदर्थमित्यनर्थोऽयंदेशेऽस्मिन्स्थितिमागतः ॥ ४९ ॥ किंमेजीवित
दुःखेनमरणंमेमहोत्सवः ॥ इतिनिश्चित्यगवलोज्वलितेज्वलनेपुरः ॥ ५० ॥ पतङ्गवदनुद्वेगम
करोदाहुतिंवपुः ॥ अत्रांतरेऽनलक्षुब्धोगाधिर्मोहादबुध्यत ॥ ५१ ॥ वसिष्ठउवाच ॥ मुहूर्तंद्वि
तयेनासौगाधिरासीद्गतभ्रमः ॥ कोऽहंकिमिवपश्यामिकिमकार्षमहंकिल ॥ ५२ ॥ एवंविचार
यंश्चित्रमुदस्थादुदकांतरात् ॥ नित्यमेवमनंतासुभ्रमदृष्टिषुदेहिनाम् ॥ ५३ ॥ चेतोभ्रमतिशा
र्दूलोवनराजिष्विवोन्मदः ॥ अवधार्यैतितंचित्तमोहंगाधिर्निनायसः ॥ ५४ ॥ दिनानिकतिचि
त्तस्मिन्स्वकएवाश्रमेतदा ॥ एकदागाधिमागच्छत्कश्चित्प्रियतरोऽतिथिः ॥ ५५ ॥

परमांतृप्तिमानीतःफलपुष्परसाशनैः ॥ अथवंदितसंध्यौतौकृतजप्यावुभावपि ॥ ५६ ॥ क्रमा
च्छयनमासाद्यचक्रतुःपावनीःकथाः ॥ सपप्रच्छातिथिंगाधिःप्रसंगापतितंवचः ॥ ५७ ॥ किंब्रह्म
न्संकृशांगस्त्वंकिमितिश्रमवानसि ॥ ५८ ॥ अतिथिरुवाच ॥ अस्त्यस्मिन्वसुधापीठेउत्तरा
शानिकुंजके ॥ कीरोनामेतिविख्यातःश्रीमाञ्जनपदोमहान् ॥ ५९ ॥ तत्राहमवसंमासंपूज्यमा
नःपुरेजनैः ॥ एकदैकेनतत्रोक्तेकथाप्रस्तावतःक्वचित् ॥ ६० ॥ इहाभूच्छ्वपचोराजावर्षाण्यष्टौ
द्विजेतिमे ॥ सएवांतेपरिज्ञातःप्रविष्टोज्वलनंजवात् ॥ ६१ ॥ ततोद्विजशतानीहप्रविष्टानिहु
ताशनम् ॥ इतितस्यमुखाच्छ्रुत्वातस्मान्निर्गत्यमंडलात् ॥ ६२ ॥ प्रयागेस्नानजप्यादिप्राय
श्चित्तमहंद्विज ॥ कृत्वाचांद्रायणस्यांतेतृतीयस्याद्यपारणम् ॥ ६३ ॥ इहाहमागतस्तेनश्रांतो
ऽस्म्यतिकृशोऽस्मिच ॥ ६४ ॥ वसिष्ठउवाच ॥ इतिविप्रमुखाच्छ्रुत्वाविस्मयोद्धुरयाधिया ॥
गाधिःसंचिंतयामासमद्वृत्तांतोऽयमीदृशः ॥ ६५ ॥ तदात्मश्वपचोदंतंद्रष्टुंगच्छाम्यखिन्नधीः ॥
निर्गत्याथमहाबुद्धिर्देशानुल्लंघ्यभूरिशः ॥ ६६ ॥ तत्तादृशसमाचारंहूणमंडलमासदत् ॥ तेनै
वसंनिवेशेननिजंश्वपचमंदिरम् ॥ ६७ ॥ तथापश्यदथान्यांश्वसंनिवेशानितस्ततः ॥ एवंजा
तान्स्मरन्गाधिःप्राक्तनीःश्वपचक्रियाः ॥ ६८ ॥

॥६९॥७०॥७१॥७२॥७३॥७४॥७५॥७६॥७७॥ विप्रेति ॥ पृथ्व्यादिपृथिव्यादिरूपंजगच्चित्तस्थं चित्तस्यैवजगन्निदानत्वात्तत्रैवतिष्ठतिनबहिःस्थं बहिस्तुवस्तुतोनास्तीत्यर्थः । अयंचार्थःस्वप्नाद्यवस्थासुसर्वैरनुभूयतएव स्वप्नादिषुचित्तगतस्यैवप्रपंचस्यपरिस्फुरणात् ॥७८॥

विस्मयोत्कंपितशिराधातुश्चेष्टांपरामृशत् ॥ हूणमंडलमुत्सृज्यकीरमंडलमाययौ ॥ ६९ ॥
अथात्मनानुभूतानिदृष्टान्यासेवितानिच ॥ स्थानानिनगरेऽपश्यज्जनेभ्यःश्रुतवांस्तथा ॥७०॥
एषाहिमायामहतीतेनमेचक्रधारिणा ॥ दर्शितेत्यधुनासाधुमयास्मृतमखंडितम् ॥ ७१ ॥ इति संचिंत्यनिर्गत्यतस्माद्गाधिर्जनास्पदात् ॥ कंदरांप्राप्यशैलस्यतस्थौतत्रचसिंहवत् ॥ ७२ ॥
तत्रसंवत्सरंसार्धंअपश्चुलुकभोजनः ॥ तपश्चक्रेमहातेजास्तुष्टयेशार्ङ्गधन्वनः ॥ ७३ ॥ अथाजगामशैलेंद्रकंदरेद्विजमंदिरे ॥ पयोधरवदच्छात्मच्छविश्चक्रगदाधरः ॥ ७४ ॥ श्रीभगवानुवाच ॥ विप्रवर्यत्वयादृष्टामायाममगरीयसी ॥ तपोगिरितटेकुर्वन्किमन्यदभिवांछसि ॥ ७५ ॥
दत्तार्घंकीर्णकुसुमंप्रणम्यांगप्रदक्षिणैः ॥ विष्णुमाहद्विजोवाक्यमंभोदमिवचातकः ॥ ७६ ॥
देवएषात्वयामायादर्शितातितमोमयी ॥ तस्याममर्मनजानामिभ्रमःसत्योऽभवत्कथम् ॥ ७७ ॥
श्रीभगवानुवाच ॥ विप्रपृथ्व्यादिचित्तस्थंनबहिस्थंकदाचन ॥ स्वप्नभ्रमपदार्थेषुसर्वैरेवानुभूयते ॥७८॥ यत्रानंतजगज्जालंसंस्थितंतेनचेतसा ॥ श्वपचत्वंप्रकटितंयदितद्विस्मयोऽत्रकिम् ॥७९॥

यत्रेति ॥ यत्रचेतसिअनंतजगज्जालंसंस्थितं तेनसर्वप्रपंचपरिधारिणाचेतसाश्वपचत्वमेकंचेत्प्रकटितंकोनामात्रविस्मयः ॥ ७९ ॥

अवबुद्धेति ॥ प्रतिभासवशात्भ्रांतिवशाच्छ्वपचतायथावबुद्धा तथैवातिथिरायातइति अहमखिलंभ्रमंदृष्टवानितिच प्रतिभासवशादे वावबुद्धमित्यर्थः ॥ ८० ॥ ८१ ॥ ८२ ॥ काकेति ॥ यथात्वच्चेतसिश्वपचस्थितिस्तथायदृच्छयासर्वेषांहूणकीराणांचेतस्यपिश्वपचस्थि

अवबुद्धाश्वपचताप्रतिभासवशाद्यथा ॥ तथैवातिथिरायातोदृष्टवानसिसंभ्रमे ॥ ८० ॥ तथैवो त्थायगच्छामिप्राप्तोऽहंहूणमंडलम् ॥ तथैवेदंकटंजस्यप्राक्तनंसंचितंगृहम् ॥ ८१ ॥ तथैवकीर नगरंप्राप्तोऽसिकथितंचमे ॥ कीरेश्वपचराजत्वंदृष्टवान्विगतभ्रमम् ॥ ८२ ॥ काकतालीययोगे नचेतसिश्वपचस्थितिः ॥ सर्वेषांहूणकीराणांतथैवप्रतिबिंबिता ॥ ८३ ॥ कदाचित्प्रतिभैकैवब हूनामपिजायते ॥ काकतालीयस्थितिवद्धिचित्राहिमनोगतिः ॥ ८४ ॥ योऽसौकटंजकोनाम श्वपचोहूणमंडले ॥ तेनैवसन्निवेशेनसतथैवाभवत्पुरा ॥ ८५ ॥ तथैवविधिवैधुर्यंप्राप्यदेशांतरं गतः ॥ बभूवकीरनृपतिःप्रविवेशानलंततः ॥ ८६ ॥ तवाभूत्केवलंचित्तेस्वसंबंधितयातदा ॥ प्रतिभायातथाभूताकटंजाचारसंस्थितिः ॥ ८७ ॥ अयंसोऽहमिदंतन्मइतिमज्जत्यनात्मवान् ॥ सर्वमेवाहमेवेतितत्त्वज्ञोनावसीदति ॥ ८८ ॥ विप्रापर्यवसानेयंमायासंसृतिनामिका ॥ आ त्मचिंतनयैवेयंक्षयमायातिनान्यथा ॥ ८९ ॥

तिःप्रतिबिंबिता भ्रांतेर्विचित्रत्वादितिभावः ॥ ८३ ॥ ८४ ॥ ८५ ॥ ८६ ॥ ८७ ॥ अयमिति ॥ अयमहंसोऽहंइदमेतन्मइतिभेदंभावय न्अनात्मवाननात्मज्ञोमज्जति संसारसागरेमग्नोभवति । तत्त्वज्ञस्तुसर्वमेवाहं अहमेवसर्वमिति अद्वैतंभावयन्संसारेनावसीदति ॥ ८८ ॥ ८९ ॥

नेति ॥ यस्मात्तत्त्वज्ञः पदार्थेषु विभागानर्थभावनां विभागविषयामनर्थहेतुं भावनां न गृह्णाति तेन हेतुना असौ तत्त्वज्ञो भ्रमहेतुषु मोहेष्वज्ञानेषु ना
वसीदति ॥९०॥ ज्ञानस्येति ॥ ज्ञानस्यात्मतत्त्वज्ञानस्यापरिपूर्णत्वात् परिच्छिन्नविषयत्वात् मनोभ्रमं विनिवारयितुं न शक्नोषि तेनैव हेतुना तेनै
व मनोभ्रमेणाक्रम्यसे परिभूयसे ॥९१॥ चित्तमिति ॥ अस्य जगद्रूपस्य मायाचक्रस्य चक्रमिव भ्रमणहेतोर्मायाप्रपंचस्य चित्तमेव नाभिर्मध्यगत

नगृह्णातिपदार्थेषुविभागानर्थभावनाम् ॥ तेनासौभ्रममोहेषुतत्त्वज्ञोनावसीदति ॥ ९० ॥ ज्ञा
नस्यापरिपूर्णत्वान्नशक्नोषिमनोभ्रमम् ॥ विनिवारयितुंतेनतेनैवाक्रम्यसेक्षणात् ॥ ९१ ॥ चि
त्तंनाभिः किलास्येहमायाचक्रस्यसर्वतः ॥ स्थीयतेचेत्तदाक्रम्यतन्नकिंचित्प्रबाधते ॥ ९२ ॥
त्वमुत्तिष्ठगिरेःकुंजेदशवर्षाणिखिन्नधीः ॥ तपःकुरुततोज्ञानमनंतंसमवाप्स्यसि ॥ ९३ ॥ इत्यु
क्त्वापुंडरीकाक्षस्तत्रैवांतरधीयत ॥ गाधिर्विवेकवशजंवैराग्यंपरमंगतः ॥ ९४ ॥ जगामकरुणा
र्द्रात्मानियमायावनीधरम् ॥ निरस्ताशेषसंकल्पस्तीव्रंतत्राकरोत्तपः ॥ ९५ ॥ दशवर्षाणि
तेनासावात्मज्ञानमवापह ॥९६॥ अरमततदनुस्वांप्राप्यसत्तांमहात्माव्यपगतभयशोकोभोगभू
मावनिच्छः ॥ सततविततजीवन्मुक्तरूपः प्रशान्तः सकलइवशशांकोऽघूर्णितापूर्णचेताः ॥ ९७ ॥

विवरं किल प्रसिद्धं चक्रप्रवृत्तिहेतुत्वात् तत्तादृशं मायाचक्रनाभिभूतं चित्तं कर्म सर्वतः सर्वत्राक्रम्य निरुध्य स्थीयते चेन्निर्विकारमवस्थीयते चेत्तर्हि
तन्मायाचक्रं कर्तृ किंचिदपीषदपि नावबाधते ॥ ९२ ॥ ९३ ॥ ९४ ॥ ९५ ॥ ९६ ॥ अरमतेति ॥ स्वां परिपूर्णां सत्तां महासत्तां प्राप्य अ
रमत आत्मन्येवेति शेषः । अघूर्णितापूर्णचेताः अघूर्णितमभ्रांतम् ॥ ९७ ॥

इतिश्रीसंसारतरणिनाम्निवासिष्ठविवरणउपशमप्रकरणेगाध्युपाख्यानंनामत्रयोविंशःसर्गः ॥ २३ ॥ पूर्वंचित्तोपशतांयेमायावैचित्र्यमुक्तम् । इदानींदृढभूमेर्योगाभ्यासाच्चंचलमपिचित्तमुपशाम्यतीतिउद्दालकोपाख्यानेननिरूप्यते । एवमित्यादिना ॥ पारमात्मिकीपरमात्मसंबंधिनी तच्छक्तिरूपत्वात् ॥ १ ॥ २ ॥ ३ ॥ वर्तमानमिति ॥ क्रमायातं वर्णाश्रमक्रमवशादागतं वर्तमानमेवकार्यंबाह्यधियाअनादरयाबुद्ध्याक्षणमात्रमनुसंदधत् भूतंभविष्यच्चकार्यमभजत् । अननुसंदधानंचित्तमचित्ततांनिर्विकल्पतांयाति ॥ ४ ॥ संकल्पेति ॥ एवमेवकरि

इतिश्रीवाल्मीकीयेमोक्षोपायउपशमप्रकरणेगाधिवृत्तांतकथनंनामत्रयोविंशःसर्गः ॥ २३ ॥

वसिष्ठउवाच ॥ एवमेषातिविततादुर्ज्ञानारघुनंदन ॥ महामोहकरीमायाविषमापारमात्मिकी ॥ १ ॥ अतोवच्मिमहाबाहोमायेयंविषमान्वहम् ॥ असावधानमनसंसंयोजयतिसंकटे ॥ २ ॥ चित्ताक्रमणमात्रात्तुपरमादौषधादृते ॥ प्रयत्नेनापिसंसारमहारोगोनशाम्यति ॥ ३ ॥ वर्तमानं क्रमायातंभजद्बाह्यधियाक्षणम् ॥ भूतंभविष्यदभजद्याितिचित्तमचित्तताम् ॥ ४ ॥ संकल्पाशानुसंधानवर्जनंचेत्प्रतिक्षणम् ॥ करोषितदचित्तत्वंप्राप्तएवासिपावनम् ॥ ५ ॥ चेतनंचित्तरिक्तंहिप्रत्यक्चेतनमुच्यते ॥ निर्मनस्कस्वभावंतुनतत्रकलनामलः ॥ ६ ॥ सासत्यतासाशिवता सावस्थापारमात्मिकी ॥ सर्वज्ञतासासातृप्तिर्ननुयत्रमनःक्षतम् ॥ ७ ॥

ष्यामीतिमानसंकर्मसंकल्पः । इदंमेस्यादितिप्रार्थनमाशा अतीतानुस्मरणमनुसंधानम् ॥ ५ ॥ चेतनमिति ॥ चित्तरिक्तंविकल्पविहीनंचेतनंचैतन्यंप्रत्यक्चेतनंप्रत्यगात्मस्वरूपचैतन्यमुच्यते । तत्रप्रत्यक्चैतन्येनिर्मनस्कस्वभावत्वात्कलनामलःअविद्याकृतःकलंकोनास्ति ॥ ६ ॥ सेति ॥ यत्रयस्यांदशायांमनःक्षतंविनष्टंसैवदशासत्यतानिर्विकारताजीवन्मुक्ततेतियावत् । सैवशिवताविदेहमुक्तातासैवपारमात्मिकीअव

स्था सैवचसर्वज्ञता सैवतृप्तिः आनंदरूपताचेत्यर्थः ॥ ७ ॥ अविवेकादिति ॥ सोद्यमनिश्चयैः उद्यमउत्साहः तत्सहितैर्निश्चयैः आत्मानात्मवि
वेकहेतुभिः प्रमाणतर्कैश्चेतः कर्म अविवेकादात्मनोदेहादावभिमानादुपाहृत्यउद्धृत्यबलात्कारेणपुरुषप्रयत्नेनशास्त्रसत्पुरुषक्रमैरध्यात्मशास्त्रैरा
त्मविदामाचारक्रमैश्चसंयोज्यम् ॥ ८ ॥ अथपंचभिःश्लोकैरात्मानुसंधानमुपदिशति ॥ प्रलपन्निति ॥ प्रलापादिषुसंनिधिमात्रेणतत्प्रवर्तकेस
र्वसाक्षिणिनिर्विकल्पेअनंतेसंविन्मात्रएवतात्पर्यवान्भव ॥ ९ ॥ ममेति ॥ इदंममजन्मसोऽहंअयमहमितिभेदवासनाः संत्यज्यएकनिष्ठत

अविवेकादुपाहृत्यचेतःसोद्यमनिश्चयैः ॥ बलात्कारेणसंयोज्यंशास्त्रसत्पुरुषक्रमैः ॥ ८ ॥
प्रलपन्विसृजन्गृह्णन्नुन्मिषन्निमिषन्नपि ॥ निरस्तमननानंतेसंविन्मात्रपरोभव ॥ ९ ॥ ममे
दंतदयंसोऽहमितिसंत्यज्यवासनाः ॥ एकनिष्ठतयांतस्थसंविन्मात्रपरोभव ॥ १० ॥ मलंसं
वेद्यमुत्सृज्यमनोनिर्मलयन्परम् ॥ आशापाशानलंछित्वास्वसंवित्तिमयोभव ॥ ११ ॥ अशु
भाशुभसंकेतःसंशांताशाविषूचिकः ॥ नष्टेष्टानिष्टदृष्टिस्त्वंसंवित्सारपरोभव ॥ १२ ॥ आत्म
तापरतेत्यक्त्वानिर्विभावोजगत्स्थितौ ॥ यज्ञस्तंभवदात्मानमवलंब्यस्थिरोभव ॥ १३ ॥
तदासंक्षीयतेमोहःसंसारभ्रमकारणम् ॥ निर्मलायांनिराशायांस्वसंवित्तौयदास्थितिः ॥ १४ ॥

यासर्वाधिष्ठानमेकमेवब्रह्मेतितिनिश्चयेन अंतस्थेसंविन्मात्रेतात्पर्यवान्भव ॥ १० ॥ मलमिति ॥ आशारूपान्पाशानलंछित्वासंवेद्यंदृश्य
मेवमलमुत्सृज्यमनः परंनिर्मलयन्स्वसंवित्तिपरोभव ॥ ११ ॥ अशुभेति ॥ अशुभाशुभसंकेतः अविद्यमानः शुभमशुभमितिचसंकेतोभेदो
ल्लेखोयस्य संशांताआशारूपाविषूचिकायस्य नष्टाइष्टदृष्टिः अनिष्टदृष्टिश्चयस्य तादृशस्त्वंसंवित्सारपरोभव ॥ १२ ॥ आत्मतेति ॥ चेतना
चेतनात्मकेप्रपंचेभेदभावनांपरित्यज्यात्मानमेवकेवलमनुसंदधानोयज्ञस्तंभवत्स्थिरोनिर्विकल्पोभव ॥ १३ ॥ १४ ॥

स्वभावमिति ॥ स्वभावमात्मस्वरूपमवलोकयतःसाक्षात्कुर्वतः अतएवानंदमयीसंस्थितिर्यस्यतस्यपुंसः स्वादुमधुरमपिरसायनंरसवद्वस्तु प्रतिविषायतेप्रतिकूलंविषमिवभवति । एतस्यैवानंदस्यान्यानिभूतानिमात्रामुपजीवंतीतिश्रुतेः ॥ १५ ॥ दूरादिति ॥ चित्तेपीवरतांसंसारवासनाभिःस्थूलतांगतेसति आत्मज्ञतादूराद्याति । अभितोमहामेघउत्थितेआलोकलक्ष्मीःप्रकाशसंविदिवेत्यन्वयः ॥ १६ ॥ चित्तस्यकथंपीवरत्वमित्याकांक्षायांपंचभिःश्लोकैःपीनतामाह ॥ अनात्मनीत्यादिना ॥ अनात्मनिदेहादावात्मभावेनहेतुनादेहमात्रेआस्थाआदरोयस्यास्त



स्वभावमालोकयतःस्वानंदमयसंस्थितेः ॥ रसायनमपिस्वादुरामप्रतिविषायते ॥ १५ ॥ दूरादात्मज्ञतायातिचित्तेपीवरतांगते ॥ आलोकलक्ष्मीरभितोमहामेघइवोत्थिते ॥ १६ ॥ अनात्मन्यात्मभावेनदेहमात्रास्थयाधिया ॥ पुत्रदारकुटुंबैश्चचेतोगच्छतिपीनताम् ॥ १७ ॥ अहंकारविकारेणममतामललीलया ॥ इदंममेतिभावेनचेतोगच्छतिपीनताम् ॥ १८ ॥ आधिव्याधिविलासेनसमाश्वासेनसंसृतौ ॥ हेयादेयविभागेनचेतोगच्छतिपीनताम् ॥ १९ ॥ स्नेहेनधनलोभेनलाभेनमणियोषिताम् ॥ आपातरमणीयेनचेतोगच्छतिपीनताम् ॥ २० ॥ दुराशाक्षीरपानेनभोगानिलबलेनच ॥ आस्थादानेनचारेणचित्ताहिर्यातिपीनताम् ॥ २१ ॥

याधिया पुत्रदारादिभिःकुटुंबैःपोष्यवर्गैश्चेतःपीनतांस्थूलतांगच्छति ॥ १७ ॥ अहंकारेति ॥ अहंकाररूपविकारेणइदंममेत्येवंरूपेणभावेन प्रवृत्तायाममतारूपस्यमलस्यलीलाहेलातयाचेतःपीनतांगच्छति ॥ १८ ॥ आधीति ॥ समाश्वासेनशुभनिश्चयेन ॥ १९ ॥ स्नेहेनेति ॥ पुत्रदारादिस्नेहेनआपातरमणीयेनअविचारितरम्येण मणियोषितांलाभेनप्रवृत्तोयोधनलोभस्तेनचचेतःपीनतांगच्छति ॥ २० ॥ दुराशेति ॥ अहिःक्षीरपानेनअनिलप्रचारबलेनसम्यक्करोषीत्याश्वासनेन स्वैरचारेणपीनतांयातितद्वच्चित्तंदुराशादिभिरित्यर्थः ॥ २१ ॥

उद्दालकवदाल्लूनंविशीर्णंपंचभूतकम् ॥ कृत्वाकृत्वाधियाधीरधीरयांतर्विचारय ॥ २२ ॥
श्रीरामउवाच ॥ केनक्रमेणभगवन्मुनिनोद्दालकेनतत् ॥ भूतपंचकमाल्लूनंकृत्वांतःप्रविचारि
तम् ॥ २३ वसिष्ठउवाच ॥ शृणुरामयथापूर्वंभूतवृंदविचारणात् ॥ उद्दालकेनसंप्राप्तापरमा
दृष्टिरक्षता ॥ २४ ॥ गंधमादनशैलेंद्रनाम्नःकाचित्किलस्थली ॥ विद्यतेकीर्णकुसुमाकर्पूरद्रुम
धूसरा ॥ २५ ॥ तत्रकस्मिंश्चिदुच्चितेसानौसफलपादपे ॥ उद्दालकोनाममुनिरासीद्दुद्धामता
पसः ॥ २६ ॥ प्रथमंतुबभूवासावल्पप्रज्ञोविचारवान् ॥ ततःक्रमेणतपसाशास्त्रार्थैर्नियमैर्यमैः
॥ २७ ॥ विवेकमाजगामैनमथेदंसमचिंतयत् ॥ किंतत्प्राप्यंप्रधानंस्याद्यद्विश्रांतौनशोचति
॥ २८ ॥ कदाहंत्यक्तमननेपदेपरमपावने ॥ चिरंविश्रांतिमेष्यामिमेरुशृंगइवांबुदः ॥ २९ ॥
कदाशममुपेष्यंतिममांतर्भोगसंविदः ॥ इदंकृत्वेदमप्यन्यत्कर्तव्यमितिचंचलाः ॥ ३० ॥ क
दाहंबहुकल्लोलांनावापरमयाधिया ॥ परितीर्णोभविष्यामिमत्तांतृष्णातरंगिणीम् ॥ ३१ ॥
ईहितानीहितैर्मुक्तोहेयोपादेयवर्जितः ॥ कदाहंस्वस्तिमेष्यामिस्वप्रकाशपदेस्थितः ॥ ३२ ॥
कदोपशांतमननोधरणीधरकंदरे ॥ समेष्यामिशिलासाम्यंनिर्विकल्पसमाधिना ॥ ३३ ॥

॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥

निरंशेति ॥ निरंशध्यानविश्रांतमूकस्य निरंशध्यानंनिर्विकल्पकसमाधिः । तार्णंतृणमयंकुलायंनीडंवनपुत्रिकावनपतंगिकाः यत्कृतंमधुपौ त्रिकमुच्यते ॥ ३४ ॥ ३५ ॥ ३६ ॥ कदाचिदिति ॥ स्पृशंतीतिस्पर्शाविषयाः बाह्यस्पर्शपरित्यागाद्बाह्यविषयपरित्यागादांतरस्पर्शसं

निरंशध्यानविश्रांतमूकस्यममसूर्धनि ॥ कदातार्णंकरिष्यंतिकुलायंवनपुत्रिकाः ॥ ३४ ॥ इति चिंतापरवशोवनउद्दालकोद्विजः ॥ पुनःपुनस्तूपविश्यध्यानाभ्यासंचकारह ॥ ३५ ॥ विषयै र्नीयमानेतुचित्तेमर्कटचंचले ॥ नसलेभेसमाधानप्रतिष्ठांप्रीतिदायिनीम् ॥ ३६ ॥ कदाचि द्बाह्यसंस्पर्शपरित्यागादनंतरम् ॥ तस्यागच्छच्चित्तकपिरांतरस्पर्शसंचयान् ॥ ३७ ॥ कदा चिदांतरस्पर्शाद्बाह्यंविषयमाददे ॥ तस्योड्डीयमनोयातिकदाचित्रस्तपक्षिवत् ॥ ३८ ॥ कदा चिदुदितार्काभंतेजःपश्यतिविस्तृतम् ॥ कदाचित्केवलंव्योमकदाचिन्निबिडंतमः ॥ ३९ ॥ इतिपर्याकुलंस्वांतःसलुठन्ध्यानवृत्तिषु ॥ अतिपर्याकुलमनाविजहाराररतिर्गिरौ ॥ ४० ॥ स मग्रजनदुःप्रापामेकदाप्राप्यकंदराम् ॥ संशांतसर्वसंचारांमुनिर्मोक्षदशामिव ॥ ४१ ॥ सतां विवेशधर्मात्मागंधमादनकंदराम् ॥ चकारासनमम्लानैःपत्रैरंतस्थगुच्छकम् ॥ ४२ ॥ तस्य प्रस्तारयामासपृष्ठेचारुमृगाजिनम् ॥ तत्रोपाविशदावेशाच्चेतःसतनुतांनयन् ॥ ४३ ॥



चयान्मनोरथपरिकल्पितान्विषयचयान् ॥ ३७ ॥ ३८ ॥ कदाचिदिति ॥ रजसउद्रेकेउदितार्काभंविस्तृतंतेजःपश्यति सत्वोद्रेकेतुकेवलं व्योम तमसउद्रेकेतुनिबिडंतमइतिविवेकः ॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥

बुधवदिति ॥ इदमत्रपद्मासनमभिप्रेतम् । यदुक्तमगस्त्यसंहितायाम् । पादद्वयंसमंसम्यगंकमूलद्वयोपरि ॥ कृतंपद्मासनंह्येतत्प्रशस्तंसर्वकर्मसु ॥ इति । अतएवपार्ष्णिभ्यांपादपृष्ठभागाभ्यांवृषणौधृत्वानियम्येत्येतदुपपद्यते । चकारब्राह्ममंजलिमिति ब्रह्मांजलिर्नामब्रह्मानुध्यानसमयेपरस्पराभिमुखयोरुत्तानयोःपाण्योःसंनिवेशःसचास्यपद्मासनस्यांगम् । यदुक्तमागमांतरे । उत्तानंवामचरणंदक्षिणोरुणिविन्यसेत् । उत्तानंसव्यचरणंवामोरुणिनिवेशयेत् ॥ तन्मध्यऊर्ध्वगोत्तानौवामवामेतरौकरौ । निवेशयेदित्यनुषंगः । स्थित्वानिश्चलदृष्टिभ्यांनासाग्रमवलोकयेत् । इदंपद्मासनंप्राहुर्मुख्यंध्यानादिकर्मस्विति । तथाचकालिदासः । पर्यंकबंधस्थिरपूर्वकायमृज्वायतासन्नमितोभयांसम् ॥ उत्तानपाणिद्वयसंनिवेशात्प्रफुल्लराजीवमिवांकमध्ये इति ॥ ४४ ॥ ४५ ॥ ४६ ॥ अनुधावतीति ॥ विषजांगलंविषवृक्षभूयिष्ठमरण्यम् ॥ ४७ ॥ ४८ ॥ इमाइति ॥ कलनाःकल्पनाःभावाभावमयात्मिकाःसदसद्वस्तुविषयत्वाद्भावमयःअभावमयश्चात्मास्वरूपंयासांताः भयोग्रायभयेनोग्राय ॥ ४९ ॥ शब्दादीति ॥ शब्दादिगाभिःशब्दादीन्विषयाननुगच्छंतीतिशब्दादिगाःताभिः ॥ यस्मादिति ॥ यस्माच्छमा

बुधवत्सुदृढंबध्वापद्मासनमुदङ्मुखः ॥ पार्ष्णिभ्यांवृषणौधृत्वाचकारब्राह्ममंजलिम् ॥ ४४ ॥ वासनाभ्यःसमुद्धृत्यमनोमृगमुपप्लुतम् ॥ निर्विकल्पसमाध्यर्थंचकारेमांविचारणाम् ॥ ४५ ॥ अपिमूर्खमनःकोऽर्थस्तवसंसारवृत्तिभिः ॥ धीमंतोननिषेवंतेपर्यंतेदुःखदांक्रियाम् ॥ ४६ ॥ अनुधावतियोभोगांस्त्यक्त्वाशमरसायनम् ॥ संत्यक्तमंदारवनःप्रयातिविषजांगलम् ॥ ४७ ॥ यदियासिमहीरंध्रंब्रह्मलोकमथापिवा ॥ तन्ननिर्वृतिमाप्नोषिविनोपशमनामृतम् ॥ ४८ ॥ इमाविचित्राःकलनाभावाभावमयात्मिकाः ॥ दुःखायैवभयोग्रायनसुखायकदाचन ॥ ४९ ॥ शब्दादिगाभिरेताभिःकिंमूर्खहतवृत्तिभिः ॥ यस्मात्किंचिदवाप्नोषियस्मिन्वहासिनिर्वृतिम् ॥ तस्माच्चित्तशमेमूर्खनानुधावसिकिंपदम् ॥ ५० ॥

त्किंचित्प्रयोजनंकैवल्यरूपंअवाप्नोषि । यस्मिन्निति ॥ यस्मिन्शमेसतिनिर्वृतिंस्वरूपसुखंवहसिप्राप्नोषितस्मिन्शमेकिमितिपदंनानुधाव सिनानुबध्नासि ॥ ५० ॥ आगत्येति ॥ शब्दानुसारिण्याश्रवणेच्छयाशब्दमनुसरंत्याधियाबुद्धिवृत्त्याऽव्यर्थोतथानोपबृंहितांनिःप्रयोजनेनै वोद्यमेनवर्धितांश्रोत्रतांश्रवणेंद्रियत्वमागत्यमृगवल्लुब्धकगीतासक्तमृगवत्संक्षयंमाव्रज ॥ ५१ ॥ त्वक्त्वमिति ॥ तयाताद‍ृश्यास्पर्शोन्मुखत यास्पर्शार्हसुखानुभवेच्छयादुःखायकेवलंत्वक्त्वंत्वगिंद्रियत्वमागत्य गजीलुब्धगजेंद्रवद्बध्यतांमाएहि ॥ ५२ ॥ रसनेति ॥ दुरंधसांदुर

आगत्यश्रोत्रतांमूर्खव्यर्थोत्थानोपबृंहिताम् ॥ धियाशब्दानुसारिण्यामृगवन्माक्षयंव्रज ॥५१॥
त्वक्त्वमागत्यदुःखायस्पर्शोन्मुखतयातया ॥ मूर्खमाबध्यतामेहिगजीलुब्धगजेंद्रवत् ॥ ५२ ॥
रसनाभावमागत्यगर्धेनांधदुरंधसाम् ॥ मानाशमेहिबडिशपिंडीलंपटमत्स्यवत् ॥ ५३ ॥
चाक्षुषींवृत्तिमाश्रित्यप्रभारूपचयोन्मुखीम् ॥ मागच्छदग्धतांमूर्खकांतिलुब्धपतंगवत् ॥५४॥
घ्राणमार्गमुपाश्रित्यशरीरांभोजकोटरे ॥ गंधोन्मुखतयाबंधंमासमाश्रयभृंगवत् ॥ ५५ ॥
कुरंगालिपतंगेभमीनास्त्वेकैकशोहताः ॥ सर्वैरेतैरनर्थैस्तैर्व्याप्तस्याज्ञकुतःसुखम् ॥ ५६ ॥
हेचित्तवासनाजालंबंधायभवतोऽभितः ॥ यदिशाम्यसितत्त्यक्त्वातदनंतोजयस्तव ॥ ५७ ॥

न्नानांगर्धेनआस्वादनाकांक्षयारसनेंद्रियत्वमागत्य बडिशपिंडीलंपटमत्स्यवन्मानाशमेहि । बडिशंमत्स्यवेधनं पिंडीतद्गतोऽल्पोमांसपिंडः ॥ ५३ ॥ चाक्षुषीमिति ॥ प्रभारूपचयोन्मुखींप्रभावतोलावण्ययुक्तस्वरूपस्य चयेग्रहणेउन्मुखींसावधानाम् ॥ ५४ ॥ घ्राणेति ॥ गंधो न्मुखतयाघ्राणमार्गमुपाश्रित्यशरीरांभोजकोटरेबंधंमासमाश्रयेत्यन्वयः ॥ ५५ ॥ कुरंगेति ॥ एकैकशःएकैकेनशब्दादिविषयेण ॥ ५६ ॥ हेचित्तेति ॥ हेचित्त भवतोबंधायैवाभितोवासनाजालंप्रवर्तते । तद्वासनाजालंत्यक्त्वायदिशाम्यसितत्तर्हितवअनंतोनिरवधिकोजयो

विजयः ॥ ५७ ॥ करोमीति ॥ विचारणावतःआत्मव्यतिरेकेणचित्तंनामकिमितिविचारयतःपुंसःचित्तमेवनास्ति अविचारसिद्धत्वादिदंत यानस्फुरतीत्यर्थः ॥ ५८ ॥ अनंतस्येति ॥ यथाहिदंतिनोबिल्वफलाभ्यंतरवासित्वंनसंभवतितथादेशकालादिभिरपरिच्छिन्नस्यात्मतत्त्व स्यसूक्ष्मेमनसिस्थितिर्नसंभवतीत्यर्थः ॥ ५९ ॥ पादेति ॥ पादांगुष्ठमारभ्यशिरःपर्यंतंकणशोमयाप्रविचारितम् । तत्रपादादिकेशांतेदेहे अहंशब्दार्थःनलब्धः । अहमितिस्थितःपदार्थःकःस्यादितिचित्तंप्रतिविचारः ॥ ६० ॥ भरितेतिश्लोकद्वयंवाक्यम् ॥ यस्यवस्तुनःइयत्ताद

करोम्येषकिमर्थंवातवैतदनुशासनम् ॥ विचारणावतःपुंसश्चित्तत्वमपिनास्तियत् ॥ ५८ ॥
अनंतस्यात्मतत्त्वस्यतन्वीमनसिसंस्थितिः ॥ नसंभवतिबिल्वांतर्वासितादंतिनोयथा ॥ ५९ ॥
पादांगुष्ठाच्छिरोयावत्कणशःप्रविचारितम् ॥ नलब्धोऽसावहंनामकःस्यादहमितिस्थितः ॥ ६० ॥
भरिताशेषदिक्कुंजंपश्याम्येकंजगत्त्रये ॥ संवेदनमसंवेद्यंसर्वत्रविततात्मकम् ॥ ६१ ॥ दृश्यते
यस्यनेयत्तानामपरिकल्पना ॥ नैकतानचनानातास्थूलतानचनाणुता ॥ ६२ ॥ वेदनत्वा
त्सुसंवेद्येमयित्वंदुःखकारणम् ॥ विवेकजेनबोधेनतादिदंहन्यसेमया ॥ ६३ ॥ इदंमांसमिदंर
क्तमिमान्यस्थीनिदेहके ॥ इमेतेश्वासमरुतःकोऽसावहमितिस्थितिः ॥ ६४ ॥

योनदृश्यंतेतादृशमसंवेद्यंप्रकाशांतराप्रकाश्यंसंवेदनमेकमेवभरिताशेषदिक्कुंजंपश्यामीत्यन्वयः ॥ ६१ ॥ इयत्तापरिच्छिन्नत्वम् । एकताएकत्व संख्यायोगः । नानाताभेदः । स्थूलतामहत्तापरिमाणभेदः ॥ ६२ ॥ वेदनत्वादिति ॥ वेदनत्वाज्ज्ञानरूपत्वात्स्वसंवेद्येस्वयंप्रकाशेमयि हे चित्त त्वंदुःखकारणंजायसे तत्तस्मात्कारणादिदंत्वंविवेकजेनबोधेनमयाहन्यसे ॥ ६३ ॥ इदमिति ॥ इदंतयागृह्यमाणेषुमांसादिषुकोऽसा वहंशब्दार्थःनकोऽपि । इदंताहंतयोर्विरोधादिति ॥ ६४ ॥

मासमिति ॥ मांसादीनामात्मनोऽन्यत्वेनप्रतीयमानत्वादहंतानोपपद्यतइत्यर्थः । तत्रबोधोज्ञानेंद्रियव्यापारः ॥ ६५ ॥ इदमिति ॥ घ्रा
णादीन्यपीदंतयाप्रतीयमानत्वान्नाहंशब्दार्थइत्यर्थः । तत्रस्पंदोनामक्रियाहेतुःकर्मेंद्रियगणः ॥ ६६ ॥ अहमिति ॥ इहजगतिसर्वत्रप्रतीय
मानोऽहमेवेतिवाइहप्रतीयमानंकिंचिदपिअहंनेतिवायादृष्टिःसैवसन्मयीवास्तवी । इतरक्रमःपरिच्छिन्नविषयाहंप्रत्ययरूपोनविद्यते । नवास्त
वइत्यर्थः ॥ ६७ ॥ चिरमिति ॥ इत्येवमज्ञाननाम्नाधूर्तेनचिरमहंतयापरिच्छिन्नाहंकारेणपोथितोऽस्मिहिंसितोऽस्मि । दृप्तेनवृकेनअटव्यां

मांसमन्यदसृक्कान्यदस्थीन्यन्यानिचित्तहे ॥ बोधोऽन्यःस्पंदनंचान्यत्कोऽसावहमितिस्थितिः
॥ ६५ ॥ इदंघ्राणमियंजिह्वात्वगियंश्रवणेइमे ॥ इदंचक्षुरयंस्पंदःकोऽसावहमितिस्थितिः ॥६६॥
अहमेवाहिसर्वत्रनाहंकिंचिदपीहवा ॥ इत्येवंसन्मयीदृष्टिर्नेतरोविद्यतेक्रमः ॥ ६७ ॥ चिरम
ज्ञानधूर्तेनपोथितोऽस्मीत्यहंतया ॥ वृकेणदृप्तेनाटव्यांपशुपोतोयथातथा ॥ ६८ ॥ दिष्ट्ये
दानींपरिज्ञातोमयैषोऽज्ञानतस्करः ॥ पुनर्नसंश्रयाम्येनंस्वरूपार्थापहारिणम् ॥ ६९ ॥ वास
नाहीनमप्येतच्चक्षुरादींद्रियंस्वतः ॥ प्रवर्ततेबहिःस्वार्थंवासनानात्रकारणम् ॥ ७० ॥ तस्मा
न्मूर्खाणींद्रियाणित्यक्त्वांतर्वासनांनिजाम् ॥ कुरुध्वंकर्महेसर्वेनदुःखंसमवाप्स्यथ ॥ ७१ ॥
तृष्णयैवाविनष्टाःस्थव्यर्थमिंद्रियबालकाः ॥ कोशकाराःकुक्रमयस्तंतुनेवस्वयंभुवा ॥ ७२ ॥

पशुपोतोगवादेःपशोःशिशुर्यथातथा तद्वदित्यर्थः ॥ ६८ ॥ दिष्ट्येति ॥ इदानींममैषोऽज्ञानरूपस्तस्करःपरिज्ञातोदिष्ट्या फलितंभाग्येने
त्यर्थः । स्वरूपार्थापहारिणं स्वरूपमेवार्थःतदपहारिणंएनमज्ञानतस्करंपुनर्नसंश्रयामि ॥ ६९ ॥ ७० ॥ ७१ ॥ तृष्णयैवेति । स्वयंभुवास्वो
त्पन्नेनैवतंतुनाकोशकारक्रमयइव स्वयंभुवातृष्णयैवव्यर्थंविनष्टाःस्थ ॥ ७२ ॥

हेचित्तेति ॥ सर्वेंद्रियकोश सर्वैश्चक्षुरादिभिःकोशवदुपजीव्य हेचित्त तस्मात्पूर्वोक्ताद्धेतोः सर्वेंद्रियैःऐक्यमुपेत्य आत्मानंस्वीयंरूपंअस त्स्वरूपंअविद्यमानस्वभावमालोक्यविचार्य एकामलबोधं एकःकेवलःअमलश्चबोधोयथास्यात्तथानिर्वाणमुपरतव्यापारमास्वतिष्ठ ॥ ७३ ॥ विषयेति ॥ हेचित्त अनंतांविषयविषविषूचिकांविषयरूपांविषयजन्यविषूचिकांअहंस्थितिवासनांच अभिमतपरिहारमंत्रयुक्त्या इष्टवस्तु परित्यागरूपमंत्रयोगेन निपुणमपास्य विभवोविगतसंसारोभियांभयानामभूमिःभगवान्भव ॥ ७४ ॥ संकल्पेति ॥ संकल्पाएवपादपाय स्मिंस्तृष्णाएवलतायस्मिंस्तन्मनोवनंछित्वा विततांभुवंचिदाकाशरूपामासाद्य यथासुखंविहरामि ॥ ७५ ॥ पदमिति ॥ यतःकेवलोऽस्मि

हेचित्तसर्वेंद्रियकोशतस्मात्सर्वेंद्रियैरैक्यमुपेत्यनूनम् ॥ आलोक्यचात्मानमसत्स्वरूपंनिर्वा
णमेकामलबोधमास्व ॥ ७३ ॥ विषयविषविषूचिकामनंतांनिपुणमहंस्थितिवासनामपास्य ॥
अभिमतपरिहारमंत्रयुक्त्याभवविभवोभगवान्भियामभूमिः ॥७४ ॥ उद्दालकउवाच ॥ संकल्प
पादपंतृष्णालतंछित्वामनोवनम् ॥ विततांभुवमासाद्यविहरामियथासुखम् ॥ ७५॥ पदंतदनु
यातोऽस्मिकेवलोऽस्मिजयाम्यहम् ॥ निर्वाणोऽस्मिनिरंशोऽस्मिनिरीहोऽस्मिनिरीप्सितः ॥७६॥
स्वच्छतोर्जिततासत्ताहृद्यतासत्यताज्ञता ॥ आनंदितोपशमितामानितामुदितोदिता ॥ ७७ ॥

निर्मनस्कत्वात्अतस्तत्पदंब्रह्मभावमनुयातोऽस्मि अतस्तापत्रयशांत्यानिर्वाणोऽस्मिपरिपूर्णत्वान्निरंशोऽस्मि अतश्चावाप्तकामत्वान्निरीप्सि तोऽस्मि ततोनिरीहोऽस्मि ततोजयामीतिसंबंधः ॥ ७६ ॥ स्वच्छतेतिश्लोकत्रयंवाक्यम् ॥ स्वच्छतादयःकांताममहृदयवल्लभाःव्युत्थान दशायांहृदयंविनोदयंतीत्यर्थः । तत्रस्वच्छतामनोमलराहित्यं ऊर्जिततादैन्याभावः सत्तासद्रूपता हृद्यतासर्वप्रियत्वं सत्यताअबाध्यत्वं ज्ञ ताज्ञानिता आनंदिताआनंदस्वरूपता उपशमितानिर्विकारता सदोदितामुदिताच पुण्यकर्मसुप्रीतिः पूर्णताव्याप्तता सत्यावास्तव्युदा

रता उत्कृष्टता कांतिमत्ताब्रह्मचित्ताभिव्यंजिकामुखकांतिः मतासंमता एकताभेदाभावः सर्वैकतासर्वात्मकत्वं निर्भयताविश्रंभः क्षीण
द्वित्वविकल्पिता द्वित्वादिविकल्पाभावः ॥ ७७ ॥७८ ॥७९ ॥ ८० ॥ ओंकारमिति ॥ सम्यगाहतंताडितंलांगूलंमध्यलंबिदंडोयस्य अतए
वआरवंआसमंताद्रवोयस्यतादृशंघंटाकुंडमिवकुंडवन्मंडलाकारांघंटामिवतारस्वरमोंकारमूर्ध्वगतध्वनिंब्रह्मरंध्रव्याप्तंनादमकरोत् ॥८१॥ ओ
मितिश्लोकत्रयंवाक्यम् । ओमित्युच्चारयतस्तस्योद्दालकस्यसंवित्तत्त्वेस्वरूपचैतन्येतदुन्मुखेओंकारानुसारिणियावदोंकारंओंकारानुवृत्तिपर्यं

पूर्णतोदारतासत्याकांतिमत्तैकतामता ॥ सर्वैकतानिर्भयताक्षीणद्वित्वविकल्पिता ॥ ७८ ॥
एतानित्योदिताःस्वस्थाःसुंदर्यःसुभगोदयाः ॥ ममैकात्मरतेर्नित्यंकांताहृदयवल्लभाः ॥ ७९ ॥
वसिष्ठउवाच ॥ इतिनिर्णीयसतयाधियाधवलयामुनिः ॥ बद्धपद्मासनस्तस्थावर्धोन्मीलित
लोचनः ॥ ८० ॥ ओंकारमकरोत्तारस्वरमूर्ध्वगतध्वनिम् ॥ सम्यगाहतलांगूलंघंटाकुंडमिवा
रवम् ॥ ८१ ॥ ओमुच्चारयतस्तस्यसंवित्तत्त्वेतदुन्मुखे ॥ यावदोंकारमूर्ध्वस्थेवितते विमलात्म
नि ॥ ८२ ॥ सार्धअंशात्ममात्रस्यप्रथमेंऽशेस्फुटारवे ॥ प्रणवस्यसमाक्षुब्धप्राणेरणितदेहके
॥ ८३ ॥ रेचकाख्येऽखिलंकायंप्राणनिष्क्रमणक्रमः ॥ रिक्तीचकारपीतांबुरगस्त्यइवसागरम् ॥ ८४ ॥

तंऊर्ध्वस्थेऊर्ध्वमुखेविमलात्मनिवितते व्याप्तेसति ॥ ८२ ॥ सार्धअंशात्ममात्रस्य अर्धेनसहितास्त्रयोंऽशाआत्मास्वरूपंयासांताःसार्धअंशा
त्मानःतामात्रायस्यतादृशस्य अर्धमात्राधिकत्रिमात्रस्येत्यर्थः । प्रणवस्यओंकारस्यसमाक्षुब्धप्राणे समःएकप्रकारःअक्षुब्धश्चप्राणःप्राणवायु
र्यस्मिंस्तादृशेप्रथमेंऽशे अकारात्मकेप्रथमभागेस्फुटारवेव्यक्तध्वनौ रणितदेहकेमुखरितशरीरकेसति ॥ ८३ ॥ रेचकेति ॥ रेचकाख्यःप्राण
निष्क्रमणक्रमःपीतांबुरगस्त्यःसागरमिवाखिलंकायंरिक्तीचकार एतच्चप्रणवस्यसार्धत्रिमात्रत्वंअथर्वशिखायांउपनिषदि । चतुष्पादिदमक्षरं

परंब्रह्मेत्यादिना प्रपंचितम् । वर्णत्रयात्मिकाह्येतेरेचकपूरककुंभकाइतियाज्ञवल्क्यवचनात् रेचकादीनांप्रणवांशभूताकारोकारमकारात्म नांप्रवृत्तिर्युक्तेत्यनुसंधेयम् ॥ ८४ ॥ अतिष्ठदिति ॥ चिद्रसेनचैतन्येनापूरितांबरेप्राणपवनःअतिष्ठत् रेचकेनरेचितःप्राणोंऽबरेनिरुद्धस्तथैवा तिष्ठदित्यर्थः । हृदयाग्निश्चरेचकेनसंधुक्षितोज्वलज्ज्वालःसन्मलिनंपापरूपंवपुर्ददाह ॥ ८५ ॥ यावदिति ॥ एषाप्रणवस्यप्राणायामस्यप्रथ मेक्रमेऽवस्थारेचकरूपायावदिच्छंइच्छानुवृत्तिर्यावत्तावदेवबभूव । नतुहठाद्बलात्कारादेव । कुतः । हियस्मात्कारणाद्धठयोगोदुःखदः हठयो गोनाममहामुद्रादिभिर्बलात्प्राणनिरोधद्वारामनोनिरोधः ॥ ८६ ॥ अथेति ॥ अथप्राणपवनस्यचिद्रसापूरितांबरनिरोधानंतरं समास्थितौ

अतिष्ठत्प्राणपवनश्चिद्रसापूरितांबरे ॥ हृदयाग्निर्ज्वलज्ज्वालोददाहमलिनंवपुः ॥ ८५ ॥ याव दिच्छमवस्थैषाप्रणवप्रथमेक्रमे ॥ बभूवनहठादेवहठयोगोहिदुःखदः ॥ ८६ ॥ अथेतरांशाव सरेप्रणवस्यसमास्थितौ ॥ निष्पंदःकुंभकोनामप्राणानामभवत्क्रमः ॥ ८७ ॥ नबहिर्नांतरेना धोनोर्ध्वंनाशासुतत्रते ॥ संक्षोभमगमन्प्राणाइवसंस्तंभितादृतौ ॥ ८८ ॥ दग्धदेहपुरोवह्निः शशामाशनिवत्क्षणात् ॥ अदृश्यतसितंभस्मशारीरंहिमपांडुरम् ॥ ८९ ॥

समाचित्तस्यस्थितिर्यस्मात्तस्मिन्प्रणवस्यइतरांशावसरेउकारात्मनोद्वितीयांशस्यमूर्तिध्यानावसरे ओमुच्चारयतस्तस्योद्दालकस्यनिष्पंदो निष्कंपःकुंभकःप्राणानांक्रमोऽभवत् । पूर्वंचिद्रसापूरितेंऽबरेनिरुद्धस्यप्राणवायोःतत्रैवांतरेतत्प्रयत्नवशात्कुंभकरूपःक्रमोऽभवदित्यर्थः । अत्र चप्रणवस्यअकारादिवर्णत्रयात्मकत्वाच्चतेषांब्रह्मविष्णुरुद्ररूपत्वात्तत्तन्मूर्तिध्यानपूर्वकंप्रणवजपेनरेचकादिः प्राणायामक्रमःप्रतिपाद्यतइत्यनु संधेयम् ॥ ८७ ॥ तदेवकुंभकस्यनिष्पंदत्वमाह ॥ नेति ॥ बहिःशरीराद्बहिरभ्यंतरेशरीराभ्यंतरे अधऊर्ध्वमिति । यस्मिन्नाकाशदेशेप्रा णनिरोधस्तस्मादधऊर्ध्वंचेत्यर्थः । तत्रकुंभकेदृतौचर्मभस्त्रिकायाम् ॥ ८८ ॥ दग्धेतिश्लोकद्वयंवाक्यम् ॥ दग्धंदेहरूपंपुरंयेनसवह्निःक्षणाद

शनिवच्छशाम ॥ ८९ ॥ यत्रसितेभस्मनिकर्पूरशय्यायांसुखोचितंसुप्तानीवशरीरास्थीनिदृश्यंते तादृशंशरीरंभस्मेवादृश्यतेत्यन्वयः ॥९०॥ तदिति ॥ तदस्थिमद्भस्म चंडपवनेनोर्ध्वंनीतंसत्शरदिअभ्रमिहिकेव प्रालेययुतोमेघइवगगनमावृत्यक्षणात्क्वापियया ॥ ९१ ॥ यावदिति ॥ प्रणवस्यप्रणवात्मकस्यप्राणायामस्यापरेकुंभकरूपेक्रमेएषावस्था यावदिच्छमेवबभूव ॥ ९२ ॥ ततइति ॥ ततःकुंभकानंतरंउपशांतिदेचित्तस्योपशांतिहेतौ प्रणवस्यओंकारस्यतृतीयावसरेमकारात्मकस्यतृतीयांशस्यमूर्तिध्यानावसरेओमुच्चारयतस्तस्यपूरणाद्धेतोःपूरको

यत्रकर्पूरशय्यायांसुप्तानीवसुखोचितम् ॥ शरीरास्थीनिदृश्यंतेनिष्पंदानिसितानिच ॥ ९० ॥ तद्भस्मवायुनानीतंसास्थिवायुरयोजयत् ॥ तच्चंडपवनोद्धूतमावृत्यगगनंक्षणात् ॥ शरदीवाभ्रमिहिकाक्वापिभस्मास्थिवाययौ ॥ ९१ ॥ यावदिच्छमवस्थैषाप्रणवस्यापरेक्रमे ॥ बभूवनहठादेवहठयोगोहिदुःखदः ॥ ९२ ॥ ततस्तृतीयावसरेप्रणवस्योपशांतिदे ॥ पूरणात्पूरकोनामप्राणानामभवत्क्रमः ॥ ९३ ॥ तस्मिन्नवसरेप्राणाश्चेतनामृतमध्यगाः ॥ व्योम्निशीतलतामीयुर्हिमसंस्पर्शसुंदरीम् ॥ ९४ ॥ क्रमाद्गगनमध्यस्थाश्चंद्रमंडलतांययुः ॥ धूमागगनकोशस्थाःशीतलांबुदतामिव ॥ ९५ ॥ कलाकलापसंपूर्णेतेतस्मिंश्चंद्रमंडले ॥ रसायनमहाधाराःसंपन्नाःप्राणवायवः ॥ ९६ ॥



नामप्राणानांक्रमोऽभवत् ॥ ९३ ॥ तस्मिन्निति ॥ तस्मिन्नवसरेपूरकावसरेप्राणाःप्राणवायवोव्योम्निचेतनामृतमध्यगाःचेतनैवामृतंतस्यमध्यगताःसंतोहिमसंस्पर्शेनसुंदरींशीतलतामीयुर्गतवंतः ॥ ९४ ॥ क्रमादिति ॥ गगनमध्यस्थास्तेप्राणाःक्रमाच्चंद्रमंडलतांययुः धूमागगनकोशस्थाःशीतलतांबुदतामिव ॥ ९५ ॥ कलेति ॥ तेप्राणवायवोरसायनस्यामृतस्यमहत्योधाराःसंपन्नाःसुधाधारारूपतांप्राप्ताइत्यर्थः।

धारायाएकत्वेऽपिप्रकृतिभूतप्राणप्राधान्यविवक्षयासंघीभवंतिब्राह्मणाइतिवत्संपन्नाइतिबहुवचनम् ॥ ९६ ॥ सेति ॥ रसायनीअमृतम
यीधाराअंबरात्पुरापूर्वंहरशिरःपतिताआपगाभागीरथीव शेषेअवशिष्टेशारीरभस्मनि पपात ॥ ९७ ॥ ९८ ॥ ९९ ॥ १०० ॥ १ ॥
॥ २ ॥ सौम्यतेति ॥ मौनीसन्मुखेप्राणापानजवंउच्छ्वासनिश्वासरूपंसौम्यतांप्रशांतत्वमनयत् । इंद्रियार्थेभ्यःइंद्रियाणिपृथक्चक्रे प्रत्याज

सापपातांबराद्धाराशेषेशारीरभस्मनि ॥ रसायनीहरशिरःपतितेवपुरापगा ॥ ९७ ॥ उदभू
दिंदुबिंबाभंचतुर्बाहुधरंशुभम् ॥ उद्दालकशरीरंतन्नारायणतयोदितम् ॥ ९८ ॥ रसायनमयाः
प्राणास्तच्छरीरमपूरयन् ॥ ततःकुंडलिनीमंतःपूरयामासुराद्दताः ॥ ९९ ॥ अथपद्मासनगतः
कृत्वादेहस्थितिंदृढाम् ॥ आलानमिवमातंगंनिबद्धेंद्रियपंचकम् ॥ १०० ॥ चिंतयाहृदयांभो
जेचेतोभ्रमरचंचलम् ॥ बलात्संरोधयामाससेतुर्जलमिवद्रुतम् ॥ १ ॥ निमिमीलदृशावर्धप
रिपक्ष्मलपक्ष्मके ॥ निष्पंदतारामधुरेसंध्याकालइवांबुजे ॥ २ ॥ सौम्यतामनयन्मौनीप्रा
णापानजवंमुखे ॥ इंद्रियाणींद्रियार्थेभ्यःपृथक्चक्रेप्रयत्नतः ॥ ३ ॥ बाह्यान्स्पर्शानशेषेणजहौदू
रेसधीरधीः ॥ विलीनानांतरांश्चक्रेस्पर्शानुज्झितदर्शनात् ॥ ४ ॥ रुरोधगुदसंकोचान्नवद्वारा
निलानथ ॥ मुखसंस्थगितःकुंभोरंध्रकोशानिवेतरान् ॥ ५ ॥

हारेत्यर्थः ॥ ३ ॥ बाह्येति ॥ स्पर्शान्विषयान् । दर्शनंवृत्तिज्ञानम् ॥ ४ ॥ रुरोधेति ॥ अथगुदसंकोचाद्वज्रासनादिनामूलाधारनिरोधात्
नवद्वारानिलान्रुरोध ॥ मुखेति ॥ मुखेसंस्थगितआवृतःकुंभःइतरान्रंध्रकोशानिव । मुखेस्थगितेकुंभस्यसूक्ष्मरंध्रेणवायुर्यथानिरुध्यतेतद्वदि

त्यर्थः ॥ ५ ॥ ६ ॥ बभारेति ॥ संयमंशिक्षामागतंप्राप्तंमनःहृदयाकाशेदहराख्येबभारदधार । युक्तिभिरुपायैर्वशीकृतमुन्मत्तंगजंविंध्यस्य खातेबिलइव ॥ ७ ॥ शरदिवद्धुधावनिरस्तवान् ॥ ८ ॥ ९ ॥ विकल्पेति ॥ तमोविकल्पहेतुभूतमज्ञानंलोलकज्जलवन्मर्दितमषीवन्मेचकंम लिनवर्णम् ॥ ११० ॥ तदपीति ॥ तत्तमोऽपिस्वान्तःकरणगतविवेकतउत्सादयामास । ततस्तमस्युपरते तेजःप्रकाशरूपांसत्वगुणवृत्तिंदद



आत्मतत्त्वप्रकाशाढ्यांस्पष्टाकुसुमलांछनाम् ॥ दधारकंधरांवीरोमेरुशृंगशिखामिव ॥ ६ ॥
बभारहृदयाकाशेमनःसंयममागतम् ॥ विंध्यखातइवोन्मत्तगजंयुक्तिवशीकृतम् ॥ ७ ॥ शरन्न
भोवदासाद्यविमलामतिसौम्यताम् ॥ दुधावाथविकल्पौघान्प्रतिभासमुपेयुषः ॥ ८ ॥ आग
च्छतोयथाकामंप्रतिभासान्पुनःपुनः ॥ अच्छिनन्मनसाशूरःखड्गेनेवरणेरिपून् ॥ ९ ॥ विक
ल्पौघेपरेलूनेसोऽपश्यद्धृदयांतरे ॥ तमश्छन्नविवेकार्कंलोलकज्जलमेचकम् ॥ ११० ॥ तदप्युच्छे
दयामाससम्यक्स्वांतविवस्वता ॥ तमस्युपरतेकांतंतेजःपुंजंददर्शसः ॥ तल्लुलावस्थलाब्जाना
वनंबालइवद्विपः ॥ ११ ॥ तेजस्युपरतेतस्यघूर्णमानंमनोमुनेः ॥ निशाब्जवदगान्निद्रांतामप्या
शुलुलावसः ॥ १२ ॥

र्श । दृष्ट्वाचतदपितेजोलुलावचिच्छेद ॥ ११ ॥ तेजसीति ॥ तेजसिसत्ववृत्तावुपरतेतस्यमनोघूर्णमानंविश्रांतिमलभमानंपुनरपिनिद्रांताम सींवृत्तिमगात् । सत्वादिगुणानांपरस्पराभिभवेनपरिणममाणत्वात् । यदुक्तंसांख्ये । प्रीत्यप्रीतिविषादात्मकाःप्रकाशप्रवृत्तिनियमार्थाः । अन्योन्याभिभवाश्रयजननमिथुनवृत्तयश्चगुणाइति ॥ १२ ॥

निद्रेति ॥ व्योमसंविच्छून्याकारा । संविन्मूढंअप्रतिपत्तिजडम् ॥ १३ ॥ ततइति ॥ तेजस्तमोनिद्रामोहादिपरिवर्जितां तेजःप्रभृतीनांस त्वादिगुणपरिणामिरूपत्वात्तद्रहितांकामप्यवस्थांनिर्विकल्पांसमाध्यवस्थामासाद्य मनोविशश्रामआत्मनितस्थौ ॥ १४ ॥ विश्राम्येति ॥ विश्वरूपिणींसर्वात्मिकांअंगसंविदंस्वस्वरूपचैतन्यपूर्णां ब्रह्मात्मैक्यसंविदमित्यर्थः । सेतुनारुद्धंसरोवारि प्रतीपंप्रत्यावृत्तंसत्स्वमास्पदंमूल स्थानभूतंसरइव ॥ १५ ॥ चिरेति ॥ चिरंस्वरूपानुसंधानवशात्स्वसंविदःस्वरूपानंदसंविदःस्वादनादास्वादनाच्च हेमनूपुरतामिवमनश्चि

निद्राव्युपगमेतस्यव्योमसंवित्समुद्ययौ ॥ व्योमसंविदिनष्टायांमूढंतस्याभवन्मनः ॥ मूढम प्येषमनसस्तंममार्जमहाशयः ॥ १३ ॥ ततस्तेजस्तमोनिद्रामोहादिपरिवर्जिताम् ॥ कामप्य वस्थामासाद्यविशश्राममनःक्षणम् ॥ १४ ॥ विश्राम्याशुपपातांगसंविदंविश्वरूपिणीम् ॥ सेतु रुद्धंसरोवारिप्रतीपंस्वमिवास्पदम् ॥ १५ ॥ चिरानुसंधानवशात्स्वादनाच्चस्वसंविदः ॥ मन श्चिन्मयतामागाद्धेमनूपुरतामिव ॥ १६ ॥ चित्तत्वमथसंत्यज्याचित्तंचित्तत्त्वमागतम् ॥ अन्य देवबभूवाशुपंकःकुंभस्थितोयथा ॥ १७ ॥ चेत्यंसंत्यज्यचिच्छुद्धाचित्सामान्यमथाययौ ॥ त्यक्तवीच्यादिभेदोऽब्धिर्वाःसमान्यमिवैकधीः ॥ १८ ॥

न्मयतामागात् ॥ १६ ॥ चित्तत्वमिति ॥ अथानंतरंचित्तंकर्तृ चित्तत्वंचित्तरूपतांसंत्यज्य चित्तत्त्वंचितःपारमार्थिकंरूपंआगतंसत् अन्य देवबभूव चिदेवबभूवेत्यर्थः । कुंभस्थितःपंकोयथा कालातिक्रमाज्जलविलयेसतिपंकरूपंपरित्यज्यकुंभाकारांलोष्टतांयातितद्वदिति ॥ १७ ॥ चेत्यमिति ॥ चित्कर्त्री चेत्यंसंत्यज्यशुद्धासतीचित्सामान्यंसर्वानुवृत्तिचिन्मात्ररूपमाययौ त्यक्तवीच्यादिभेदत्वात् । एकधीरेकाकारबुद्धि गोचरःसन्नब्धिः वाःसामान्यंशुद्धजलभावमिव ॥ १८ ॥

त्यक्तेति ॥ बोधंस्वरूपसाक्षात्कारंआगतः त्यक्तभोगौघमननं संत्यक्तबाह्यांतरिंद्रियवृत्तिकंविश्वंभरंशुद्धं महच्चिदाकाशमभवत् ॥ १९ ॥ तत्रेति ॥ तत्रचिदाकाशेरसायनममृतरूपमर्णवमिवदृश्यदर्शनवर्जितमुत्तमास्वादमनंतमानंदंप्रापत् ॥ २० ॥ शरीरादिति ॥ शरीरात्समतीतःजीवभावादुत्तीर्णः कामप्यवर्निचिदाकाशरूपाम् ॥२१॥ द्विजेति ॥ द्विजचेतनहंसःपरमात्महंसभावमापन्नउद्दालकद्विजरूपश्चेतनइ





त्यक्तभोगौघमननंततोविश्वंभरंमहत् ॥ चिदाकाशंततःशुद्धंसोऽभवद्बोधमागतः ॥ १९ ॥ तत्र प्रापदथानंदंदृश्यदर्शनवर्जितम् ॥ अनंतमुत्तमास्वादंरसायनमिवार्णवम् ॥ २० ॥ शरीरात्समतीतोऽसौकामप्यवनिमागतः ॥ सत्तासामान्यरूपात्माबभूवानंदसागरः ॥ २१ ॥ द्विजचेतनहंसोऽसावानंदसरसिस्थिरः ॥ अतिष्ठच्छरदच्छेखेकलापूर्णइवोडुपः ॥ २२ ॥ बभूवावातदीपाभोलिपिकर्मार्पितोपमः ॥ अवीच्यंबुनिधिप्रख्योवृष्टमूकांबुदस्थितिः ॥ २३ ॥ अथैतस्मिन्महालोकेऽतिष्ठदुद्दालकश्चिरम् ॥ अपश्यद्व्योमगान्सिद्धानमरानपिभूरिशः ॥ २४ ॥ आगतानिविचित्राणिसिद्धिजालानिचाभितः ॥ तानिनादरयांचक्रेसिद्धिवृंदानिसद्विजः ॥ २५ ॥ सिद्धिसार्थमनादृत्यतस्मिन्स्वानंदमंदिरे ॥ अतिष्ठदथषण्मासानद्रिकूटइवोत्तरे ॥ २६ ॥ जीवन्मुक्तपदंतत्तुयत्ससंप्राप्तवान्द्विजः ॥ तत्रसिद्धाःसुराःसाध्याःस्थिताब्रह्महरादयः ॥ २७ ॥



त्यर्थः । उडुपश्चंद्रमाः ॥ २२ ॥ बभूवेति ॥ वृष्टमूकांबुदस्थितिःवृष्टोमुक्तवर्षोमूकोनिःशब्दश्चयोंऽबुदस्तस्येवस्थितिर्यस्य ॥ २३ ॥ २४ ॥ ॥ २५ ॥ २६ ॥ २७ ॥

आनंदेति ॥ यतःकारणात्सउद्दालकःआनंदपरिणामित्वादानंदरूपेणपरिणतत्वात् अनानंदपदंस्वरूपव्यतिरिक्तानंदरहितंपदंगतस्ततः कारणात्तत्संवित्उद्दालकस्यसंविन्निरानंदेआनंदविषयानाबभौनभातिस्म। स्वरूपातिरिक्तस्यानंदस्याभावात् निरानंदेनिरानंदवस्तुविषया चनाबभौ। स्वरूपस्यैवानंदात्मनासर्वत्रावभासमानत्वात् ॥ २८ ॥ तत्पदमिति ॥ तत्पदंजीवन्मुक्तिरूपम् ॥ २९ ॥ दृश्येति ॥ पुनर्भव

आनंदपरिणामित्वादनानंदपदंगतः ॥ आनंदेननिरानंदेततस्तत्संविदाबभौ ॥ २८ ॥ तत्प दंसागतिःशंभोस्तच्छ्रेयःशाश्वतंशिवम् ॥ तत्पदंसाधवःप्राप्यक्षणंवर्षशतंचवा ॥ २९ ॥ दृ श्यदृष्टिंसमायांतिनपुनर्भवकारिणीम् ॥ ३० ॥ उद्दालकोऽत्रषण्मासान्दूरोत्सारितसिद्धिभूः ॥ उषित्वोन्मिषितोऽपश्यत्सिद्धांश्चंद्रवपुर्धरान् ॥ ३१ ॥ विद्याधरीभिर्वलितान्विद्याधरपतीन पि ॥ तेतमूचुर्महात्मानमुद्दालकमुनिंतदा ॥ ३२ ॥ प्रसादेनप्रणामान्तेभगवन्नवलोकय ॥ आ रुह्येदंविमानंत्वमेहित्रैविष्टपंपुरम् ॥ ३३ ॥ स्वर्गएवहिसीमांतोजगत्संभोगसंपदाम् ॥ आ कल्पमुचितान्भुंक्ष्वभोगानभिमतान्विभो ॥ ३४ ॥ एवंकथयतःसिद्धानतिथींनित्यसौमुनिः ॥ परिपूज्ययथान्यायमतिष्ठद्गतसंभ्रमम् ॥ ३५ ॥ नाभ्यनंदततत्याजतांविभूतिंसधीरधीः ॥ भोःसिद्धाव्रजतेत्युक्त्वास्वव्यापारपरोऽभवत् ॥ ३६ ॥

कारिणींसंसारहेतुंदृश्यदृष्टिंप्रपंचस्फुरणाम् ॥ ३० ॥ उद्दालकइति ॥ अत्रसमाधौदूरोत्सारितसिद्धिभूः दूरमुत्सारितानिरस्तासिद्धिभूःस्व र्गादिर्येनचंद्रवपुर्धरांश्चंद्रवन्मनोहरान् ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥

॥ ३७ ॥३८॥३९॥ चित्तत्त्वेति॥ चित्तत्वैकघनाभ्यासात् चित्तत्त्वस्यएकस्यैवघनोनिरंतरोयोऽभ्यासोऽनुसंधानंतस्मान्महाचित्त्वंपरिपूर्णचि तोभावंचिदितिसत्तासामान्यंरामप्रश्नानंतरंस्वयमेववक्ष्यति ॥४० ॥ समेति ॥ समरसंपदंजीवन्मुक्तिपदम् ॥४१॥४२॥ यदेति ॥ अभावा त्यंतभावनात् अनुसंधानात्कालत्रयेऽपिदृश्यंवस्तुतोनास्तीतिश्रुतियुक्त्यनुभवैःनिरंतरमनुसंधानाद्धेतोःयदाचित्तंसम्यक्क्षीयतेविलीयतेतदा

अथस्वकर्मनिरतंभोगेष्वरतिमागतम् ॥ तमुपास्यंययुःसिद्धादिनैःकतिपयैःस्वयम् ॥ ३७ ॥
जीवन्मुक्तःसचमुनिर्विजहारयथासुखम् ॥ यावदिच्छंवनांतेषुमुनीनामाश्रमेषुच ॥ ३८ ॥
कदाचिदह्नामासेनकदाचिद्वत्सरेणच ॥ कदाचिद्वत्सरौघेणध्यानासक्तोव्यबुध्यत ॥ ३९ ॥
चित्तत्त्वैकघनाभ्यासान्महाचित्त्वमुपेत्यसः ॥ चित्सामान्यचिराभ्यासात्सत्तासामान्यमाययौ
॥ ४० ॥ समरसपदलाभप्राप्तिसंशांतचेतागलितजनप्रलापःक्षीणसंदेहदोलः ॥ शरदिनमिवशां
तंव्याततंचोर्जितंचस्फुटममलमचेतस्तद्वपुस्त्वंबभार ॥ ४१ ॥ श्रीरामउवाच ॥ आत्मज्ञानादि
नैकार्कमत्संशयतृणानल ॥ अज्ञानदाहशीतांशोसत्तासामान्यमीशकिम् ॥ ४२ ॥ वसिष्ठउ
वाच ॥ यदासंक्षीयतेचित्तमभावात्यंतभावनात् ॥ चित्सामान्यस्वरूपस्यसत्तासामान्यतातदा
॥ ४३ ॥ नूनंचेत्यांशरहिताचिद्यदात्मानिलीयते ॥ असद्रूपवदत्यच्छासत्तासामान्यतातदा ॥ ४४ ॥

चित्सामान्यस्वरूपस्यात्मनःसत्तासामान्यतासंपद्यते । विक्षेपहेतोश्चित्तस्याभावादात्मनःस्वरूपसत्तैवावशिष्यतइत्यर्थः ॥ ४३ ॥ नूनमिति ॥ यदामनोविलयेसति चिच्चित्तवृत्तिप्रतिफलितचैतन्यंचेत्यांशरहिता घटकस्यचित्तस्याभावात्चेत्यसंबंधरहितासती अत्यच्छाअसद्रूपवदवि

घमानरूपवदात्मनिलीयते तदाआत्मनोघनीभूतचितःसत्तासामान्यतासंपद्यते ॥ ४४ ॥ यदेति ॥ सबाह्याभ्यंतरात्मकंइदंसर्वंकिंचिद पिअपलप्यनिर्ह्रत्य नास्तीतिनिश्चित्येत्यर्थः । चेतःकर्तृ यदाआत्मनिवसेतलीयतेतदासत्तासामान्यता ॥ ४५ ॥ कूर्मेति ॥ दृश्यानिचि त्तस्यांतर्मुखत्वादभावितान्येवअननुसंहितान्येवसंति । यदाकूर्मोंगानीवआत्मनिस्वात्मनैवप्रयत्नंविनैवलीयंतेतदासत्तासामान्यता ॥४६॥ दृष्टिरिति ॥ तुर्यातीतपदाभिधाएषापरमादृष्टिर्ज्ञानावस्था सादेहादेहयोर्मुक्तयोःसंभवत्येव । जाग्रदाद्यवस्थात्रयेऽनुवृत्तंसाक्षिचैतन्यंतुर्यंविश्व

यदासर्वमिदंकिंचित्सबाह्याभ्यंतरात्मकम् ॥ अपलप्यवसेच्चेतःसत्तासामान्यतातदा ॥ ४५ ॥
कूर्मोंऽगानीवदृश्यानिलीयंतेस्वात्मनात्मनि ॥ अभावितान्येवयदासत्तासामान्यतातदा ॥४६॥
दृष्टिरेषाहिपरमासदेहादेहयोःसदा ॥ मुक्तयोःसंभवत्येवतुर्यातीतपदाभिधा ॥ ४७ ॥ व्युत्थि
तस्यभवत्येषासमाधिस्थस्यचानघ ॥ ज्ञस्यकेवलमज्ञस्यनभवत्येवबोधजा ॥ ४८ ॥ अस्यां
दृष्टौस्थिताःसर्वेभुविमुक्तामहारसाः ॥ अस्मत्प्रभृतयःसर्वेनारदाद्याश्चराघव ॥ ४९ ॥ ब्रह्मवि
ष्णवीश्वराद्याश्चदृष्टावस्यांव्यवस्थिताः ॥ एतामालंब्यपदवींसमस्तभयनाशिनीम् ॥ ५० ॥ उद्दा
लकोऽसाववसद्यावदिच्छंजगद्गृहे ॥ अथकालेनमहताबुद्धिस्तस्यबभूवह ॥ ५१ ॥ विदेहमुक्त
स्तिष्ठामिदेहंत्यक्त्वेतिनिश्चला ॥ एवंचिंतितवानद्रेर्गुहायांपल्लवासने ॥ ५२ ॥

तैजसप्राज्ञरूपजाग्रदाद्यभिमानिचैतन्यापेक्षयाचतुर्थमित्यर्थः । इयंतुज्ञानदशा तच्चतुष्टयातीतत्वात्तुर्यातीतशब्दवाच्या ॥ ४७ ॥ व्युत्थित स्येति ॥ एषापूर्वोक्ताअवबोधजास्वरूपज्ञानजनितादृष्टिर्ज्ञस्यव्युत्थितस्यसमाधिस्थस्यचकेवलंभवति अज्ञस्यतुनभवत्येव ॥ ४८ ॥ अस्या मिति ॥ भुविरसाःषड्रसाइव ॥ ४९ ॥ ५० ॥ ५१ ॥ ५२ ॥

॥ ५३ ॥ संयम्येतिसार्धश्लोकचतुष्टयंवाक्यम् । मात्रास्पर्शान् मीयंतेआभिर्विषयाइतिमात्राइंद्रियाणि स्पृशंतइतिस्पर्शाविषयाः मात्राश्च स्पर्शाश्चतानिंद्रियाणिविषयांश्वविचिन्वानःप्रत्याहरन् भावितस्वात्मचिद्धनःभावितःस्वात्मास्वस्वरूपभूतःचिद्धनोयेन ॥ ५४ ॥ समसंस्थानकंधरः सममकुटिलंसंस्थानंसंनिवेशोयस्यास्तादृशीकंधराग्रीवायस्य तालुमूलांतरालग्नजिह्वामूलःतालुमूलयोःकाकुदमूलदेशयोःआंतरेलग्नं आलग्नंजिह्वामूलंयस्येत्यनेननभोमुद्रादर्शिता । याहिखेचरीत्युच्यते । तदुक्तंविवेकमार्तंडे । महामुद्रांनभोमुद्रामुड्डीयानंजलंधरम् ॥ मूलबंधंचयोवेत्तिसयोगीसिद्धिभाजनमित्युपक्रम्य । कपालकुहरेजिह्वाप्रविष्टाविपरीतगा । भ्रुवोरंतरगाद‍ृष्टिर्मुद्राभवतिखेचरीति ॥ ५५ ॥ न

बद्धपद्मासनस्तस्थावधोन्मीलितलोचनः ॥ ५३ ॥ संयम्यगुदसंरोधाद्द्वाराणिनवचेतसा ॥ मात्रास्पर्शान्विचिन्वानोभावितस्वात्मचिद्धनः ॥ ५४ ॥ संरुद्धप्राणपवनःसमसंस्थानकंधरः ॥ तालुमूलांतरालग्नजिह्वामूलोल्लसन्मुखः ॥ ५५ ॥ नबहिर्नांतरेनाधोनोर्ध्वमर्थेनशून्यके ॥ संयोजितमनोदृष्टिर्दंतैर्दंतानसंस्पृशन् ॥ ५६ ॥ प्राणप्रवाहसंरोधसमस्वच्छाननच्छविः ॥ ५७ ॥ अंगचित्संविदुत्थानरोमकंटकितांगभूः ॥ अंगचित्संविदाभ्यासाच्चित्सामान्यमुपाददे ॥ ५८ ॥ तदभ्यासादवापांतरानंदस्पंदमुत्तमम् ॥ तदास्वादनतोलीनश्चित्सामान्यदशाक्रमम् ॥ ५९ ॥

बहिरिति ॥ विषयांतरेणसंयोजितमनोदृष्टीयेनतादृशःसन्नर्थेभाविरूपेशून्येअभावरूपेच दंतैर्दंतानसंस्पृशन्नित्यपिखेचर्याआनुगुण्यमुक्तम् ॥ ५६ ॥ ५७ ॥ अंगचित्संविदुत्थानरोमकंटकितांगभूः अंगचित्स्वरूपचैतन्यंतस्याःसंवित्साक्षात्कारःतस्याउत्थानमुदयस्तेनरोमकंटकितासंजातहर्षाअंगभूःशरीरंयस्य स्वस्वरूपसाक्षात्कारहर्षेणरोमांचितगात्रइत्यर्थः । अंगचित्संविदाभ्यासात्स्वरूपानुसंधाननैरंतर्याच्चित्सामान्यंसर्वानुवृत्तंचिन्मात्रमुपाददे ॥ ५८ ॥ तदित्यर्धवाक्यम् ॥ तदाभ्यासाच्चित्साम्यानुसंधानात् ॥ तदेति ॥ तदास्वादनतःपरानंदानुभ

वात् लीनचित्सामान्यदशाक्रमं विलीनचिद्वृत्तिस्फुरणम् ॥ ५९ ॥ विश्वंभरंपरिपूर्णंअनंतात्माऽपरिच्छिन्नंसत्तासामान्यमाययौ ॥ ६० ॥ तस्थाविति ॥ अर्धमेकंवाक्यम् । समशमाभोगःएकाकारशमविस्तारः ॥ ६१ ॥ अनानंदेतिसार्धश्लोकद्वयंवाक्यम् ॥ अनानंदशमानंदमुग्धमुग्धमुखद्युतिःअनानंदस्यनिरानंदस्यवस्तुनःशमादुचिता आनंदमुग्धाआनंदमयीमुग्धामनोहरामुखच्छविर्यस्य । आनंदजामुखच्छविरपि रोमहर्षाद्यानंदविकाराभावादानंदजन्येतिनज्ञायतइत्यर्थः । सानंदमपिसुखंनिर्विकारतयानिरानंदमिवाभूदितियावत् । लिपिकर्मा

विश्वंभरमनंतात्मसत्तासामान्यमाययौ ॥ शुद्धचित्संविदभ्यासाच्चित्सामान्यमुपाययौ ॥६०॥
तस्थौसमशमाभोगःपरांविश्रांतिमागतः ॥ ६१ ॥ अनानंदशमानंदमुग्धमुग्धमुखद्युतिः ॥
संशांतानंदपुलकःपदंप्राप्यामलंतदा ॥ ६२ ॥ चिरकालपरिक्षीणमननादिभवभ्रमः ॥ बभूव
समहासत्त्वोलिपिकर्मार्पितोपमः ॥ ६३ ॥ उपशशामशनैर्दिवसैरसौकतिपयैःस्वपदेविमला
त्मनि ॥ तरुरसःशरदंतइवामलेरविकरौजसिजन्मदशातिगः ॥ ६४ ॥ गतसकलविकल्पो
निर्विकाराभिरामोनिखिलभयविनाशोपाधिनिर्मुक्तमूर्तिः ॥ विगलितमुखमाद्यंतत्सुखंप्रापय
स्मिंस्तृणमिवजलराशावूह्यतेशक्रलक्ष्मीः ॥ ६५ ॥

र्पितोपमइतिनिर्विकारत्वेदृष्टांतः । शरदिंदुनासमइतितुप्रकाशानंदमयत्वे ॥ ६२ ॥ ६३ ॥ उपशशामेति ॥ असौउद्दालकःजन्मदशातिगःसंसारदशामतिक्रांतःसन् विमलात्मनिस्वपदेस्वस्वरूपएवोपशशाम । शरदंतेशरत्कालावसाने तरुरसःअमलेरविकरौजसीवसूर्यतेजसीव । आदित्याज्जायतेवृष्टिरितिस्मरणात् । तरुरसस्यआदित्यतेजसिस्वकारणेलयोयुज्यते ॥ ६४ ॥ गतेति ॥ यस्मिन्मुखेशक्रलक्ष्मीरपि जलराशौतृणमिवतुच्छत्वेनोह्यतेउत्प्रेक्षतेतदाद्यंसुखंप्राप ॥ ६५ ॥

अपरिमितेति ॥ पूर्वश्लोकेसुखंप्रापेतिभेदप्रतीतेरपरितोषात्इहश्लोकेसब्रह्मणःपूर्णसुखंबभूवेत्यभेदःप्रतिपाद्यते ॥ ६६ ॥ इतिश्रीमोक्षोपायउपशमप्रकरणेचतुर्विंशःसर्गः ॥ २४ ॥ पूर्वंयोगाभ्यासदार्ढ्येनचित्तविश्रांतिःस्यात्सैवसमाधेरुत्तमावस्थेत्युक्तम् । इदानींसैवचित्तविश्रांतिःजीवन्मुक्तिसीमेतिसुरघूपाख्यानेनप्रतिपाद्यते । तत्रतावद्धितमुपदिशति ॥ क्रमेणेत्यादिना ॥ अनेनक्रमेणपूर्वोक्तेनोद्दालकसमाचारक्रमेण ॥ १ ॥ २ ॥ वैराग्येति ॥ वैराग्यंवैतृष्ण्यं अभ्यासःसर्वदृश्यक्षयानुसंधानं शास्त्रार्थःअध्यात्मशास्त्रतत्त्वज्ञानं प्रज्ञात्रैकालिकीव

अपरिमितनभोऽन्तर्व्यापिदिग्व्यापिपूर्णंभुवनभरणशीलंभूरिभव्योपसेव्यम् ॥ कथितगुणमतीतंसत्यमानंदमाद्यंसुखममृतमनंतंब्रह्मणोऽसौबभूव ॥ ६६ ॥ इतिश्रीवाल्मीकीयेमोक्षोपायउपशमप्रकरणउद्दालकोपाख्यानंनामचतुर्विंशःसर्गः ॥ २४ ॥ वसिष्ठउवाच ॥ क्रमेणानेनविहरन्विचार्यात्मानमात्मना ॥ विश्रांतिमेहिविततेपदेपद्मदलेक्षण ॥ १ ॥ शास्त्रार्थगुरुचेतोभिस्तावत्तावद्विचार्यते ॥ सर्वदृश्यक्षयाभ्यासाद्यावदासाद्यतेपदम् ॥ २ ॥ वैराग्याभ्यासशास्त्रार्थप्रज्ञागुरुयमक्रमैः ॥ पदमासाद्यतेपुण्यंप्रज्ञयैवैकयाथवा ॥ ३ ॥ संप्रबोधवतीतीक्ष्णाकलंकरहितामतिः ॥ सर्वसामग्र्यहीनापिप्राप्यंप्राप्नोतिशाश्वतम् ॥ ४ ॥ श्रीरामउवाच ॥ भगवन्भूतभव्यज्ञकश्चिज्ज्ञातसमाधिकः ॥ प्रबुद्धइवविश्रांतोव्यवहारपरोऽपिसन् ॥ ५ ॥

स्तुतत्वपरीक्षा गुरुर्गुरूपदेशः यमक्रमःयमनियमादिक्रमःतैः । प्रज्ञयैवेति । परिपक्वांतःकरणेनप्रज्ञयैकयापरंपदमासाद्यतइत्यर्थः ॥ ३ ॥ प्रज्ञयैवेत्येतदुपपादयितुमाह ॥ संप्रबोधेति ॥ तीक्ष्णावस्तुस्वरूपपरिच्छेदिका सर्वसामग्र्यंनामपूर्वोक्तंवैराग्यादिकम् ॥ ४ ॥ भगवन्निति श्लोकद्वयेनप्रश्नः । कश्चिन्मुमुक्षुःजातसमाधिकःकदाचित्प्राप्तसमाधिसुखःप्रबुद्धइवसुप्तोत्थितइवव्यवहारपरोऽपिसन् विश्रांतःस्वात्मन्येवा

भिरमते ॥ ५ ॥ कश्चित्पुनरेकांतमाश्रित्यसमाधौनियमस्थितः तयोर्मध्येकतरः श्रेयानित्येतद्वद ॥ ६ ॥ इममिति ॥ गुणसमाहारंसत्वा दिगुणसमुदायरूपं इमंप्रपंचमनात्मत्वेनपश्यतः पुरुषस्ययांतःशीतलता अमृतसागरनिमग्नस्येवयासंतापनिवृत्तिः असौसमाधिरितिकथ्यते ॥ ७ ॥ दृश्यैरितिश्लोकद्वयंवाक्यम् ॥ यस्मात्कारणादंतःशीतलतैवानंतस्यतपसः फलं तस्मादंतःशीतलत्वेसतिद्वयोःसामान्यमेवेतिपूर्वेणै

कश्चिदेकांतमाश्रित्यसमाधिनियमस्थितः ॥ तयोस्तुकतरः श्रेयानितिमेभगवन्वद ॥ ६ ॥
वसिष्ठउवाच ॥ इमंगुणसमाहारमनात्मत्वेनपश्यतः ॥ अंतःशीतलतायासौसमाधिरितिक
थ्यते ॥ ७ ॥ दृश्यैर्ममनसंबंधइतिनिश्चित्यशीतलः ॥ व्यवहारेस्थितः कश्चित्कश्चिद्ध्यानव्यव
स्थितः ॥ ८ ॥ द्वावेतौरामसुखिनावंतश्चेत्परिशीतलौ ॥ अंतःशीतलतायास्यात्तदनंततपःफल
म् ॥ ९ ॥ समाधिस्थानसंस्थस्यचेतश्चेद्वृत्तिचंचलम् ॥ तत्तस्ययत्समाधानंसममुन्मत्ततांडवैः
॥ १० ॥ उन्मत्ततांडवस्थस्यचेतश्चेत्क्षीणवासनम् ॥ तदस्योन्मत्तनृत्यंतुसमंबुद्धसमाधिना
॥ ११ ॥ व्यवहारीप्रबुद्धोयःप्रबुद्धोयोवनेस्थितः ॥ द्वावेतौसुसमौनूनमसंदेहपदंगतौ ॥ १२ ॥
अकर्तृकुर्वदप्येतच्चेतःप्रतनुवासनम् ॥ दूरंगतमनाजंतुःकथासंश्रवणेयथा ॥ १३ ॥

वान्वयः ॥ ८ ॥ ९ ॥ चित्तविश्रांतेरेवशीतलतारूपायाःप्राधान्यमन्वयव्यतिरेकाभ्यांश्लोकद्वयेनाह । समाधीति ॥ वृत्तिचंचलंहर्षविषा दादिभिःक्षुभितंतत्तर्हि । यदुक्तंभगवता । कर्मेंद्रियाणिसंयम्ययआस्तेमनसास्मरन् । इंद्रियार्थान्विमूढात्मामिथ्याचारःसउच्यतइति ॥१०॥११॥ व्यवहारीति ॥ प्रबुद्धःअवगतात्मतत्त्वः असंदेहपदंअसंदिग्धमात्मतत्त्वम् । छिद्यंतेसर्वसंशयाइतिश्रुतेः ॥१२॥ अकर्त्रिति ॥

चेतःप्रतनुवासनंचेत्कुर्वदपिशरीरेंद्रियाणिप्रवर्तयदपिअकर्त्रैव। कथासंश्रवणेदूरंगतमनाजंतुर्यथा सहिपुराणकथामासन्नतयाशृण्वन्नपिनशृ णोत्येव ॥ १३ ॥ अकुर्वदिति ॥ चेतःप्रघनवासनंचेदकुर्वदपिकर्त्रैव। यथास्वप्नेश्वभ्रपातस्थितौश्वभ्रेपुराणकूपादौपतामीत्येवंप्रतीतौ निष्पं दांगमपि शरीरेक्रियामनुत्पादयदपिचेतःकर्त्रैव भयकंपादिहेतुत्वात्तद्वदिति ॥ १४ ॥ १५ ॥ चेतइति ॥ चेतएवाचंचलत्वेनध्यानदृशः कारणं चंचलत्वेनाध्यानदृशःकारणमित्यर्थः। पाठक्रमादर्थक्रमोबलीयानितिन्यायात्। अनंकुरंनिर्वासनम् ॥ १६ ॥ अवासनमिति ॥ शां

अकुर्वदपिकर्त्रैवचेतःप्रघनवासनम् ॥ निष्पंदांगमपिस्वप्नेश्वभ्रपातस्थिताविव ॥ १४ ॥
चेतसोयदकर्तृत्वंतत्समाधानमुत्तमम् ॥ तंविद्धिकेवलीभावंसाशुभानिर्वृतिःपरा ॥ १५ ॥
चेतश्चलाचलत्वेनपरमंकारणंस्मृतम् ॥ ध्यानाध्यानदृशोस्तेनतदेवानंकुरंकुरु ॥ १६ ॥ अवा
सनंस्थिरंप्रोक्तंमनोध्यानंतदेवच ॥ सएवकेवलीभावःशांततैवचतत्सदा ॥ १७ ॥ तनुवास
नमत्युच्चैःपदायोद्यतमुच्यते ॥ अवासनंमनःकर्तुपदंतस्मादवाप्यते ॥ १८ ॥ घनवासनमेत
त्तुचेतःकर्तृत्वभावनम् ॥ सर्वदुःखप्रदंतस्माद्वासनांतनुतांनयेत् ॥ १९ ॥ चेतसासंपरित्यज्य
सर्वभावात्मभावनाम् ॥ यथातिष्ठसितिष्ठत्वंतथाशैलेगृहेऽथवा ॥ २० ॥ गृहमेवगृहस्थानां
सुसमाहितचेतसाम् ॥ शांताहंकृतिदोषाणांविजनावनभूमयः ॥ २१ ॥

तत्तैवचतत्सदा तदेवस्थिरंमनःशांतताचेत्यर्थः। उद्दिश्यमानप्रतिनिर्दिश्यमानयोरैक्यमापादयंतिसर्वनामानिपर्यायेणतल्लिंगभांजिभवती तिन्यायेनसएवकेवलीभावइत्यत्र विधेयलिंगोपादानंतदेवशांततेत्यत्रोद्देश्यलिंगोपादानमितिद्रष्टव्यम् ॥ १७ ॥ तनुवासनमितिश्लोकद्व येन। वासनातानवंचित्तकर्तृत्वभावंकर्तृत्वंभावयत् ॥ १८ ॥ १९ ॥ चेतसेति ॥ सर्वभावात्मभावनांसर्वभावात्मिकांवासनाम् ॥ २० ॥ २१ ॥

यथेति ॥ विपणिगाः पण्यवीथिगताः लोकाजनाः विहरंतोऽपि देशांतरादागतस्य पांथस्य यथा असत्समाः असंतइव नोपकुर्वंति । कुतः असंबंधात् तैः सह संबंधाभावात् । तथा ज्ञस्य ज्ञानिनो ग्रामोऽपि विपिनोपमः अरण्यमिव नविक्षेपहेतुरित्यर्थः ॥ २२ ॥ अंतरिति सार्धश्लोको वाक्यम् ॥ यस्मादंतर्मुखस्थितेः सर्वमाकाशतामेति तस्मादसौ पुरादिकं सर्वमरण्यमिव पश्यतीत्यन्वयः ॥ २३ ॥ अंतरिति ॥ चित्ते शीतले जगच्छीतलत्वं तप्तेऽनुतप्तत्वमित्यर्थः ॥ २४ ॥ तदेवोपपादयितुमाह ॥ भवतीति अर्धत्रयमेकं वाक्यम् । यस्मादखिलजंतूनां अंतर्यद्वर्तते तदेव बहिः

यथाविपणिगालोकाविहरंतोऽप्यसत्समाः ॥ असंबंधात्तथाज्ञस्यग्रामोऽपिविपिनोपमः ॥ २२ ॥
अंतर्मुखमनानित्यंसुप्तोबुद्धोव्रजन्नटन् ॥ पुरंजनपदंग्राममरण्यमिवपश्यति ॥ सर्वमाकाशता
मेतिनित्यमंतर्मुखस्थितेः ॥ २३ ॥ अंतःशीतलतायांतुलब्धायांशीतलंजगत् ॥ अंतस्तृ
ष्णोपतप्तानांदावदाहमयंजगत् ॥ २४ ॥ भवत्यखिलजंतूनांयदंतस्तद्बहिःस्थितम् ॥ द्यौःक्ष
मावायुराकाशंपर्वताःसरितोदिशः ॥ अंतःकरणतत्त्वस्यभागाऽबहिरिवस्थिताः ॥ २५ ॥ य
स्त्वात्मरतिरेवांतःकुर्वन्कर्मेंद्रियैःक्रियाः ॥ नवशोहर्षशोकाभ्यांससमाहितउच्यते ॥ २६ ॥
आत्मवत्सर्वभूतानिपरद्रव्याणिलोष्टवत् ॥ स्वभावादेवनभयाद्यःपश्यतिसपश्यति ॥ २७ ॥
अद्यैवमृतिरायातुकल्पांतनिचयेनवा ॥ नासौकलंकमाप्नोतिहेमपंकगतंयथा ॥ २८ ॥

स्थितं भवति । द्यौरित्यादयोऽपि अंतःकरणतत्त्वस्य भागा एव बहिरवस्थिताः । तस्मादंतःकरणवृत्तिरेव प्रधानमित्यर्थः । द्यौः स्वर्लोकः आकाशमंतरिक्षम् ॥ २५ ॥ यस्त्विति ॥ यस्तु इंद्रियैः कर्म कुर्वन्नपि आत्मरतिरात्मनिष्ठ एव हर्षशोकाभ्यां हेतुभ्यां नवशस्तत्साधनाधीनो न भवति स समाहित इत्यन्वयः ॥ २६ ॥ २७ ॥ २८ ॥

सर्वमिति ॥ आभास्वरंसर्वत्रप्रकाशमानं स्वदनमात्रंसर्वरसास्वादहेतुः । पूर्वार्धविशेषणैर्बहुभिरभिसंबंधात्अद्वैतभंगमाशंक्याह । सर्वंप्रशांत मित्यादिभिर्विशेषणैर्याभेदोल्लेखिनीशब्दमयीदृष्टिःसाबोधार्थमेवकल्पिताहि । ततोहेतोर्मुधैव तत्तस्मादिदंसर्वमोमित्येववक्तव्यं ओंकारस्यै वपरब्रह्मत्वप्रतिपादकत्वात् ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ किमर्थमिति ॥ एवंलोकेयंत्रमिवतैलाकर्षणायकल्पितंतिलयंत्रमिव ॥ ३४ ॥

सर्वंप्रशांतमजमेकमनादिमध्यमाभास्वरंस्वदनमात्रमचिंत्यचित्तम् ॥ सर्वंप्रशांतमितिशब्द मयीतुदृष्टिर्बोधार्थमेवहिमुधैवतदोमितीदम् ॥ २९ ॥ वसिष्ठउवाच ॥ अत्रैवोदाहरंतीममि तिहासंपुरातनम् ॥ किरातेशस्यसुरघोर्वृत्तांतंविस्मयास्पदम् ॥ ३० ॥ हिमाद्रेःशृंगमस्तीह कैलासोनामपर्वतः ॥ तस्यहेमजटानामकिराताःसंस्थितास्तले ॥ ३१ ॥ आसीत्तेषामुदारा त्माराजापरपुरंजयः ॥ सुरघुर्नामबलवान्सुरयोधादिदर्पहा ॥ ३२ ॥ सचक्रेराजकार्याणिनि ग्रहानुग्रहक्रमैः ॥ तज्जाभ्यांसुखदुःखाभ्यांमतिस्तस्याभ्यभूयत ॥ ३३ ॥ किमर्थंपीडयाम्ये वंतिलान्यंत्रमिवौजसा ॥ सर्वेषामेवभूतानांममैषार्तिःप्रजायते ॥ ३४ ॥ अथवानिग्रहंप्राप्तं करोम्येतेनवैविना ॥ वर्ततेनप्रजाचेयंविनावारिसरिद्यथा ॥ ३५ ॥

अथेति ॥ अथवाप्राप्तंनिग्रहंकरोमि यस्ययोदंडोधर्मःशास्त्रेयोग्यतयानिरूपितः तस्यतंदंडंकरोमीत्यर्थः । यस्माद्धेतोरनेननिग्रहेणविना स रिद्वाकर्त्री वारिविनैवप्रजास्वमार्गेनवर्तते कामक्रोधादिभिःपरस्परबाधार्थंप्रवृत्तत्वात् । यदाहकामंदकः । जगदेतन्निरानंदंकामलोभादि भिर्बलात् ॥ निमज्यमानंनिरयेराज्ञादंडेनधार्यतइति ॥ ३५ ॥

इतिदोलायितंचेतोनविशश्रामभूपतेः ॥ अथैकदागृहंतस्यमांडव्योमुनिराययौ ॥ ३६ ॥ तम
सौपूजयामासपप्रच्छचमहामुनिम् ॥ भवदागमनेनास्मिमुनेनिर्वृतिमागतः ॥ ३७ ॥ अद्य
तिष्ठाम्यहंनाथधन्यानांधुरिधर्मतः ॥ भगवन्सर्वधर्मज्ञचिरंविश्रांतवानसि ॥ ३८ ॥ तदमुं
संशयंछिंधिममार्कस्तिमिरंयथा ॥ महतांसंगमेनार्तिःकस्यनामननश्यति ॥ ३९ ॥ संदेहं
तुपरामार्तिमाहुरार्तिविदोजनाः ॥ सन्निग्रहानुग्रहजामद्भुत्यवपुषिस्थिताः ॥ ४० ॥ कर्षं
तिमामलंचिंतागजंहरिनखाइव ॥ तद्यथासमतोदेतिसूर्यांशुरिवसर्वगः ॥ ४१ ॥ त्वत्तोम
मसुनेमान्योनान्योऽस्तिकरुणांकुरु ॥ ४२ ॥ मांडव्यउवाच ॥ स्वयत्नेनस्वसंस्थेनस्वेनो
पायेनभूपते ॥ एषामनःपेलवताहिमवत्प्रविलीयते ॥ ४३ ॥ स्वविचारणयैवाशुशाम्यत्यं
तर्मनोमलम् ॥ कोऽहंकथमिदंकिंवाकथंमरणजन्मनी ॥ ४४ ॥ विचारयांतरेवत्वंमहतामल
मेष्यसि ॥ विचारेणपरिज्ञातस्वभावस्यसतस्तव ॥ ४५ ॥ मनःस्वरूपमुत्सृज्यशममेष्य
तिविज्वरम् ॥ तिष्ठदेवमनोरूपंपरित्यक्ष्यातितेऽनघ ॥ ४६ ॥ कृपणंहिमनोराजन्पेलवेऽपिनि
मज्जति ॥ कार्येगोष्पदतोयेऽपिजीर्णागोमशकोयथा ॥ ४७ ॥ यावद्यावत्परालोकःपरमात्मैवशि
ष्यते ॥ तावत्तावन्महाबाहोस्वयंसंत्यज्यतेऽखिलम् ॥ ४८ ॥

मनल्पंवा स्वयंसंत्यज्यतेअन्यबुद्ध्यास्वयमेवोपेक्ष्यतेतावत्तावत्परित्यक्तदृश्यानुरूपंयथातथापरालोकःप्रकृष्टप्रकाशःपरमात्मैवशिष्यते ॥४८॥ दृश्यपरित्यागेदृगेवपरिशिष्यतइतिभावः ॥ ४९ ॥ यावदिति ॥ अन्यद्वस्तुयावन्नसंत्यक्तंतावत्सामान्यमेवसाधारणमपि रत्नसुवर्णरजतादिकमपिवस्तुनआसाद्यते । हियस्माद्धेतोःस्वात्मलाभेतुकाकथा अन्यद्वस्तुसंत्यक्तव्यमितिकिमुच्यतइत्यर्थः । नह्यन्यपरत्वे सिसाधयि

यावत्सर्वंनसंत्यक्तंतावदात्मानलभ्यते ॥ सर्ववस्तुपरित्यागेशेषआत्मेतिकथ्यते ॥ ४९ ॥
यावदन्यन्नसंत्यक्तंतावत्सामान्यमेवहि ॥ वस्तुनासाद्यतेसाधोस्वात्मलाभेतुकाकथा ॥ ५० ॥
आत्मावलोकनार्थंतुतस्मात्सर्वंपरित्यजेत् ॥ सर्वंह्येतत्परित्यज्ययावच्छिष्टंपरंपदम् ॥ ५१ ॥
सकलकारणकार्यपरंपरामपिजगद्गतवस्तुविजृंभितम् ॥ अलमपास्यमनःस्ववपुस्ततःपरिविधूयचयच्छुभमस्तुतत् ॥ ५२ ॥ वसिष्ठउवाच ॥ इत्युक्त्वाभगवानेनंसुरघुंरघुनंदन ॥ ययौस्वमेवरुचिरंमांडव्योमौनमंडलम् ॥ ५३ ॥ गतेवरमुनौराजागत्वैकांतमनिंदितम् ॥ धियासंचिंतयामासकोनामाहमितिस्वयम् ॥ ५४ ॥ देहमात्रमहंमन्येहस्तपादादिसंयुतम् ॥ नमेतत्तावदाश्वंतरलमालोकयाम्यहम् ॥ ५५ ॥ तदत्रतावन्मांसास्थिनाहमेतदचेतनम् ॥ कर्मेंद्रियाणिनैवाहंनचकर्मेंद्रियाणिमे ॥ ५६ ॥

षितंवस्तुकिंचिदपिसिध्यतीतिभावः ॥ ५० ॥ ५१ ॥ सकलेति ॥ कार्यकारणात्मजगद्वस्तुवासितंमनःअपास्य अनात्मत्वेननिरस्य ततःस्ववपुःपरिधूय अनात्मतयापरिच्छिद्य यच्छुभंवस्त्ववस्थाप्यतेतदेवास्तु ॥ ५२ ॥ ५३ ॥ ५४ ॥ ५५ ॥ ५६ ॥

॥ ५७ ॥ ५८ ॥५९॥ ६० ॥ सर्वमिति ॥ जगतिदृश्यमानंसर्वमपिचिन्निष्पंदांशमात्रं चितोनिष्पंदःस्फूर्तिःतदंशएव अन्यच्छाश्वतंकिंचन वस्तुनास्ति ॥ ६१ ॥ विगतेति ॥ विगतरंजननिर्विषयस्थितिः रज्यतेयेनतद्रंजनंवासनाजालं विगतंरंजनंयस्मात्सःअतएवनिर्विषयाविषयेभ्योनिर्गतास्थितिर्यस्य विगतरंजनश्चासौनिर्विषयस्थितिश्चेतितथा । स्थिरसुषुप्तकलाभिगतोगाढसुषुप्तदशांप्राप्तः शमेनसममात्मनि

जडान्यतत्स्वरूपाणिनचबुद्धींद्रियाण्यहम् ॥ नाहमेवंशरीरादिशिष्टमालोकयाम्यहम् ॥ ५७॥ शेषोविकल्परहितोविशुद्धश्चिदहंततः ॥ ब्रह्मांडेचयथावायुःसर्वभूतगणेतथा ॥ ५८ ॥ सएवभगवानात्मातंतुर्मुक्तास्विवस्थितः ॥ चिच्छक्तिरमलासैषाचेत्यामयविवर्जिता ॥ भरिताशेषदिक्कुंभाभैरवाकारधारिणी ॥ ५९ ॥ सर्वभावगतासूक्ष्माभावाभावविवर्जिता ॥ आब्रह्मभुवनांतःस्थासर्वशक्तिसमुद्गिका ॥ ॥ ६० ॥ सर्वंकिंचिदिदंदृश्यंदृश्यतेयज्जगद्गतम् ॥ चिन्निष्पंदांशमात्रंतन्नान्यत्किंचनशाश्वतम् ॥ ६१ ॥ विगतरंजननिर्विषयास्थितिर्गतभवभ्रमईहितवर्जितः ॥ स्थिरसुषुप्तकलाभिगतस्ततःशमसमंनिवसाम्यहमात्मनि ॥ ६२ ॥ वसिष्ठउवाच ॥ इतिहेमजटाधीशोलेभेपदमनुत्तमम् ॥ विवेकाध्यवसायेनब्राह्मण्यमिवगाधिजः ॥ ६३ ॥ सुषुप्तपदधर्मिण्याचित्तवृत्त्याव्यराजत ॥ ६४॥ ननिर्घृणोदयावान्नोनद्वंद्वीनाप्यमत्सरी ॥ नसुधीर्नासुधीर्नार्थीनानर्थीसबभूवह ॥ ६५ ॥

स्वरूपेनिवसामि ॥ ६२ ॥ इतीति ॥ गाधिजोविश्वामित्रः सहिवसिष्ठेनस्पर्धमानःतपोभिर्ब्रह्मर्षित्वमेवलब्धवानितिरामायणादौप्रपंचितम् ॥ ६३ ॥ ६४॥ सुषुप्तदशावन्निर्विकारयाचित्तवृत्त्याव्यराजतेत्युक्तम् तदेवनिर्विकारत्वमाह ॥ नेति ॥ सःसुरघुःनिर्घृणःक्रूरोनच

बभूव दयावांश्चनदयायाःपरदुःखप्रहारणेच्छारूपत्वात्तस्यचरागादिरहितत्वात् । अतएवामत्सरःद्वेषरहितःसुधीरसुधीश्चन शुभाशुभसर्वबुद्धिरहितत्वात् अर्थीनानर्थीचन रागद्वेषयोरसत्वात् अतोद्वंद्वहीनोबभूवेतियोज्यम् ॥६५॥६६॥ बभूवेति ॥ परिघःस्यंदनेयथापरिघोनामा



शृणुतस्याथसुरघोःप्रबुद्धस्यसतस्तदा ॥ पर्णादस्यचराजर्षेःसंवादमिममद्भुतम् ॥ ६६ ॥ बभूव पारसीकानांपार्थिवःपरवीरहा ॥ परिघोनामविख्यातःपरिघःस्यंदनेयथा ॥ ६७ ॥ सबभूवपरं मित्रंसुरघोरघुनंदन ॥ कदाचित्परिघस्यासीदकांडंमंडलंमहत् ॥ ६८ ॥ विनेशुर्जनतास्तत्रब ह्वयःक्षुत्क्षतजीविताः ॥ तद्दुःखंपरिघोदृष्ट्वाप्रतीकारेष्वशक्तिमान् ॥ ६९ ॥ सतत्याजाखिलंराज्यं जगामतपसेवनम् ॥ तपश्चरन्शांतमतिःशुष्कपर्णान्यभक्षयत् ॥ ७० ॥ ततःप्रभृतिपर्णादइति ख्यातिमसौययौ ॥ ततोवर्षसहस्रेणतपसादारुणात्मना ॥ ७१ ॥ प्रापदभ्यासवशतोज्ञानमा त्मप्रसादजम् ॥ बभूवविगतद्वंद्वोनीरुजःसमदर्शनः ॥ ७२ ॥ विजहारयथाकामंत्रिलोकीमठि कामिमाम् ॥ एकदातस्यसदनंहेमचूडापतिर्ययौ ॥ ७३ ॥ तेतत्रप्राक्तनेमित्रेअन्योन्यमिदमूच तुः ॥ परमानंदमायातंचेतस्त्वद्दर्शनेनमे ॥ अहोनुबतकल्याणैःफलितंममपावनैः ॥७४॥ परिघ उवाच ॥ ज्ञानमेतन्मयाप्राप्तंत्वयाज्ञानंयथानघ ॥ कच्चित्करोषिसुधियासुप्रसन्नगभीरया ॥७५॥



युधविशेषः परितोहन्यतेऽनेनेतिव्युत्पत्त्या यथास्यंदनेरथेपरान्वीरान्हंतीतिविख्यातस्तद्वदसावपीत्यर्थः ॥ ६७ ॥ ६८ ॥ ६९ ॥ ७० ॥ ॥ ७१ ॥ ७२ ॥ ७३ ॥ ७४ ॥ ७५ ॥

॥ ७६ ॥ ७७ ॥ ७८ ॥ यइति ॥ यःपुमानज्ञःआत्मज्ञोनभवतिसोऽसौतूष्णींतिष्ठन्व्यवहरंश्चवा कदासमाहितचित्तोभवति नकदापी त्यर्थः । अज्ञस्यसमाधिरेवनसंभवतीतिभावः । असमाहितचित्तइतिपाठेयोऽज्ञइत्यत्रज्ञइतिपदच्छेदः । ज्ञःकदाअसमाहितचित्तोभवति न कदापीत्यर्थः । ज्ञानिनःसर्वदासमाधिरेवेतिभावः ॥ ७९ ॥ एतदेवान्वयव्यतिरेकाभ्यामुपपादयति ॥ नित्येत्यादिना ॥ आत्मैकतत्त्वत न्निष्ठाःआत्मनास्वात्मनाएकमैक्यापन्नंतत्त्वंयस्यताद‍ृशेतच्छब्दप्रतिपाद्येब्रह्मणि निष्ठायेषांते । ओंतत्सदितिनिर्देशोब्रह्मणस्त्रिविधःस्मृत इ

द‍ृष्ट्वासुभगकार्याणिकर्माण्येवनराधिप ॥ आधिव्याधिविहीनेयंकच्चित्कायलतातव ॥ ७६ ॥
आपातरमणीयेतुकच्चिद्भोगेनमज्जसि ॥ कच्चित्संकल्परहितंपरविश्रमणास्पदम् ॥ ७७ ॥
परमोपशमंश्रेयःसमाधिमनुतिष्ठसि ॥ ७८ ॥ सुरघुरुवाच ॥ योऽज्ञोमहात्मन्सततंतूष्णींव्यव
हरंश्चवा ॥ असमाहितचित्तोऽसौकदाभवतिमेवद ॥ ७९ ॥ नित्यप्रबुद्धचित्तत्वात्कुर्वतोऽपिज
गत्क्रियाः ॥ आत्मैकतत्त्वतन्निष्ठाःसदैवसुसमाधयः ॥ ८० ॥ बद्धपद्मासनस्यापिकृतब्रह्मांजले
रपि ॥ अविश्रांतस्वभावस्यकःसमाधिःकथंचवा ॥ ८१ ॥ तत्त्वावबोधोभगवन्सर्वाशातृणपा
वकः ॥ प्रोक्तःसमाधिशब्देननचतूष्णीमवस्थितिः ॥ ८२ ॥ समाहितानित्यतृप्तायथाभूतार्थद
र्शिनी ॥ साधोसमाधिशब्देनपराप्रज्ञोच्यतेबुधैः ॥ ८३ ॥

तिगीतोक्तेः ॥ ८० ॥ बद्धेति ॥ बद्धपद्मासनस्यापि बद्धंपद्मासनंयेनतस्यापि । बद्धपद्मासनस्थस्येतिपाठेकृतब्रह्मांजलेरपीतिनसंगच्छेत् । ब द्धपद्मासनस्यहस्तयोरंगुष्ठग्रहणेविनियोगात् । यथाहयाज्ञवल्क्यः । ऊर्वोरुपरिविप्रेंद्रकृत्वापादतलेउभे ॥ अंगुष्ठौचनिबध्नीयाद्धस्ताभ्यांव्युत्क्र मेणतु । पद्मासनंभवेदेतत्सर्वेषामपिपूजितम् इति । केवलपद्मासनस्यब्रह्मांजलेश्चलक्षणमुक्तंपुरस्तात् ॥ ८१ ॥ ८२ ॥ ८३ ॥

अक्षुब्धेति ॥ मेरोरितिपंचम्यंतं तत्रापिस्थिरतरायाचेतनस्यस्थितिःसैवसमाधिरितिप्रोक्ता ॥ ८४ ॥ निश्चिंतेति ॥ मनोगतिःहेयोपादेयवर्जिता इदंहेयंइदमुपादेयमितिभेदभावनारहिता अतएवविगताभीष्टाअतश्चनिश्चिंतासैवपरिपूर्णामनोगतिःसमाधिः ॥ ८५ ॥ नेति ॥ कालोयथा कलागतिंकलाकाष्ठादिरूपांस्वगतिंनविस्मरति तथाप्राज्ञधीरपिस्वात्मानंस्वस्वरूपंनविस्मरति ॥ ८६ ॥ नेति ॥ सततगोवा



अक्षुब्धानिरहंकाराद्वंद्वेष्वननुपातिनी ॥ प्रोक्तासमाधिशब्देनमेरोःस्थिरतरास्थितिः ॥ ८४ ॥
निश्चिताविगताभीष्टाहेयोपादेयवर्जिता ॥ प्रोक्तासमाधिशब्देनपरिपूर्णामनोगतिः ॥ ८५ ॥
नविस्मरत्यविरतंयथाकालःकलागतिम् ॥ नविस्मरत्यविरतंस्वात्मानंप्राज्ञधीस्तथा ॥ ८६ ॥
नविस्मरतिसर्वत्रयथासततगोगतिम् ॥ नविस्मरतिनिश्चित्यचिन्मात्रंप्राज्ञधीस्तथा ॥ ८७ ॥
नित्यंसमाहितधियःसुसमामहांतस्तिष्ठंतिकार्यपरिणामविभागमुक्ताः ॥ तेनासमाहितसमाहितभेदभंग्यामिथ्योदितःक्वनुसउत्तमवाक्प्रपंचः ॥ ८८ ॥ परिघउवाच ॥ राजन्नूनंप्रबुद्धोऽसिप्राप्तवानसितत्पदम् ॥ संशीतलांतःकरणोगंभीरप्रकटाशयः ॥ ८९ ॥ निर्मलोविततःपूर्णोगताहंकारविक्लवः ॥ सर्वत्रलक्ष्यसेस्वस्थोराजन्सर्वत्रराजसे ॥ ९० ॥

युः ॥ ८७ ॥ नित्यमिति ॥ महांतःपरिपूर्णज्ञानरूपाः कार्यपरिणामविभागमुक्ताःकार्याणांपरिणामःसुखदुःखादिरूपोविकारःतेनयोविभागोभेदभावनातेनमुक्ताः अतःसुसमाः सर्वत्रसमदृशःअतोनित्यंसमाहितधियस्तिष्ठंति । तेनहेतुनाअसमाहितसमाहितभेदभंग्याअसमाहिताःसमाहिताइतियाभेदभंगिःभेदकलनातयामिथ्यैवोदितःसवाक्प्रपंचःक्वनक्वापीत्यर्थः । उत्तमेतिपरिघसंबोधनम् ॥ ८८ ॥ ८९ ॥ ९० ॥

अलमिति ॥ इयमित्यंतपद्येनिरूप्यमाणा । मनःकर्तृ उपशमितरसंनिवृत्तविषयौत्सुक्यं अतएवसमंसमरसंसदंतःस्वात्मसुखेयदिमुदितंतृप्तं त त्तर्हीयमंतर्मुखीदृष्टिरेकासुखायोदितोक्ता । इयमेवचदृष्टिरनुत्तमासर्वोत्तमाप्रतिष्ठा जीवन्मुक्तिरपीत्यर्थः ॥ ९१ ॥ इतिश्रीवासिष्ठविवरणउप शमप्रकरणेसुरघूपाख्यानंनामपंचविंशःसर्गः ॥ २५ ॥ पूर्वंचित्तविश्रांतिरेवजीवन्मुक्तिसीमेत्युक्तम् । इदानींविश्रांत्यभावेबहुविधःप्रयास इतिभासविलाससंवादोनिरूप्यते ॥ १ ॥ यइति ॥ अध्यात्ममयः आत्मन्यधिअध्यात्मंअध्यात्मशास्त्रंतन्मयस्तदनुसंधानपरः ॥ २ ॥

अलमतिविततैर्वचःप्रपंचैरियमुदितेहसुखायदृष्टिरेका ॥ उपशमितरसंसमंमनोऽतर्यदिमुदितं तदनुत्तमाप्रतिष्ठा ॥ ९१ ॥ इतिश्रीवाल्मीकीयेमोक्षोपायउपशमप्रकरणेसुरघूपाख्यानंनामपं चविंशःसर्गः ॥ २५ ॥ वसिष्ठउवाच ॥ सुरघुःपरिघश्चैवविचार्येतिजगत्क्रमम् ॥ मिथःप्रपूजि तौतुष्टौस्वव्यापारपरौगतौ ॥ १ ॥ योनित्यमध्यात्ममयोनित्यमंतर्मुखःसुखी ॥ नित्यंचिदनु संधानःसनशोकेनबाध्यते ॥ २ ॥ आशापाशशतैर्बद्धंभोगोलपसुलालसम् ॥ व्यूढदुःखमहा भारंमोहपल्वलशायिनम् ॥ ३ ॥ रोगदंशावलीदष्टंकृष्टंतृष्णावरत्रया ॥ कुकर्मकर्दमालिप्तंसं साराण्यचारिणम् ॥ ४ ॥ अलब्धशीतलच्छायंगमागमपिपासितम् ॥ रामजीवबलीवर्दमिमं संसारपल्वलात् ॥ ५ ॥

आशेतिश्लोकत्रयंवाक्यम् ॥ भोगोलपसुलालसं भुज्यंतइतिभोगाविषयाःतएवोलपानिप्रतानवंतितृणानितेषुसुलालसंसमुत्सुकम् । रोगा एवदंशावलीतयादष्टं तृष्णावरत्रयातृष्णैववरत्राचर्ममयीरज्जुः तयाकृष्टमाकृष्टं कुकर्मपापंतदेवकर्दमःपंकस्तेनलिप्तं मोहपल्वलशायिनं मुह्यत्य स्मिन्निति मोहःसंसारःसएवपल्वलंअल्पंसरःतच्छायिनम् ॥ ३ ॥ ४ ॥ अलब्धशीतलच्छायंअप्राप्तविश्रांतिस्थानं इमंजीवरूपंबलीवर्दंअनड्वाहं

ओघादिगुणयोगात्परमंयत्नंपूर्वोक्तमास्थाय संसारपल्वलाडुत्तारयेत् ॥ ५ ॥ ६ ॥ ७ ॥ नेति ॥ मग्नस्वात्मसमुद्धृतौ संसारेनिमग्नस्य स्वात्मनःसमुद्धरणे देहेंद्रियादौतादात्म्यमापन्नस्यस्वरूपस्यविविक्ततयानिश्चये धनादीनिनोपकुर्वंति ॥ ८ ॥ किंतर्ह्युपकरोतीत्यत्राह ॥ मनोमात्रेणेति ॥ किंचित्परामृश्य कोऽहमित्यादिविचार्यात्मासमुद्धृतोभवति ॥ ९ ॥ एतावतेति ॥ देहस्यकाष्ठादिवदनात्मत्वनिश्चयेनैवात्मनःपरमात्मत्वमवगम्यतइत्यर्थः ॥ १० ॥ परीति ॥ नोपमानमुपादत्ते । नतत्समश्चाभ्यधिकश्चदृश्यतइतिश्रुतेः । नानुधावतिरंजनं रंज

परमंयत्नमास्थायचिरमुत्तारयेद्बलात् ॥ महानुभावसंपर्कात्संसारार्णवलंघने ॥ ६ ॥ युक्तिःसंप्राप्यतेरामस्फुटानौरिवनाविकात् ॥ यस्मिन्देशेगिरौतज्ज्ञोनास्तिसज्जनपादपः ॥ सफलःशीतलच्छायोनतत्रनिवसेद्बुधः ॥ ७ ॥ नधनानिनमित्राणिनशास्त्राणिनबांधवाः ॥ नराणामुपकुर्वंतिमग्नस्वात्मसमुद्धृतौ ॥ ८ ॥ मनोमात्रेणसुहृदासदैवसहवासिना ॥ सहकिंचित्परामृश्यभवत्यात्मासमुद्धृतः ॥ ९ ॥ एतावतैवदेवेशःपरमात्मावगम्यते ॥ काष्ठलोष्टसमत्वेनदेहोयदवलोक्यते ॥ १० ॥ परिपूर्णार्णवप्रख्योनवाग्गोचरमेतिसः ॥ नोपमानमुपादत्तेनानुधावतिरंजनम् ॥ ११ ॥ केवलंचित्प्रकाशांशकलितास्थिरतांगता ॥ तुर्याचेत्प्राप्यतेदृष्टिस्तत्तयासोपमीयते ॥ १२ ॥

कंसंस्कारकंवस्तुनापेक्षते ॥ ११ ॥ किंचित्सादृश्याडुपमानमपिसंभवतीत्याह ॥ केवलमितिश्लोकत्रयंवाक्यम् ॥ मनोहंकारविलयेसति सर्वभावांतरस्थिता परानंदापारमेश्वरीयातनुःस्वरूपंसमुदेतिसातनुः चित्प्रकाशांशकलिताचितश्चैतन्यस्यप्रकाशरूपेणेवांशेनकलिता प्रकाशस्यलक्षणेनांशांतरेणकलितास्थिरतांगतातुर्यादृष्टिःप्राप्यतेचेत् तत्तर्हितयादृष्ट्याउपमीयते । गगनश्रीरिवआतता भरिताकारापूर्णाकारासापरमात्मभावदशा सुषुप्तावस्थयाअदूरगतसादृश्यान्निर्विकारचिन्मात्रतयाईषत्सादृश्याडुपलक्ष्यते ॥ १२ ॥

॥ १३ ॥ १४ ॥ सेति ॥ सापूर्वोक्तापरमात्मदशा योगेनसमाधिनासंसिद्धा सुषुप्ताऽदूरभाविता सुषुप्तावस्थया अदूरत्वेनसादृश्येनभाविता हृद्येवानुभूयते वचसांनगम्या ॥ १५ ॥ अखिलमिति ॥ अखिलंजगदनंतमात्मतत्त्वं आत्मस्वरूपमेव यस्मात्कारणादृढपरिणामिनि वासनाभूयिष्ठतयाप्रगाढविचित्रविकारेचेतसिसमाधिवशात्प्रशमितेसति अंतःस्थितःसर्वांतयामितयास्थितोदेवदेवोबहिरपिचराचरात्मास्वयमनुभूयतएव स्वयंप्रकाशतएव परिच्छेदकस्यचेतसोविलयादिति ॥ १६ ॥ तदनुअंतर्बहिश्चपरमात्मदृष्ट्यनंतरंविषयवासनानांविषयसंस्कारा

अदूरगतसादृश्यासुषुप्तिःसोपलक्ष्यते ॥ सावस्थाभरिताकारागगनश्रीरिवातता ॥ १३ ॥ मनोहंकारविलयेसर्वभावांतरस्थिता ॥ समुदेतिपरानंदायातनुःपारमेश्वरी ॥ १४ ॥ सास्वयंयोगसंसिद्धासुषुप्तादूरभाविता ॥ नगम्यावचसांरामहृद्येवेहानुभूयते ॥ १५ ॥ अखिलमिदमनंतमात्मतत्त्वंदृढपरिणामिनिचेतसिस्थितोंऽतः ॥ बहिरुपशमितेचराचरात्मास्वयमनुभूयतएवदेवदेवः ॥ १६ ॥ तदनुविषयवासनाविनाशस्तदनुशुभःपरमस्फुटप्रकाशः ॥ तदनुचसमतावशात्स्वरूपेपरिणमनंमहतामचिंत्यरूपम् ॥ १७ ॥ मनसैवमनश्छित्वायद्यात्मानावलोक्यते ॥ तन्ननश्येज्जगद्दुःखंमनश्छेदेसुखात्मधीः ॥ १८ ॥ वसिष्ठउवाच ॥ अत्रैवोदाहरंतीममितिहासंपुरातनम् ॥ संवादंसुहृदोःसह्यसानौभासविलासयोः ॥ १९ ॥

णांविनाशः । तदनुविषयवासनाविनाशानंतरंशुभः परमस्यपरमात्मनःस्फुटंयथातथाप्रकाशस्तदनुचसमतावशात्स्वरूपेअचिंत्यरूपेपरिणमनं स्वस्यैवपरमात्मभावात्स्वरूपनिष्ठतैवसंपद्यतइत्यर्थः ॥ १७ ॥ मनसेति ॥ मनसैवशास्त्रसंस्कृतेनविवेकिना मनसैवमनःसंसारसक्तंछित्वा ॥ १८ ॥ १९ ॥

अत्युत्सेधेति ॥ उत्सेधः औन्नत्यं जितं व्याप्तं । पीठंनामभूमेरुपरितनो विस्तीर्णः पर्वतप्रदेशः येन भूतलं व्याप्नोति । तलंनामभूम्यांनिमग्नः पर्वतमूल भागः सह्यो नाम कुलभागः सह्यो नाम कुलाचलः । तदुक्तं वैष्णवे । महेंद्रो मलयः सह्यः शुक्तिमानृक्षपर्वतः । विंध्यश्च पारियात्रश्च सप्तात्र कुलपर्व



अत्युत्सेधजिताकाशः पीठेनाजितभूतलः ॥ तलेनजितपातालः सह्योलोकोत्तरोगिरिः ॥ २० ॥ तत्रोत्तरनदेसानावानमत्फलपादपे ॥ अत्रेरस्त्याश्रमः श्रीमान्सिद्धश्रमहरोमहान् ॥ २१ ॥ महत्यत्र्याश्रमेतस्मिंस्तापसौद्वौबभूवतुः ॥ कौचिदेवनभोमार्गइवशुक्रबृहस्पती ॥ २२ ॥ तयो रथैकास्पदयोस्तत्राभूतांसुतावुभौ ॥ विलासभासनामानौवृद्धिमाययतुःक्रमात् ॥ २३ ॥ आ स्तामन्योन्यसुस्निग्धौसुरक्ताविवदंपती ॥ एकंद्वित्वमिवापन्नंसममासीत्तयोर्मनः ॥ २४ ॥ ज ग्मतुर्देहमुत्सृज्यततस्तुपितरौतयोः ॥ तत्रौर्ध्वदैहिकंकृत्वाचक्रातेपरिदेवनम् ॥ २५ ॥ विर क्तौविपिनेकालंक्षपयामासतुःपृथक् ॥ तपसाशुष्कसर्वांगावनास्थामागतौपराम् ॥ २६ ॥ ज ग्मुर्दिनानिमासाश्चवर्षाण्यपितयोस्तथा ॥ तावेकदासंघटिताविदमन्योन्यमूचतुः ॥ २७ ॥ विलासउवाच ॥ जीविताग्र्यद्रुमफलहृदाश्वासामृतांबुधे ॥ जगत्यस्मिन्महाबंधोभासस्वागत मस्तुते ॥ २८ ॥ एतावंतोदिनानल्पामद्वियोगवतात्वया ॥ वदक्क्षपिताःसाधोकच्चित्तेसफलंतपः ॥ २९ ॥



ताइति ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ जगतीति ॥ जगतिसतिमहाबंधोविश्रामसहाय ॥ २८ ॥ एतावंतइति ॥ दिनानल्पाःदिनैरनल्पाभूयिष्ठाःएतावंतोवत्सराःक्क्षपिताइत्यर्थः । जग्मुर्दिनानिमासाश्चवर्षाण्येवामितवत्सरपर्यंतस्यका

लस्यप्रस्तुतत्वात्प्रश्नस्यदिनविषयत्वेतुदिनानल्पाइतिनोपपद्यते । दिनशब्दस्यनपुंसकत्वात् पुंस्त्वाभ्युपगमेऽपिसंहितायाअयोगात्॥२९॥
॥ ३० ॥ ३१ ॥ ३२ ॥ आशाइति ॥ वीरुधःप्रतानिन्योलताः अत्रकिलचित्रम् ॥ ३३ ॥ यावदिति ॥ ज्ञानंशास्त्रजन्यं परोक्षंविज्ञानं

कच्चित्तेविज्वराबुद्धिःकच्चिज्ज्ञातस्त्वमात्मवान् ॥ कच्चित्फलितविद्यस्त्वंकच्चित्कुशलवानसि ॥ ३० ॥ भासउवाच ॥ साधोस्वागतमद्यांगादिष्ट्यादृष्टोऽसिमानद ॥ कुशलंचकुतोऽस्माकंसंसारेतिष्ठतामिह ॥ ३१ ॥ यावन्नाधिगतंज्ञेयंयावत्क्षीणानचित्तभूः ॥ यावत्तीर्णोनसंसारस्तावन्नःकुशलंकुतः ॥ ३२ ॥ आशायावदशेषेणनलूनाश्चित्तसंभवाः ॥ वीरुधोदात्रकेणेवतावन्नःकुशलंकुतः ॥ ३३ ॥ यावन्नाधिगतंज्ञानंयावन्नसमतोदिता ॥ यावन्नाभ्युदितोबोधस्तावन्नःकुशलंकुतः ॥ ३४ ॥ आत्मलाभंविनासाधोविनाज्ञानमहौषधम् ॥ उदेतिपुनरेवेयंदुःसंसृतिविषूचिका ॥ ३५ ॥ बहुविधसुखदुःखमध्यपातीविततजरामरणप्रपातभग्नः ॥ जगदुदरगिरौलुठन्जनोऽयंगतरसपर्णवदेतिजर्जरत्वम् ॥ ३६ ॥ इतिश्रीवाल्मीकीयेमोक्षोपायउपशमप्रकरणेभासविलाससंवादोनामषड्विंशःसर्गः ॥ २६ ॥ वसिष्ठउवाच ॥ एवंतौकुशलप्रश्नंकृतवंतौपरस्परम् ॥ कालेनासाद्यविमलंज्ञानंमोक्षमवापतुः ॥ १ ॥

बोधःसाक्षात्कारः ॥ ३४ ॥ ३५ ॥ बह्विति ॥ विततेषुजरामरणदुःखेष्वेवप्रपातेषुभृगुषुभग्नः भंगंप्राप्तवान् जगदुदरएवगिरौलुठन्परिभ्रमन्गतरसपर्णवच्छुष्कपर्णवत् ॥ ३६ ॥ इत्युपशमप्रकरणेषड्विंशःसर्गः ॥ २६ ॥ पूर्वंचित्तविश्रांत्यभावेबहुविधःप्रयासइत्युक्तम् । इदानीं

चित्तविश्रांतिसिद्ध्यैसंगत्यागःप्राणनिरोधःसमाध्यभ्यासश्चकर्तव्यइतिवीतहव्योपाख्यानेननिरूप्यते ॥ १ ॥ २ ॥ तत्रसंगत्यागंप्रस्तौति ॥ असक्तमिति ॥ संगासंगौवक्ष्यमाणलक्षणौ ॥ ३ ॥ अंतरिति ॥ मधुरवृत्तिमान् मधुपुष्परसंरातिआदत्तइतिमधुरोमधुकरःतस्यवृत्तिमान् । सहिपुष्पेषुयथालाभंमधुगृह्णन्असक्तएवसुखंविहरतितद्वद्वृत्तिरित्यर्थः ॥ ४ ॥ ५ ॥ देहेति ॥ देहदेहिविभागैकपरित्यागेन कोदेहः

अतोवच्मिमहाबाहोयथाज्ञानेतरागतिः ॥ नास्तिसंसारतरणेसंगबद्धस्यचेतसः ॥ २ ॥ असक्तंनिर्मलंचित्तंमुक्तंसंसार्यपिस्फुटम् ॥ सक्तंतुदीर्घतपसायुक्तमप्यतिबंधवत् ॥ ३ ॥ अंतःसंसक्तिनिर्मुक्तोजीवोमधुरवृत्तिमान् ॥ बहिःकुर्वन्नकुर्वन्वाकर्ताभोक्तानहिक्कचित् ॥ ४ ॥ श्रीरामउवाच ॥ कीदृशोभगवन्संगःकश्चबंधायवानृणाम् ॥ कश्चमोक्षायकथितःकथंचैषचिकित्स्यते ॥ ५ ॥ वसिष्ठउवाच ॥ देहदेहिविभागैकपरित्यागेनभावनात् ॥ देहमात्रेतुविश्वासःसंगोबंधार्हउच्यते ॥ ६ ॥ अनंतस्यात्मतत्त्वस्यसपर्यंतत्वनिश्चये ॥ यःसुखार्थित्वमंतःससंगोबंधार्हउच्यते ॥ ७ ॥ सर्वमात्मेदमखिलंकिंगृह्णामित्यजामिकिम् ॥ इत्यसंगस्थितिंविद्धिजीवन्मुक्तत्वमुत्थिम् ॥ ८ ॥

कोवादेहीतिविवेकमेकंपरित्यज्येत्यर्थः । देहमात्रेतुविश्वासःदेहएवाहंममाभिमानःसंगः । सचबंधार्हउच्यते ॥६॥ अनंतस्यदेशकालादिभिरपरिच्छिन्नस्य आत्मतत्त्वस्यसपर्यंतत्वनिश्चयेदेहपरिमितत्वनिश्चयेसति अंतःअंतःकरणेयत्सुखार्थित्वंवैषयिकसुखेच्छासंगःसचबंधार्होबंधहेतुरुच्यते ॥७॥ सर्वमिति ॥ इदंजगदहंचसर्वमात्मैव तथासति किंगृह्णामिकिंवात्यजामीत्येवंहेयोपादेयमुक्ततयास्थितिर्निःसंगस्थितिः साच

जीवन्मुक्तेषुतिष्ठतीत्यर्थः ॥८॥ नेति ॥ नाहमस्ति अहंशब्दवाच्यंवस्तुनास्ति आत्मनोऽपरिच्छिन्नत्वात् । अहंतायाश्चपरिच्छिन्नविषयत्वात् । नचान्योऽस्ति आत्मातिरिक्तस्यवस्तुनोऽसत्त्वात् । अतःकारणात् सुखानिमाभवंतुभवंतुवेत्येवमंतरसक्तोमुक्तिभाक्कथ्यते ॥ ९ ॥ नेति ॥ नैष्कर्म्यंकर्मत्यागं सुसमःसिद्ध्यसिद्ध्योःसुष्ठुसमः फलत्यागीकर्मफलनिःस्पृहः ॥ १० ॥ सर्वेति ॥ सर्वकर्मफलादीनां कर्माणिज्योतिष्टोमादीनिफलानिस्वर्गादीनि आदिशब्देनोपासनाफलानांयमाद्यष्टांगावांतरफलानां तत्संनिधौवैरत्यागइत्यादीनांचग्रहणम् । तेषांसर्वेषांकर्मफलादीनांमनसैवयोनिपुणःपरित्यागो नकर्मणा सःअसक्तइतिस्मृतः । परितस्त्यागोयस्येतिव्युत्पत्त्यापरित्यागशब्देनतद्वान्पुरुषोऽभिधी

नाहमास्तिनचान्योऽस्तिमाभवंतुभवंतुवा ॥ सुखान्यसक्तइत्यंतःकथ्यतेमुक्तिभाङ्नरः ॥ ९ ॥
नाभिनंदतिनैष्कर्म्यंनकर्मस्वनुरुध्यते ॥ सुसमोयःफलत्यागीसोऽसंसक्तइतिस्मृतः ॥ १० ॥
सर्वकर्मफलादीनांमनसैवनकर्मणा ॥ निपुणोयःपरित्यागःसोऽसंसक्तइतिस्मृतः ॥ ११ ॥ असं
संगेनसकलाश्चेष्टानानाविजृंभिताः ॥ चिकित्सिताभवंत्यंगश्रेयःसंपादयंतिच ॥ १२ ॥ कृमि
कीटत्वमायांतिजायमानाःपुनःपुनः ॥ यदिमाजनताजीर्णास्तत्संसक्तिविजृंभितम् ॥ १३ ॥
भूतानियदनंतानितरंगिणितरंगवत् ॥ उत्पद्योत्पद्यलीयंतेतत्संसक्तिविजृंभणम् ॥ १४ ॥

यते अन्यथाअसंसक्तशब्देनसामानाधिकरण्यासंभवात्तत्रमनसापरित्यागोनामफलाभिसंधिराहित्यंकर्मणामपिपरित्यागस्तुफलसाधनभूतस्यकर्मणोऽननुष्ठानादितिद्रष्टव्यम् ॥ ११ ॥ असंसंगेनेति ॥ नानाविजृंभिताःनानाप्रकारंविजृंभितंविलासोयासांताः सकलाश्चेष्टाअसंसंगेनपूर्वोक्तेनचिकित्सिताभवंति श्रेयःकैवल्यंसंपादयंति ॥ १२ ॥ संगस्यबंधहेतुत्वमुदाहृत्यदर्शयतिद्वाभ्यां ॥ कृमीति ॥ जनताःजनसमूहाः संसक्तिःसंगः ॥ १३ ॥ तरंगिणिसमुद्रे । पूर्वबंधहेतुरेवसंगोनिरूपितः ॥ १४ ॥

इदानींमोक्षहेतुंसंगंनिरूपयितुमाह ॥ संसक्तिरिति ॥ वंध्यानिष्फला वंद्यामुक्तिप्रदत्वात्स्तुत्या ॥ १५ ॥ तत्रपूर्वोक्तोबंधार्हःसंगएववंध्या सक्तिरुच्यते । तस्याःस्वरूपंनिरूपितमपिभंग्यंतरेणाह ॥ आत्मेति ॥ दृढाचिरकालभाविता ॥ १६ ॥ आत्मेति ॥ आत्मतत्त्वावबोधेन आत्मस्वरूपनिश्चयेनहेतुना विवेकजाआत्मानात्मविवेकेसतिजातासत्यभूता सत्यमबाध्यमात्मतत्त्वंतद्भूताप्राप्ता तद्विषयेतियावत् । भूप्रा प्तावित्यस्यस्वरूपम् । एवंविधाभूयःसंसारवर्जितासक्तिर्वंद्येतिकथ्यते ॥ १७ ॥ देहारामतावंध्यासक्तिः आत्मारामतातुवंद्येतिविवेकः । प्र

संसक्तिर्द्विविधाप्रोक्तावंध्यावंद्याचराघव ॥ वंध्यासर्वत्रमूढानांवंद्यातत्त्वविदांनिजा ॥ १५ ॥ आत्मतत्त्वावबोधेनहीनादेहादिवस्तुजा ॥ भूयःसंसारदासक्तिर्दृढावंध्येतिकथ्यते ॥ १६ ॥ आ त्मतत्त्वावबोधेनसत्यभूताविवेकजा ॥ वंद्याहिकथ्यतेसक्तिर्भूयःसंसारवर्जिता ॥ १७ ॥ शंख चक्रगदाहस्तोदेहोविविधयेहया ॥ वंद्यसंसक्तिवशतःपरिपातिजगत्त्रयम् ॥ १८ ॥ विज्ञानगतयः सिद्धालोकपालास्तथैवच ॥ वंद्यसंसक्तिवशतास्तिष्ठंतिजगतांगणे ॥ १९ ॥ मनःपततिभोगेषुगृ ध्रोमांसलवेष्विव ॥ वंध्यसंसक्तिवशतोऽव्यर्थयारम्यशंकया ॥ २० ॥ वंध्यसक्तिमतामेतारम्यां तःपुरभूमयः ॥ रचितारौरवावीचीकालसूत्रादिनामिकाः ॥ २१ ॥

त्यासत्त्यावंद्यसंसक्तिंतावदुदाहरति । शंखेति ॥ शंखचक्रगदाहस्तोदेहोनामश्रीविष्णुमूर्तिः । विविधयाईहया मत्स्याद्यवतारप्रवर्तितयाचे ष्टया ॥ १८ ॥ विज्ञानेति ॥ विज्ञानगतयःविज्ञानात्मकंब्रह्मैवगतिर्निष्ठाविश्रांतिपदंयेषांते । जगतांगणेतिष्ठंतीत्यनेनसर्वेष्वपिजगत्स्वप्रतिह तागतिर्येषांते ॥ १९ ॥ अथवंध्यसंसक्तिमुदाहरति ॥ मनइति ॥ भोगेषुविषयेषुरम्यशंकयारम्याइत्युत्प्रेक्षया । रम्यत्वकल्पनयेतियावत् ॥ २० ॥ वंध्येति ॥ रौरवंअवीचिःकालसूत्रमितिनरकभेदाः । देहारामाणांनरकाएवविश्रांतिभूमयइत्यर्थः ॥ २१ ॥

वंध्येति ॥ वंध्यसक्तिंवंध्यासक्तिर्यस्यतंजनं नरकाग्नीनांइंधनसंचयंविद्धि । यस्मात्तेनरकाग्नयः तेनेंधनेनज्वलंति ॥ २२ ॥ विद्येति ॥ वि द्यादृशि ब्रह्मविद्याविषये प्रोदयमागतेनप्रबुद्धेन अविद्याविषयेप्रपंचेक्षयंगतेनअनुसंधानरहितेन अतएवसर्वत्रदृश्यवस्तुनिसंसक्तिविवर्जि तेन स्वचेतसाइत्थंभूतोयस्तिष्ठति । तदुक्तंगीतासु । यानिशासर्वभूतानांतस्यांजागर्तिसंयमी ॥ यस्यांजाग्रतिभूतानिसानिशापश्यतोमुने रिति ॥ २३ ॥ सर्वदेत्यष्टभिःश्लोकैर्वाक्यम् ॥ विजानताज्ञानिनापुरुषेण सर्वसंस्थेनसर्वाःसंस्थाःशयनाशनादयोऽवस्थायस्यतेन सर्वे णज्ञानिनामूर्खेणवा सहतिष्ठतासर्वकर्मकरेणापिनित्यनैमित्तिकादिकंसर्वंकर्मकुर्वतापि सतामनश्चेष्टादिषुविविधेषुविषयेषुसक्तंनकार्यं किंतु

वंध्यसक्तिंजनंदुःखशुष्कमिंधनसंचयम् ॥ ज्वलतांनरकाग्नीनांविद्धितेनज्वलंतिते ॥ २२ ॥ वि द्यादृशिप्रोदयमागतेनक्षयंत्वविद्याविषयेगतेन ॥ सर्वत्रसंसक्तिविवर्जितेनस्वचेतसातिष्ठतियः समुक्तः ॥ २३ ॥ वसिष्ठउवाच ॥ सर्वदासर्वसंस्थेनसर्वेणसहतिष्ठता ॥ सर्वकर्मकरेणापिमनःकार्यं विजानता ॥ २४ ॥ नसक्तमिहचेष्टासुनचिंतासुनवस्तुषु ॥ नाकाशेनाप्यधोनोर्ध्वेनदिक्षुविततासु च ॥ २५ ॥ नबहिर्विपुलाभोगेनचैवेंद्रियवृत्तिषु ॥ नाभ्यंतरेनचप्राणेनमूर्धनिनतालुनि ॥ २६ ॥ नभ्रूमध्येननासांतेनमुखेनचतारके ॥ नांधकारेनचाभासेनचास्मिन्हृदयांबरे ॥ २७ ॥

किंचिदीषच्चेत्यावलंब्यपितन्मनः केवलंचितिचिन्मात्रेविश्रम्य सर्वत्रवस्तुनिनीरसंततआत्मरसंस्वरूपानंदास्वादतृप्तंतिष्ठतु । यद्येवंतिष्ठति तथाकार्यमित्यन्वयः ॥ २४ ॥ तत्रनवस्तुष्वित्येतस्यैवविवरणंनाकाशइत्यादि ॥ २५ ॥ अभ्यंतरंशरीराभ्यंतरं तस्यैवप्रपंचोनचप्राणइ त्यादिना ॥ २६ ॥ तारकेअक्षणि । तारकाकनीनिकाअस्यास्तीति अर्शआदिभ्योचइत्यचि तारकशब्दोऽक्षिपर्यायः । अन्यथाकनीनि कायांतारकशब्दस्यस्त्रीलिंगत्वात्तारकेइतिनोपपद्येते आभासेचित्प्रतिबिंबे ॥ २७ ॥

निर्मलेशुद्धेवस्तुनि ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ तत्रेति ॥ तत्रस्थआत्मनिष्ठः अजीवत्वंजीवन्मुक्ततामागतः व्यवहारंसर्वमाकरोतु करोतुवा । करणाकरणयोर्नास्तिविशेषइत्यर्थः ॥३२॥ विशेषाभावमाह ॥ अकुर्वन्निति ॥ क्रियाःविहितनिषिद्धरूपाः क्रियाफलैःस्वर्गनरकादिभिः ॥ ३३ ॥ अथवेति ॥ तमपिचेत्यांशंकिंचिच्चेत्यावलंब्यपीति पूर्वमभ्युपगतमपिचेत्यसंबंधमित्यर्थः । शांतचिद्घनःनिर्विकारचि

नजाग्रतिनचस्वप्नेनसुप्तेनचनिर्मले ॥ नासितेनचवापीतेरक्तादौशबलेनच ॥ २८ ॥ नचलेन स्थिरेनादौनमध्येनेतरत्रच ॥ नदूरेनांतिकेनाग्रेनपदार्थेनचात्मनि ॥ २९ ॥ नशब्दस्पर्शरूपेषुनमोहमदवृत्तिषु ॥ नगमागमचेष्टासुनकालकलनासुच ॥ ३० ॥ केवलंचितिविश्रम्यकिंचिच्चेत्यावलंब्यपि ॥ सर्वत्रनीरसमिवातिष्ठत्वात्मरसंमनः ॥ ३१ ॥ तत्रस्थोविगतासंगोजीवोऽजीवत्वमागतः ॥ व्यवहारमिमंसर्वंनकरोतुकरोतुवा ॥ ३२ ॥ अकुर्वन्नपिकुर्वन्वाजीवःस्वात्मरतिःक्रियाः ॥ क्रियाफलैर्नसंबंधमायातिखमिवांबुदैः ॥ ३३ ॥ अथवातमपित्यक्त्वाचेत्यांशंशांतचिद्घनः ॥ जीवस्तिष्ठतुसंशांतोज्वलन्मणिरिवात्मनि ॥ ३४ ॥ आत्मारामामहात्मानः प्रबुद्धाःपरमोदयाः ॥ बहिःपिच्छाग्रतरलाअंतर्मेरुरिवाचलाः ॥ ३५ ॥ चित्तेचेत्यदशाहीनेया स्थितिःक्षीणचेतसाम् ॥ सोच्यतेशांतकलनाजाग्रत्येवसुषुप्तता ॥ ३६ ॥



द्रूपः ॥ ३४ ॥ आत्मारामाइति ॥ आत्मन्येवारमंतिविश्राम्यंतीत्यात्मारामाःतादृशामहात्मानः । बहिःबाह्येंद्रियव्यापारे पिच्छाग्रवत्तरला लक्ष्यंते । अंतःअंतःकरणेतुमेरुरिवाचलाः आत्मनिष्ठत्वात् ॥ ३५ ॥ चित्तइति ॥ चित्तेचेत्यदशाहीने चेत्यसंबंधिनीभिर्वृत्तिभीरिक्तेसति

क्षीणचेतसांक्षीणवृत्तीनांयास्थितिःशांतकलनाप्रशांतवासनासैवस्थितिःजाग्रत्येवसुषुप्ततोच्यते ॥ ३६ ॥ एषेति ॥ एषैवसौषुप्तीस्थितिःअभ्यासयोगात्प्रौढासती तुरीयावस्थेतिकथिता । जाग्रदादिविलक्षणत्वेनतच्चितयापेक्षयातुर्यत्वात् ॥ ३७ ॥ अस्यामितिश्लोकद्वयंवाक्यम् ॥ अस्यांपूर्वोक्तायांतुर्यावस्थायां अविनाशिनींनिरपायांस्थितिंप्राप्य आनंदैकांतशीलत्वात् आनंदएवएकांतंनियतंशीलंस्वभावोयस्य आनंदमेवैकांतंशीलयतिअभ्यस्यतिवा यःतस्यभावात् निरंतरमानंदात्मकत्वात्अनानंदपदंस्वस्वरूपानंदरहितंपदंब्रह्मभावंगतःसन् ॥ ३८ ॥ ततोऽनंतरं अनानंदमहानंदकलातीतः अनानंदोब्रह्मानंदानुभवरहितः महानंदः तद्द्वभयकक्षामतिक्रांतः निर्विकल्पकतयाब्रह्मानंदेसम

एषैवरामसौषुप्तीस्थितिरभ्यासयोगतः ॥ प्रौढासतीतुर्यमितिकथितातत्त्वकोविदैः ॥ ३७ ॥ अस्यांतुतुर्यावस्थायांस्थितिंप्राप्याविनाशिनीम् ॥ आनंदैकांतशीलत्वादनानंदपदंगतः ॥ ३८॥ अनानंदमहानंदकलातीतस्ततोऽपिहि ॥ मुक्तइत्युच्यतेयोगीतुर्यातीतपदंगतः ॥ ३९ ॥ परिगलितसमस्तजन्मपाशःसकलविलीनतमोमयाभिमानः ॥ परमरसमयींप्रयातिसत्तांजलगतसैंधवखंडवन्महात्मा ॥ ४० ॥

रसीभावात् । तस्मात्तादृशोयोगीतुर्यातीतपदंगतोमुक्तइत्युच्यते । तुर्यातीतोमुक्तइत्युच्यतइत्यर्थः । तुर्यस्तुर्यातीतइतिचसविकल्पकनिर्विकल्पकसमाधिभाजोर्जीवन्मुक्तयोर्नामनी तत्रजाग्रदाद्यवस्थात्रयंतदभिमानिनश्चविश्वतैजसप्राज्ञरूपान्जीवान् स्वव्यतिरिक्ततयापश्यंस्तत्साक्षिणि चित्त्वमेवात्मस्वरूपंअनुसंदधानस्तुर्यउच्यते । तद्विकल्परहितस्तुचिन्मात्ररूपस्तुर्यातीतइति ॥ ३९ ॥ परिगलितइति ॥ परिगलिताःसमस्ताजन्महेतवःपाशाःमलकर्मादयोयस्मात् सकलाविलीनास्तमोमयाअज्ञानजनिताअभिमानादेहेंद्रियादिष्वहंममाभिमानायस्मिन्समहात्मा परमरसमयींपरमानंदरूपांसत्तांप्रयाति जलगतसैंधवखंडवत् । यथाहिसैंधवोलवणघनोजलस्यांतर्निहितःसन्परमामुक्त

चेतनोनचैतन्याश्रयत्वात् स्वयमेवचैतन्यरूपत्वात्। चैतन्याश्रयोहिचेतनउच्यते शौक्ल्याश्रयःशुक्लइतिवत्। नहिवेदांतिनांमतेचैतन्याद्भिन्नमात्मनःस्वरूपमस्ति। जडश्चन सर्वप्रकाशकत्वात् असन्नसद्रूपत्वात् सन्मयोनअस्तीतिप्रतीत्यविषयत्वात् अहंशब्दवाच्योनदेहेंद्रियादिभिरपरिच्छिन्नत्वात् अन्योनसर्वात्मकत्वात् एकःएकत्वसंख्याश्रयोननिर्गुणत्वात् संख्यायाश्चगुणरूपत्वात्अनेकश्चन ॥ ४६ ॥ यदिति ॥ मनःषष्ठेंद्रियाश्रयं मनःषष्ठंयेषामिंद्रियाणांचक्षुरादीनांतेषामाश्रयंविषयभूतंदृश्यतांप्राप्तं यदिदंजगत्तज्जगदतीतंअतिक्रांतंतद्विलक्षणं यस्मात् तत्पदमात्मतत्त्वं तत्तस्मात्कारणात्तदात्मतत्त्वंइहजगतिकिंचिदिवनभवतिकेनापिनोपमीयतइत्यर्थः ॥४७॥ नेति ॥ बंधनिवृत्तिर्हिमोक्षोनाम

नचेतनोनचजडोनचैषोऽसन्नसन्मयः ॥ नाहंनान्योनचैवैकोनवानेकोऽपिराघव ॥ ४६ ॥ यदिदंदृश्यतांप्राप्तंमनःषष्ठेंद्रियाश्रयम् ॥ सर्वातीतंपदंरामयन्नकिंचिदिवेहतत् ॥ ४७ ॥ नमोक्षोनभसःपृष्ठेनपातालेनभूतले ॥ सर्वाशासंक्षयेचेतःक्षयोमोक्षइतीष्यते ॥ ४८ ॥ मोक्षोमेऽस्त्विवतिचिंतांतर्जाताचेदुत्थितंमनः ॥ मननोत्थेमनस्युच्चैर्बंधःसांसारिकोदृढः ॥ ४९ ॥ आत्मन्यतीतेसर्वस्मात्सर्वरूपेऽथवातते ॥ कोबंधःकश्चवामोक्षोनिर्मूलंमननंकुरु ॥ ५० ॥ अध्यात्ममतिराशांतःपूर्णःपावनमानसः ॥ निर्मृष्टकामपंकांकच्छिन्नबंधनिजभ्रमः ॥ ५१ ॥

सचचेतसोबंधरूपत्वात् तन्निवृत्तिरूपमेवेतिभावः ॥ ४८ ॥ मोक्षइति ॥ मोक्षोमेऽस्तुभूयादितिचिंताअंतर्जाताचेन्मनउत्थितंस्यात् मनसिचमननेनसंकल्पेनोत्थितेसति सांसारिकःसंसारहेतुर्बंधोदृढःस्यात् ॥ ४९ ॥ आत्मनीति ॥ आत्मनिसर्वस्मादतीतेविश्वविलक्षणे अथवासर्वरूपेसर्वात्मकेततेव्याप्तेवासति कोबंधःकश्चमोक्षः । प्रपंचातीतत्वेप्रपंचात्मकत्वेवाबंधमोक्षयोरभावात् । तस्मान्मननंसंकल्पंनिर्मूलंकुरु ॥ ५० ॥ मननस्यमूलनाशेसतितस्यांगंप्रस्तौतित्रिभिःश्लोकैः ॥ अध्यात्मेति ॥ अध्यात्मम्आत्मनिरतिर्यस्य आशांतःप्रशांतःपूर्णःपरिपूर्णदृ

ष्टांरसमर्यादिवरूपांसत्तांस्वरूपसत्तांप्रयातितद्वदिति ॥ ४० ॥ जडेति ॥ जडाजडदृशोः इदमितिदृश्यविषयासंवित्जडदृष्टिः अहमिति द्रष्टृविषयासंविदजडदृष्टिः तयोर्मध्येयत्तत्त्वमस्ति इदंतयाअहंतयावातदुभयानुवृत्तंयच्चिन्मात्ररूपंवस्तुप्रकाशते तदेवपारमात्मिकं परमात्मसंबंधितत्त्वंस्वरूपमितिबृहदारण्यकादिषूपनिषत्सुबहुशःप्रोक्तम् ॥ ४१ ॥ दृश्येति ॥ दृश्यानांरम्यवस्तूनां दर्शनेनवृत्तिज्ञानेनसंबंधेसति यत्पारमार्थिकंपरमार्थेस्वात्मनिसंभूतमनुभूतिमयंअनुभवात्मकंस्वतएवानुभूयमानंसुखमस्ति तदेवसारंसुखंब्रह्मेतिकथ्यते । कुतस्तस्मात्पूर्वोक्ताद्धेतोःपूर्वमानंदात्मकस्यचिन्मात्रस्यैवपरमात्मस्वरूपत्वेनाभिधानादित्यर्थः ॥ ४२ ॥ तर्हिविषयसुखस्यापिस्वात्मरूपत्वेबंधमोक्षवि

वसिष्ठउवाच ॥ जडाजडदृशोर्मध्येयत्तत्त्वंपारमात्मिकम् ॥ तदेवबहुशःप्रोक्तंबृहदारण्यकादिषु ॥ ४१ ॥ दृश्यदर्शनसंबंधेयत्सुखंपारमार्थिकम् ॥ अनुभूतिमयंतस्मात्सारंब्रह्मेतिकथ्यते ॥ ४२ ॥ दृश्यदर्शनसंबंधेसुखसंविदनुत्तमा ॥ दृश्यसंवलिताबंधस्तन्मुक्तामुक्तिरुच्यते ॥ ४३ ॥ दृश्यदर्शनसंबंधेयानुभूतिरनामया ॥ तामवष्टभ्यतिष्ठत्वंसौषुप्तींभजतेस्थितिम् ॥ ४४ ॥ सैवतुर्यत्वमायातितस्यांदृष्टौतुराघव ॥ नात्मास्थूलोनचैवाणुर्नप्रत्यक्षोनचेतरः ॥ ४५ ॥

भागोनस्यादित्यतआह ॥ दृश्येति ॥ दृश्यदर्शनसंबंधे दृश्यदर्शनयोःसंबंधे याअनुत्तमासुखसंवित्सादृश्यसंवलिताचेत् दृश्योपहिताचेद्बंध इत्युच्यते । तन्मुक्तादृश्यासंस्पृष्टातत्सुखसंविन्मुक्तिरिति ॥ ४३ ॥ दृश्येति ॥ दृश्यदर्शनसंबंधे अनामयानिरुपद्रवासुखमयानुभूतिःतामेवानुभूतिमवष्टभ्यावलंब्यतिष्ठ तस्यामेवानुभूतौविश्रांतोभव सौषुप्तींपूर्वोक्तांतेस्थितिंभज ॥ ४४ ॥ सैवेतिश्लोकद्वयंवाक्यम् ॥ सैवसौषुप्तीस्थितिरेवतु यत्रतुर्यावस्थात्वमायाति तस्यांतुर्यात्मिकायांदृष्टौतु । आत्मास्थूलोनअमूर्तत्वात् अणुश्चनपरिपूर्णत्वात् प्रत्यक्षोनइंद्रियागम्यत्वात् इतरःपरोक्षश्चन अपरोक्षतयाप्रकाशमानत्वात् ॥ ४५ ॥

चेतनोनचैतन्याश्रयत्वात् स्वयमेवचैतन्यरूपत्वात्। चैतन्याश्रयोहिचेतनउच्यते शौक्ल्याश्रयःशुक्लइतिवत्। नहिवेदांतिनांमतेचैतन्याद्भि न्नमात्मनःस्वरूपमस्ति। जडश्चन सर्वप्रकाशकत्वात् असन्नसद्रूपत्वात् सन्मयोनअस्तीतिप्रतीत्यविषयत्वात् अहंशब्दवाच्योनदेहेंद्रियादिभि रपरिच्छिन्नत्वात् अन्योनसर्वात्मकत्वात् एकःएकत्वसंख्याश्रयोननिर्गुणत्वात् संख्यायाश्चगुणरूपत्वात्अनेकश्चन ॥ ४६ ॥ यदिति ॥ म नःषष्ठेंद्रियाश्रयं मनःषष्ठंयेषामिंद्रियाणांचक्षुरादीनांतेषामाश्रयंविषयभूतंदृश्यतांप्राप्तं यदिदंजगत्तज्जगदतीतंअतिक्रांतंतद्विलक्षणं यस्मात् त त्पदमात्मतत्त्वं तत्तस्मात्कारणात्तदात्मतत्त्वंइहजगतिकिंचिदिवनभवतिकेनापिनोपमीयतइत्यर्थः ॥४७॥ नेति ॥ बंधनिवृत्तिर्हिमोक्षोनाम

नचेतनोनचजडोनचैषोऽसन्नसन्मयः ॥ नाहंनान्योनचैवैकोनवानेकोऽपिराघव ॥ ४६ ॥ यदि दंदृश्यतांप्राप्तंमनःषष्ठेंद्रियाश्रयम् ॥ सर्वातीतंपदंरामयन्नकिंचिदिवेहतत् ॥ ४७ ॥ नमोक्षोन भसःपृष्ठेनपातालेनभूतले ॥ सर्वाशासंक्षयेचेतःक्षयोमोक्षइतीष्यते ॥ ४८ ॥ मोक्षोमेऽस्त्विवति चिंतांतर्जाताचेदुत्थितंमनः ॥ मननोत्थेमनस्युच्चैर्बंधःसांसारिकोदृढः ॥ ४९ ॥ आत्मन्यती तेसर्वस्मात्सर्वरूपेऽथवातते ॥ कोबंधःकश्चवामोक्षोनिर्मूलंमननंकुरु ॥ ५० ॥ अध्यात्ममतिरा शांतःपूर्णःपावनमानसः ॥ निर्मृष्टकामपंकांकच्छिन्नबंधनिजभ्रमः ॥ ५१ ॥

सचचेतसोबंधरूपत्वात् तन्निवृत्तिरूपमेवेतिभावः ॥ ४८ ॥ मोक्षइति ॥ मोक्षोमेऽस्तुभूयादितिचिंताअंतर्जाताचेन्मनउत्थितंस्यात् मनसि चमननेनसंकल्पेनोत्थितेसति सांसारिकःसंसारहेतुर्बंधोदृढःस्यात् ॥ ४९ ॥ आत्मनीति ॥ आत्मनिसर्वस्मादतीतेविश्वविलक्षणे अथवासर्व रूपेसर्वात्मकेततेव्यापेसत्यासति कोबंधःकश्चमोक्षः । प्रपंचातीतत्वेप्रपंचात्मकत्वेवाबंधमोक्षयोरभावात् । तस्मान्मननंसंकल्पंनिर्मूलंकुरु ॥ ५० ॥ मननस्यमूलनाशेसतितस्यांगंप्रस्तौतितित्रिभिःश्लोकैः ॥ अध्यात्मेति ॥ अध्यात्ममात्मनिरतिर्यस्य आशांतःप्रशांतःपूर्णःपरिपूर्णद

ष्टिः पावनमानसः पावनमात्मज्ञाननिर्धूतपापत्वाद्विशुद्धंमानसंयस्य ॥ ५१ ॥ प्राप्ताअनुत्तमाआत्मनिविश्रांतिर्यस्यसतादृशोनकिंचिदभि वांछति ॥ ५२ ॥ ५३ ॥ आपदिति ॥ पुष्पगुच्छंपुष्पस्तबकम् ॥ ५४ ॥ गोःपदमिति ॥ आशादिशः समुद्गिकाःसंपुटिकाः ॥ ५५ ॥ नैराश्येऽप्यात्मानुसंधानमेवहेतुरित्याह ॥ शरीरादिति ॥ ज्ञंचेतनमात्मानं विकर्तितांगकस्यविकृतावयवस्यशरीरातिरिक्तेसुखस्वरूपेस्वात्मनिविज्ञातेसति शरीरेऽपिकिलानादरः किमुतबाह्यार्थेष्वितिभावः ॥ ५६ ॥ अनुभूतइति ॥ स्वादुर्गुडोऽनुभूतःसन्दाहविकर्तनैरपिदेहसं

द्वंद्वदोषभयान्मुक्तस्तीर्णसंसारसागरः ॥ प्राप्तानुत्तमविश्रांतिर्लब्धालभ्यपदस्यहि ॥ ५२ ॥ अनिवृत्तपदंप्राप्तःकर्मणामनसागिरा ॥ सर्वाप्तिवांछितारंभोनकिंचिदभिवांछति ॥ ५३ ॥ आपत्करंजपरशुंपरायानिर्वृतेःपदम् ॥ पुष्पगुच्छंशमतरोरालंबस्वनिराशताम् ॥ ५४ ॥ गोःपदंपृथिवीमेरुःस्थाणुराशाःसमुद्गिकाः ॥ तृणंत्रिभुवनंरामनैराश्यालंकृताकृतेः ॥ ५५ ॥ शरीराद्व्यतिरिक्तंज्ञंपश्यतःप्रविवेकिनः ॥ विकर्तितांगकस्यापिनकिंचित्प्रविकर्तितम् ॥ ५६ ॥ अनुभूतोगुडःस्वादुरपिदाहविकर्तनैः ॥ नशक्यतेऽन्यथाकर्तुंतत्त्वालोकस्तथात्मनः ॥ ५७ ॥ परव्यसनिनीनारीव्यग्रापिगृहकर्मणि ॥ तदेवास्वादयत्यंतर्नवसंगरसायनम् ॥ ५८ ॥

तापनच्छेदनादिभिरपिदुःखसाधनैरन्यथाकर्तुंयथानशक्यते अनुभूतस्यगुडस्यस्वादुतयैवानुसंधीयमानत्वात् तथाआत्मनःस्वत्त्वावलोकोऽप्यनुभूतोऽन्यथाकर्तुंनशक्यते स्वरूपसुखस्यविस्मर्तुमशक्यत्वात् । अतिशयितस्यचसुखांतरस्याभावात् । यदाहसर्वज्ञयोगी । यत्संगिसंगतिपरंपरयापिलोकःप्रेमास्पदीभवतिसातिशयोपयोगात् । निर्हेतुकानतिशयानवधिस्वधामकिंवर्ण्यतेममनिजंतदखंडसौख्यमिति ॥ ५७ ॥ एतदेवदृष्टांतंसमुपपादयन्नाह ॥ परेतिश्लोकद्वयंव्याख्यातम् ॥ यथापरपुरुषव्यसनिनीपरपुरुषासक्ता स्वैरिणीनारीगृहकर्मणिस्वीयेगृहकार्येऽव्यग्रा

पिव्यासक्तापि तदेवपूर्वानुभूतमेवनवसंगरसायनंनूतनसंभोगसौख्यंआस्वादयतिअनुसंधत्ते ॥ ५८ ॥ एवंपरेतत्त्वेविश्रांतिमागतोधीरोऽपि बहिर्देहादौव्यवहरन्नपिव्यवहारयुक्तोऽपिअंतश्चित्तेतदेवपरंतत्त्वमास्वादयति । तत्त्वनिष्ठस्यबहिर्व्यवहारोनसमाधिभंगायेतिभावः ॥ ५९ ॥ असंसर्गादिति ॥ पदार्थानामसंसर्गाद्धेतोः अंतःशांतिःचित्तस्यात्मनिलयएवमुक्तता । साचदेहेसत्यसत्यपिवाअनघाकृतेःनिष्पापस्यैवसं भवति ॥ ६० ॥ यइति ॥ योगतस्नेहोबाह्यवस्तुन्यनासक्तःस्वात्मरतिरेवजीवति सजीवन्मुक्तउच्यते । सस्नेहजीवितोबाह्यवस्तुनिष्ठस्तुबद्ध

एवंतत्त्वेपरेशुद्धेधीरोविश्रांतिमागतः ॥ तदेवास्वादयत्यंतर्बहिर्व्यवहरन्नपि ॥ ५९ ॥ असंसर्गा त्पदार्थानामंतःशांतिर्विमुक्तता ॥ सत्यसत्यपिदेहेसासंभवत्यनघाकृतेः ॥ ६० ॥ योजीवतिग तस्नेहःसजीवन्मुक्तउच्यते ॥ सस्नेहजीवितोबद्धोमुक्तएवतृतीयकः ॥ ६१ ॥ नापीक्षतेभविष्यच्च वर्तमानेनतिष्ठति ॥ नसंस्मरत्यतीतंचसर्वमेवकरोतिच ॥ ६२ ॥ अनुबंधपरेजंतावसंसक्तमनाः सदा ॥ भक्तेभक्तिसमाचारःशठेशठइवस्थितः ॥ ६३ ॥ बालोबालेषुवृद्धेषुवृद्धोधीरेषुधैर्यवान् ॥ युवायौवनवृत्तेषुदुःखितेषुसदुःखधीः ॥ ६४ ॥ धीरधीरुदितानंदःपेशलःपुण्यकीर्तनः ॥ प्राज्ञः प्रसन्नमधुरोदैन्यादपगताशयः ॥६५॥ अपिशीतरुचावर्केसुतप्तेपींदुमंडले ॥ अप्यधःप्रसरत्यग्नौ जीवन्मुक्तोनविस्मयी ॥ ६६ ॥

उच्यते । तृतीयकःयोगतस्नेहजीवितोनभवतिसस्नेहजीवितश्चन विगतस्नेहत्वाद्विदेहत्वाच्च । सतुमुक्तएवनिरुपपदेनैवमुक्तशब्देनोच्यतइत्यर्थः ॥ ६१ ॥ नेतिश्लोकषट्कमेकंवाक्यम् ॥ भाविभवद्भूतेषुअनासक्तोव्यवहरन्भक्तशठबालवृद्धादिषुतत्तच्चेष्टामनुकुर्वन्धैर्यादिगुणयुक्तोजीवन्मु क्तोऽर्भकादिषुविपरीतस्वभावेष्वपिविस्मयादिविकारंनप्राप्नोति ॥ ६२ ॥ ६३ ॥ ६४ ॥ ६५ ॥ ६६ ॥

कस्मात्कारणात् इमाश्चिदात्मनःशक्तयइत्थंबहुधास्फुरंतीतिचिच्छक्तिविलासमनुसंदधतोऽस्यजीवन्मुक्तस्य आश्चर्यजालेषुकुतूहलंनाभ्यु देतीतिसंबंधः ॥ ६७ ॥ यथेति ॥ जलस्यपरिस्पंदात्परितःचलनाद्धेतोर्वर्तुलआवर्तोऽम्भसोव्यतिरिक्तइवदृश्यते ॥ ६८ ॥ तथाचित्तस्यस्पं दाच्चिदाकाशेजगदसत्यमपिसदिवदृश्यते ॥ ६९ ॥ यनेति ॥ चित्तंयेनकारणेनस्पंदतेयेनवानस्पंदतेतत्स्पंदकारणमस्पंदकारणंचमेब्रूहि । ये नलद्धुक्तेनप्रकारेणतदेवचित्तंचिकित्सेयंस्पंदरहितंविदध्याम् ॥ ७० ॥ चित्तस्पंदनिवृत्त्युपायमुपदिदिक्षुःचित्तस्पंदनिवृत्तिरेवचित्तनाशइति

चिदात्मनइमाइत्थंप्रसरंतीहशक्तयः ॥ इत्यस्याश्चर्यजालेषुनाभ्युदेतिकुतूहलम् ॥ ६७ ॥ य थाजलपरिस्पंदाद्व्यतिरिक्तइवांभसः ॥ दृश्यतेवर्तुलावर्तश्चित्तस्पंदात्तथाजगत् ॥ ६८ ॥ यथा व्योम्नीक्षणस्पंदात्पिच्छमौक्तिकमंडलम् ॥ दृश्यतेसदिवासत्यंचित्तस्पंदात्तथाजगत् ॥ ६९ ॥ श्रीरामउवाच ॥ येनप्रस्पंदतेचित्तंयेननस्पंदतेऽथवा ॥ तद्ब्रह्मन्ब्रूहिमेयेनचिकित्सेयंतदेवहि ॥७०॥ वसिष्ठउवाच ॥ यथाशौक्ल्यंहिमेरामतिलेतैललवोयथा ॥ दृष्टौराघवसंसृष्टौचित्तस्पंदौतथै वहि ॥ ७१ ॥ द्वौक्रमौचित्तनाशाययोगोज्ञानंचराघव ॥ योगस्तद्वृत्तिरोधोहिज्ञानंसम्यगवेक्षणम् ॥ ७२ ॥ चित्तंप्राणपरिस्पंदमाहुरागमभूषणाः ॥ तस्मिन्संरोधितेनूनमुपशांतंभवेन्मनः ॥ ७३ ॥ मनस्पंदोपशांत्यायंसंसारःप्रविलीयते ॥ सूर्यालोकपरिस्पंदशांतौव्यवहृतिर्यथा ॥ ७४ ॥

दर्शयितुंचित्तस्पंदयोरभेदमाह ॥ यथेति ॥ हिमशौल्ययोरिवतिलतैलयोरिवच चित्तस्पंदयोरपिविभागोनदृश्यतइत्यर्थः ॥ ७१ ॥ द्वाविति ॥ क्रमाद्युपायौतद्वृत्तिरोधश्चित्तवृत्तिनिरोधः । यथाचपातंजलंसूत्रम् । योगश्चित्तवृत्तिनिरोधइति ॥७२॥ चित्तमितिश्लोकद्वयंवाक्यम् ॥ प्रा णपरिस्पंदंप्राणेनपरिस्पंदोयस्यतत्प्राणाधीनस्पंदमित्यर्थः । तस्मिन्प्राणवायौ ॥ ७३ ॥ ७४ ॥

अनिशमिति ॥ गहनगामिनांदुर्बोधगमनानाम् । प्राणादीनामित्यादिशब्देनप्राणापानादिसंग्रहः ॥ ७५ ॥ तथैकादशभिःश्लोकैःप्राणस्पंद निरोधप्रकारोनिरूप्यते ॥ शास्त्रेतिश्लोकद्वयंवाक्यम् ॥ शास्त्रंअध्यात्मशास्त्रं सज्जनसंपर्कोब्रह्मवित्संगः वैराग्यंविषयेष्वरतिः अभ्यासःसमा ध्यभ्यासः तएवयोगाउपायाः तेभ्योहेतुभ्यःपूर्वंप्रथमंसंसारवृत्तिषुसांसारिकव्यवहारेषु अनास्थायामनादरेकृतास्थायांदृढायांसत्याम् ॥७६॥ चिरमेकतयोदितात्एकप्रकारतयाउद्धतात् यथाभिवांछितध्यानात् अभिवांछितमभिवांछा तामनतिक्रम्यध्यानात् । यत्रयत्रसरसवाहिन्य भिवांछातस्यतस्यध्यानाद्धेतोःयएकतत्त्वघनाभ्यासः एकस्यैववस्तुस्वरूपस्यनिरंतरंपुनःपुनरनुसंधानं तस्मादुपायात्प्राणस्पंदःप्राणवायोश्चां

श्रीरामउवाच ॥ अनिशंचरतांदेहगेहेगहनगामिनाम् ॥ प्राणादीनांपरिस्पंदोवायुनारोध्यतेक थम् ॥ ७५ ॥ वसिष्ठउवाच ॥ शास्त्रसज्जनसंपर्कवैराग्याभ्यासयोगतः ॥ अनास्थायांकृतास्था यांपूर्वंसंसारवृत्तिषु ॥ ७६ ॥ यथाभिवांछितध्यानाच्चिरमेकतयोदितात् ॥ एकतत्त्वघनाभ्यासा त्प्राणस्पंदोनिरुध्यते ॥ ७७ ॥ पूरकाद्यनिलायामादृढाभ्यासादखेदजात् ॥ एकांतध्यानयोगा च्चप्राणस्पंदोनिरुध्यते ॥ ७८ ॥ ओंकारोच्चारणप्रांतशब्दतत्त्वानुभावनात् ॥ सुषुप्तेसंविदोजाते प्राणस्पंदोनिरुध्यते ॥ ७९ ॥

चल्यंनिरुध्यते ॥ ७७ ॥ पूरकेति ॥ दृढाभ्यासादृढंयथातथापुनःपुनःपरिशीलनाद्धेतोः । अखेदतोऽप्रयासजन्यःकेवलकुंभकसिद्धिपर्यंतो यःपूरकाद्यनिलायामःपूरककुंभकरेचकप्रकारःप्राणायामः तस्माद्धेतोरेकांतध्यानयोगाच्च विविक्तप्रवर्तितध्यानयोगाच्चप्राणस्पंदोनिरुध्य ते । यथाचयाज्ञवल्क्यः केवलंकुंभकंप्रक्रम्याह । एषप्राणजयोऽपापःसर्वमृत्यूपघातकः इति ॥ ७८ ॥ ओंकारस्येति ॥ प्रणवोच्चारणेसति प्रांतेपर्यंतेयच्छब्दतत्त्वंतस्यानुसंभावनात् अनुसंधानाद्धेतोः संविदोबहिर्मुखतायाश्छिन्नत्वे सुषुप्तेनिलीनेजातेसति प्राणस्पंदोनिरुतध्ये ।

अत्रतुनादानुसंधानस्यमनोलयहेतुत्वात्तद्वारेणप्राणलयहेतुत्वमुक्तंहठप्रदीपिकायाम् । नासनंसिद्धसदृशंनकुंभःकेवलोपमः । नखेचरीसमामुद्राननादसदृशोलयइति । काष्ठेप्रवर्तितोवह्निःकाष्ठेनसहशाम्यति । नादेप्रवर्तितंचित्तंनादेनसहलीयते । विस्मृत्यसकलंबाह्यंनादेदुग्धांबुवन्मनः । एकीभूयाथसहसाचिदाकाशेविलीयते । इति ॥ ७९ ॥ तालुमूलेति ॥ जिह्वामूलस्योपरितनौवक्रांतर्भागौतालुनी तयोर्मूलंमध्यभागः तद्गतांतत्रस्थितांघंटिकांलंबिकांसूक्ष्मजिह्वारूपेणलंबमानंमांसखंडं यत्नात्प्रयत्नविशेषात् जिह्वयासाधनभूतयाआक्रम्यप्राणेऊर्ध्वरंध्रंगतेऊर्ध्वरंध्रंकपालकुहरं यद्विसुषुम्नायाउपरितनंद्वारमुच्यते ॥ यदाहश्रुतिः ॥ अंतरेणतालुकेयएषस्तनइवावलंबतेसेंद्रयोनिः यत्रासौकेशांतोविवर्ततेव्यपोह्यशीर्षकपाले । इति । तादृशमूर्ध्वरंध्रंगतेसतिप्राणस्पंदोनिरुध्यते । अनेनच लंबिकायोगःप्रदर्शितः । यःखेचरीतिनभोमुद्रेतिचोच्यते । तदुक्तंविवेकमार्तंडे । कपालकुहरेजिह्वाप्रविष्टाविपरीतगा । भ्रुवोरंतरगादृष्टिर्मुद्राभवतिखेचरी । इति । अत्रचप्रयत्नादित्यनेनजिह्वायादैर्घ्यसिद्धयेचालनदोहनादिरूपोयत्नविशेषउक्तः । तदुक्तंहठप्रदीपिकायाम् । छेदनचालनदोहैःकलांक्रमेणप्रवर्धयेत्तावत् । सायावद्भ्रूमध्यंस्पृशतितदानींहिखेचरीसिद्धिरिति । कलाजिह्वातस्याश्छेदनंनामऊर्ध्वगमनप्रतिबंधकस्याधोभागस्थितस्यचर्मणश्छेदः । चालनंपुनरार्द्रवस्त्रखंडवेष्टितायाःजिह्वायाःपाणिभ्यांदृढंगृहीत्वासव्यापसव्यंभ्रमणम् । दोहनंतुपाणिभ्यांपर्यायेणशनैःशनैराकर्षणम् ॥ ८० ॥ द्वादशेति ॥ नासाग्रेनासिकायाअग्रभागेद्वादशांगुलपर्यंते नासाग्रमारभ्यद्वादशांगुलपरिमितेविमलांबरेनिर्मलनभोभागे दृशोर्लक्ष्यभूतेसंविद्दृशिवृत्तिज्ञाने प्रशाम्यंत्यांलीयमानायांसत्यां प्राणस्पंदोनिरुध्यते । तथाचयाज्ञवल्क्यः । नासाग्रेधारणंगार्गिवायोर्विजयकारणमिति ॥ ८१ ॥

**तालुमूलगतांयत्नाज्जिह्वयाक्रम्यघंटिकाम् ॥ ऊर्ध्वरंध्रगतेप्राणेप्राणस्पंदोनिरुध्यते ॥ ८० ॥ द्वादशांगुलपर्यंतेनासाग्रेविमलांबरे ॥ संविद्दृशिप्रशाम्यंत्यांप्राणस्पंदोनिरुध्यते ॥ ८१ ॥**

अभ्यासादिति ॥ अभ्यासाद्योगशास्त्रेषुनिरूपितातपवननिरोधाभ्यासात् । उर्ध्वरंध्रेणसुषुम्नामार्गेणप्राणेप्राणवायौताल्वूर्ध्वद्वादशांतगे । तालु
शब्देनषोडशारंविशुद्ध्याख्यंचक्रमुच्यते । ऊर्ध्वशब्देनब्रह्मरंध्रं द्वादशांतमित्यनाहताख्यंद्वादशारंचक्रं तथाचतालुगेऊर्ध्वगेद्वादशांतगेवासति
गलितसंवित्तौविगलितबहिर्मुखसंविदिसति प्राणस्पंदोनिरुध्यते । तत्रचऊर्ध्वरंध्रेणकपालकुहरेणप्राणेताल्वूर्ध्वद्वादशांतगेतालुस्थानादूर्ध्वंद्वा
दशांगुलपर्यंतंब्रह्मरंध्रंगतेसतीतिव्याख्यानम् । तालुमूलगतामित्यादिनापूर्वोक्तेनखेचरीयोगेनपुनरुक्तमित्युपेक्षितम् । अत्रचताल्वादीनांप्राण
मर्मस्थानत्वात्तद्गतस्यप्राणस्यतत्रलयोयुज्यतइत्यनुसंधेयम् । यदाहयाज्ञवल्क्यः । पादांगुष्ठौचगुल्फौचजंघामध्यौतथैवच । स्फिजोर्मूलेचजा
न्वोमध्यावूरुद्वयस्यच ॥ पायुमूलंततःपश्चान्मध्यौदेहस्यमेढ्रकम् । नाभिश्चहृदयंगार्गिकंठकूपंतथैवच ॥ तालुमूलंचनासायामूलंचाक्ष्णोश्च
मंडले । भ्रुवोर्मध्यंललाटंचमूर्धाचमुनिसत्तमे ॥ मर्मस्थानानिचैतानीति । अत्रचाभ्यासशब्देनजितेंद्रियस्यविविक्तदेशवर्तिनो हितमितमे

अभ्यासादूर्ध्वरंध्रेणताल्वूर्ध्वद्वादशांतगे ॥ प्राणेगलितसंवित्तौप्राणस्पंदोनिरुध्यते ॥ ८२ ॥
भ्रूमध्येतारकालोकशांतावंतमुपागते ॥ चेतनेकेतनेबद्धेप्राणस्पंदोनिरुध्यते ॥ ८३ ॥

ध्याशिनोगुरूपदिष्टमार्गेण धौतबस्तिप्रमुखैर्मूर्धाधःशोधनैःकरणैर्विशुद्धदेहस्य आसनप्राणायामाभ्यांशोधितनाडीकस्य सुषुम्नायांप्राण
संचारहेतुर्महामुद्राद्यभ्यासोविवक्षितः । ताश्चमहामुद्रादयोदशमुद्राः । तदुक्तंहठप्रदीपिकायाम् । महामुद्रामहाबंधोमहावेधश्चखेचरी ॥
उड्डीयानंमूलबंधोबंधोजालंधराभिधः । करणीविपरीताख्यावज्रोलीशक्तिचालनम् ॥ मुद्राणांदशकंचेदंगोपनीयंप्रयत्नतइति । खिलापिम
ध्यमानाडीदृढाभ्यासेनयोगिनाम् ॥ आसनप्राणसंयाममुद्राभिःसरलाभवेदितिच । महामुद्रादिलक्षणंतुग्रंथविस्तारभयान्नेहलिखितंतद्ग्रंथांत
राद्बोध्यम् ॥ ८२ ॥ भ्रूमध्यइति ॥ भ्रुवोर्मध्येह्यसंव्योमचक्रंतद्धिचिन्मयस्यज्योतिषउपलब्धिस्थानम् । तदुक्तम् । भ्रूयुगमध्यगतंसच्छि
खिविद्युत्सूर्यवज्जगद्भाति । केषांचित्पुण्यदृशामुन्मीलतिचिन्मयंज्योतिरिति ॥ तद्यदालक्षणंविधीयतेतदातत्रैवतारकालोकशांतौ । तार

काक्ष्णः कनीनिका । तारकयोरालोकोदर्शनव्यापारःतस्यशांताउुपरतौसत्यां केतने केतनंसंकेतः अस्यशब्दस्यायमर्थइतिपुरुषकल्पितोवा
च्यवाचकनियमः तत्रबद्धंतदनुसारियच्चेतनंविकल्पज्ञानमितियावत् तस्मिन्नंतमुपागतेसतिप्राणस्पंदोनिरुध्यते । बुद्धइतिपाठेतु केतनेश
ब्दार्थसंबंधे प्रबुद्धंयच्चेतनंशब्दार्थसंबंधानुसंदधद्विकल्पकंविज्ञानंतस्मिन्नंतमुपागतइतिव्याख्येयम् ॥ ८३ ॥ झटितीति ॥ अत्रज्ञानंझटित्ये
वउद्भूतं असत्यामेवजिज्ञासायामकस्मादेवसमुत्पन्नं वासनावशाद्विषयसंनिधानाद्वा तस्मिन्ज्ञानेदृढायितेदृढीकृते तथैवदृढंभाविते असं
स्पृष्टविकल्पांशेविगलितविकल्पभागेसति प्राणस्पंदोनिरुध्यते । यदासमुत्पन्नंवृत्तिज्ञानमेवदृढंभाव्यमानंविगलितविषयांशंसन्मात्रंसंपद्यते
तदापिप्राणस्पंदनिरोधइतिभावः ॥ ८४ ॥ चिरकालमिति ॥ चिरकालंमुनेर्मौनव्रतनिष्ठस्ययोगिनोहृदाचित्तेन एकांतव्योमसंवेदनात्

**झटित्येवयदुद्भूतंज्ञानंतस्मिन्दृढायिते ॥ असंस्पृष्टविकल्पांशेप्राणस्पंदोनिरुध्यते ॥ ८४ ॥ चिरका**
**लंहृदैकांतव्योमसंवेदनान्मुनेः ॥ अवासनमनोध्यानात्प्राणस्पंदोनिरुध्यते ॥ ८५ ॥ एभिःक्रमैस्तथा**
**न्यैश्चनानासंकल्पकल्पितैः ॥ नानादेशिकवक्त्रस्थैःप्राणस्पंदोनिरुध्यते ॥ ८६ ॥**

एकांतंनियतंयद्व्योमसंवेदनमाकाशभावनंतस्मात्संभूतंयदवासनमनोध्यानं विषयवासनाविनिर्मुक्तंचित्तनिर्वृत्तंयद्ध्यानं तस्मादपिप्राणस्पं
दोनिरुध्यते । तत्रचहठंविनाराजयोगोराजयोगंविनाहठोनसिध्यति । ततोयुग्ममानिष्पतेःसमभ्यसेदितिन्यायान्मारुतस्यविधिंसम्यग्म
नोयुक्तंसमभ्यसेत् । इतरत्रनकर्तव्यामनोवृत्तिर्मनीषिणेतिवचनाच्च मनोनिरोधेनसहैवप्राणनिरोधोऽभ्यसनीयइति । तत्रतत्रसुषुप्तेसंविदो
जातेसंविद्दृशिप्रशाम्यंत्यामित्यादिनाप्रतिपादितमित्यनुसंधेयम् ॥ ८५ ॥ एभिरिति ॥ एभिःपूर्वोक्तैःक्रमैरुपायैः तथानानासंकल्पकल्पि
तैःनानादेशिकवक्त्रैर्नानाविधाचार्यप्रोक्तैरन्यैश्चक्रमैः प्राणस्पंदोनिरुध्यते । तत्रचान्यैरित्यनेनस्थानांतरावलंबिनोयेप्राणनिरोधोपायाः ये
चचित्तलयोपायाःपूर्वाचार्यैःप्रदर्शिताःतेसर्वेसंगृह्यंते । चित्तलयोपायानांचप्राणलयोपायत्वात् । तदुक्तंहठप्रदीपिकायाम् । पवनोबध्यते

येनमनस्तेनैवबध्यते । मनश्चबध्यतेयेनपवनस्तेनबध्यतइति ॥ तेचचित्तलयोपायाआनंत्यान्नप्रदर्शयितुंशक्यंते । तदुक्तंहठप्रदीपिकायाम् ।
तेचादिनाथेनसपादकोटिलयप्रकाराःकथिताःसंतीति ॥ ८६ ॥ अभ्यासेनेति ॥ भव्यस्यभाग्यवतोयोगिनः ॥ ८७ ॥ अभ्यासेनेति ॥
निर्वाणंकैवल्यरूपमात्मतत्त्वम् ॥ ८८ ॥ योगेति ॥ द्वौक्रमौचित्तनाशस्य योगोज्ञानंचेत्युक्तयोर्योगज्ञानयोर्मध्ये योगलक्षणोपायवतःपुरु

अभ्यासेननिराबाधमेतास्तायोगयुक्तयः ॥ उपायतामुपायांतिभव्यस्यभवभेदने ॥ ८७ ॥ अ
भ्यासेनपरिस्पंदेप्राणानांक्षयमागते ॥ मनःप्रशममायातिनिर्वाणमवशिष्यते ॥ ८८ ॥ श्रीराम
उवाच ॥ योगयुक्तस्यचित्तस्यशमएवंनिरूपितः ॥ सम्यग्ज्ञानमिदानींमेकथयानुग्रहात्प्रभो
॥ ८९ ॥ वसिष्ठउवाच ॥ यथाभूतार्थदर्शित्वमेतावद्भुवनत्रये ॥ यदात्मैवजगत्सर्वमितिनिश्चि
त्यपूर्णता ॥ ९० ॥ अभ्यासाद्दृढतांयातोवैराग्यपरिलांछितः ॥ यथावासनमायामःप्राणानांसफ
लःस्मृतः ॥ ९१ ॥ विकल्पसंक्षयाज्जंतोःपदंतदवशिष्यते ॥ यतोवाचोनिवर्त्तंतेसमग्रकलनान्वि
ताः ॥ ९२ ॥ इमाघटपटाकारपदार्थशतशक्तयः ॥ आत्मैवनान्यदस्तीतिनिश्चयःसम्यगीक्षणम्
॥ ९३ ॥ अनाद्यंतावभासात्मापरमात्मेहविद्यते ॥ इत्येषनिश्चयःस्फारःसम्यग्ज्ञानंविदुर्बुधाः ॥ ९४ ॥

षस्य एवंपूर्वोक्तप्रकारेणचित्तस्यशमोनाशोदर्शितइत्यर्थः ॥ ८९ ॥ यथेति ॥ जगत्सर्वमात्मैवेतिनिश्चित्यपूर्णतापरिपूर्णरूपत्वमितियत्
एतावदेवयथाभूतार्थदर्शित्वंपरमार्थदर्शित्वम् ॥ ९० ॥ ९१ ॥ ९२ ॥ इमाइति ॥ घटपटाकारपदार्थशतशक्तयःघटपटाद्याकाराणियानि
पदार्थशतानियाश्चतेषांशक्तयः तत्सर्वमात्मैव अन्यद्वस्तुनास्तीतिनिश्चयःसम्यग्ज्ञानमित्यर्थः ॥ ९३ ॥ ९४ ॥

सर्वमिति ॥ दृश्यंसर्वमात्मैव तत्रभावाभावौकौनिर्दिष्टौनिरूपितौ सर्वस्यात्मरूपत्वेअयंभावःअयमभावःइतिचभेदोनिरूपयितुमशक्यइ त्यर्थः। क्वास्थितावित्यनेनभावाभावयोराश्रयोऽपिनिरूपयितुमशक्यइत्याह। किमन्यद्रामशोच्यते। बंधमोक्षयोरप्यभावान्नशोकावसर इत्यर्थः ॥ ९५ ॥ ९६ ॥ ब्रह्मेति ॥ बृहद्बृहदितिमहीमहीधरादिरूपेणस्थूलंस्थूलतममवस्थितम्। अतःकारणात्त्वंआत्मनैवस्वयमेवात्मा भव परिपूर्णःपरमात्माभव ॥ ९७ ॥ सम्यगिति ॥ काष्ठपाषाणवाससांरूपेस्वरूपेसम्यगालोकितेविचारितेसति मनागपिईषदपिभेदोना

सर्वमात्मैवनिर्दिष्टौभावाभावौक्वास्थितौ ॥ क्वबंधमोक्षकलनेकिमन्यद्रामशोच्यते ॥ ९५ ॥
नचेत्यमन्यन्नोचित्तंब्रह्मैवेदंविजृंभते ॥ सर्वमेकंपरंब्रह्मकोमोक्षःकाचबंधता ॥ ९६ ॥ ब्रह्मेदंप्रहि
ताकारंबृहद्बृहदवस्थितम् ॥ दूरादस्तमितद्वित्वंभवात्मैवत्वमात्मना ॥ ९७ ॥ सम्यगालोकिते
रूपेकाष्ठपाषाणवाससाम् ॥ मनागपिनभेदोऽस्तिक्वासिसंकल्पनोन्मुखः ॥ ९८ ॥ आदावंते
चसंशांतंस्वरूपमविनाशियत् ॥ वस्तूनामात्मनश्चैतत्तन्मयोभवराघव ॥ ९९ ॥ द्वैताद्वैतसमु
द्भेदाजरामरणविभ्रमैः ॥ स्फुरत्यात्मभिरात्मैवचित्तैरब्धिवद्वीचिभिः ॥ १०० ॥ शुद्धमात्मान
मालिंग्यनित्यमंतःस्थयाधिया ॥ यःस्थितस्तंकमात्मेहंभोगोबंधयितुंक्षमः ॥ १ ॥

स्ति दृश्यभेदस्यदृगायत्तत्वात् दृशःस्वरूपेणाभिन्नत्वात्। तस्मादात्मातिरिक्तस्यवस्तुनोऽभावात्क्ववावस्तुनिसंकल्पोन्मुखोऽसि ॥ ९८ ॥ आदाविति ॥ आदावुत्पत्तेःपूर्वं अंतेविनाशानंतरंच वस्तूनामिदंतयाप्रतीयमानानांभावानामात्मनश्चअहंतास्पदस्य यदेतत्संशांतंअविना शिचस्वरूपंचिन्मात्रंत्वंतन्मयोभव ॥ ९९ ॥ द्वैतेति ॥ जरामरणविभ्रमैःजरामरणादिविलासैःयेद्वैताद्वैतसमुद्भेदाःभेदाभेदोन्मेषाःतैरुपल क्षितानियानिचित्तानितैरेवात्मभिःस्वरूपैःआत्मैववीचिभिःअब्धिवद्बहुधास्फुरति ॥ १०० ॥ शुद्धमिति ॥ नित्यंसर्वदाअंतःस्थयाअंत

मुख्ययाधियाशुद्धंनिरुपाधिकंआत्मानमालिंग्यतादात्म्यमापद्यय:स्थितःतमात्मेहं आत्मारामंकंनामभोगोबंधयितुंक्षमः नकमपीत्यर्थः ॥ १ ॥ ॥ २ ॥ नानात्वमिति ॥ कलनासुविकल्पबुद्धिषुअंतरभ्यंतरेवस्तुनोनानात्वंनास्ति सरसीषुजलादिवेतिएकनिश्चयमयःपुरुषोविमुक्तइत्युच्यते ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ तत्रेति ॥ पार्ष्ण्योःपादपश्चिमभागयोः पद्मासनवशात्अंकयोरुपरिवर्तमानयोःअधिकरांगुलिःउपरि

कृतस्फारविचारस्यमनोभोगादयोऽरयः ॥ मनागपिनभिंदंतिशैलंमंदानिलाइव ॥ २ ॥ नानात्वमस्तिकलनासुनवस्तुनोंऽतर्नानाविधासुसरसीषुजलादिवान्यत् ॥ इत्येकनिश्चयमयःपुरुषोविमुक्तइत्युच्यतेसमवलोकितसम्यगर्थः ॥ ३ ॥ वसिष्ठउवाच ॥ अथेमामपरांरामशृणुदृष्टिंपदप्रदाम् ॥ मुनिनावीतहव्येनयथास्थितमशंकितम् ॥ ४ ॥ वीतहव्योमुनिर्नामविंध्यकाननकंदरे ॥ उषित्वासुचिरंकालंक्रियाकांडपरायणः ॥५॥ आत्मक्रियाक्रमाद्घोरसंसारभ्रमदायिनः ॥ आधिव्याधिमयाकारात्कालेनोद्वेगमाययौ ॥६॥ निर्विकल्पसमाध्यर्थंसंत्यज्यसकलाःक्रियाः ॥ विवेशरंभारचितंनिजपर्णोटजांतरम् ॥ ७ ॥ तत्रासनेसमेशुद्धेस्वास्तीर्णहरिणाजिने ॥ बद्धपद्मासनस्तस्थौपार्ष्ण्योरधिकरांगुलिः ॥ ८ ॥ संजहारांजसालोकंदिग्विकीर्णंमनःशनैः ॥ बाह्यानाभ्यंतरांश्चैवस्पर्शान्परिहरन्क्रमात् ॥ ९ ॥

स्थितोत्तानकरांगुलिः ॥ ८ ॥ संजहारेति ॥ स्पर्शान्विषयान् परिहरन्शनैर्दिग्विकीर्णमनःसंजहारेतिसंबंधः । उपहरदितिपाठेमनसोविशेषणम् ॥ ९ ॥

॥ १० ॥ ११ ॥ १२ ॥ तेनेति ॥ निर्ज्ञाताः निःशब्दोबहिरर्थेवर्तते । आत्मनोबहिर्भावेनज्ञाताश्चक्षुरादयस्तेनात्मनामनागपिनसंबद्धाः पातालद्युतलादिवत् । पातालंदिवस्तलंचयथापरस्परंनसंबध्यतेतद्वदित्यर्थः ॥१३॥ चित्तेति ॥ चारणदेशांतरसंचरणशील चार्वाकपरलोकपराङ्मुख चतुर्दिक्कुक्षिभिक्षुकचतसृणांदिशांकुक्षिष्वभ्यंतरेषुभिक्षणशीलहेचित्त व्यर्थखेदमनास्थायइदंजगन्नविहरमासंचर ॥१४॥ अहमिति ॥ हे

ततःस्वमनसःस्थैर्यंवांछमानस्तदामुनिः ॥ इदमालोकयामासमनसाविगतैनसा ॥ १० ॥ वीतहव्यउवाच ॥ अहोनचंचलमिदंप्रत्याहृतमपिक्षणात् ॥ मनःस्थैर्यंततोनैतितरंगप्रोढपर्णवत् ॥ ११ ॥ घटात्पटमुपायातिपटाच्छकटमुत्कटम् ॥ चित्तमर्थेषुचलतिपादपेष्विवमर्कटः ॥ पंचद्वाराणिमनसश्चक्षुरादीन्यमून्यलम् ॥ १२ ॥ तेनात्मनाबहुज्ञेननिर्ज्ञाताश्चक्षुरादयः ॥ मनागपिनसंबद्धाःपातालद्युतलादिवत् ॥ १३ ॥ चित्तचारणचार्वाकचतुर्दिक्कुक्षिभिक्षुक ॥ व्यर्थखेदमनास्थायनेदंविहरहेजगत् ॥ १४॥ अहंचेतनमित्येवमसत्यातववासना ॥ अत्यंतभिन्नयोरैक्यंनास्तिचिन्मनसोःशठ ॥ १५ ॥ जीवःसोऽस्म्यहमित्येषाव्यर्थाहंकारदुर्मतिः ॥ अहंकारादयंसोऽस्मीत्येतांसंरब्धतांत्यज ॥ मिथ्यैवजाताद्दुःखायनसत्यासत्यवर्जिता ॥ १६ ॥ एतावदेवतेरूपंसाधोयदविचारणम् ॥ विचारेणोपशांतंत्वमालोकेनतमोयथा ॥ १७ ॥

चित्तअहमेवचेतनमितियातेवासनासाअसत्या । हेशठअत्यंतभिन्नयोश्चिन्मनसोरैक्यंनास्ति अत्यंतंभेदश्चमनसोदृश्यत्वजडत्वादिनेतिद्रष्टव्यम् ॥ १५ ॥ जीवइति ॥ हेचित्त जीवोह्यहमितिअहंकारदुर्मतिर्व्यर्था अहंकारात्सोऽस्मिअयमस्मीति यातेसंरब्धतासंभ्रमःतांत्यज ॥ १६ ॥ एतावदिति ॥ हेचित्तअविचारणमिति यत्तेरूपंएतावदेव अविद्यात्मकत्वाच्चित्तस्येतिभावः । विचारेणपुनस्त्वमुपशांतंभव

सि आलोकेनतमोयथा ॥१७॥ नित्यमिति ॥ कालत्रयेऽप्यसद्रूपायतेस्वस्ति इतःपरंमाबाधस्वेत्यर्थः । स्वमनइतिसंबोधनम् ॥१८॥ परीति ॥ परिनिर्वामिपरितउपरमामि ॥१९॥ २०॥ २१॥ २२॥ २३॥ २४॥ घ्राणेति ॥ भ्रूमध्येयोजितत्वात्घ्राणप्रांतंगतःअल्पाल्पःसमालोको

नित्यंपूर्वमभूतायनास्तिरूपायसंप्रति ॥ भविष्यतेचनोदर्केस्वमनःस्वस्तितेस्थितिः ॥ १८ ॥ परिनिर्वामिशांतोऽस्मिदिष्ट्यास्मिविगतज्वरः ॥ स्वात्मन्येवावतिष्ठेऽहंतुर्यरूपपदेस्थितः ॥१९॥ चिदात्माभगवान्सर्वसाक्षित्वेनकरोत्यजः ॥ हंतेंद्रियगणायूयंकिंनिरर्थकमाकुलाः ॥ २० ॥ भीतःपान्थइवाहिभ्यःपुक्कसेभ्यइवद्विजः ॥ दूरेतिष्ठतिचिन्मात्रमिंद्रियेभ्योह्यनामयम् ॥२१॥ संकल्पोन्मुखतासेयंदुःखदासंविदःस्मृतिः ॥ कलनारहितेदेवेदेहेमनासिवाजडे ॥ संवित्संवेद्यनिर्मुक्तासारस्तन्नामनेतरत् ॥२२॥ वसिष्ठउवाच ॥ इतिनिर्णीयसमुनिर्वीतहव्योविवासनः ॥ बलाच्चित्तंसमाधायतस्थावस्पंदितेंद्रियः ॥ २३ ॥ अंतरेवशशामास्यक्रमेणप्राणसंततिः ॥ ज्वालाजालपरिस्पंदोदग्धेंधनइवानलः ॥ २४ ॥ घ्राणप्रांतगताल्पाल्पसमालोकइवेक्षणे ॥ अर्धकुड्मलितैःपद्मैःश्रियमाययतुःसमम् ॥ २५ ॥ समकायशिरोग्रीवस्थानकःसमहामतिः ॥ आसीच्छैलादिवोत्कीर्णश्चित्रार्पितइवाथवा ॥ २६ ॥ तथैवतिष्ठतस्तस्यसंवत्सरशतत्रयम् ॥ कोटरेविंध्यकक्षस्ययथावर्धमुहूर्तवत् ॥ २७ ॥

ययोस्तेइव ॥२५॥ समेति ॥ समकायशिरोग्रीवस्थानकः समंकायशिरोग्रीवंयस्मिन्स्थानकेआसनबंधेतादृशंस्थानकंयस्य ॥ २६ ॥ २७ ॥

॥ २८॥२९ ॥३० ॥ उत्पत्तीति ॥ यस्यस्वमनोरूपिणीकलनाकल्पनाद्धृदयांतरेहृत्पुंडरीकमध्येउत्पत्तिप्रौढिंउत्पत्तयोजन्मांतराणितद्विषयांप्र गल्भतामासाद्यहृद्येवतत्रैवहृदयेअखिलंजन्मांतरवृत्तांतमन्वभूत् ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ अथेतिसार्धश्लो

तत्रकेनापिकालेनकायस्तस्यमहामुनेः ॥ प्रावृडोघविनुन्नेनपंकेनोर्वीतलेकृतः ॥ २८ ॥ वर्ष त्रयशतेनैवंसोऽबुद्ध्यतमहाद्युतिः ॥ देहोनैवचचालास्यधराकोटरपीडितः ॥ २९ ॥ संविदेवास्य तंदेहंजग्राहोर्वीनिपीडितम् ॥ नतुप्राणमयस्पंदःप्राणसंयमनंविना ॥ नाभूत्प्राणपरिस्पंदःसर्व च्छिद्रावरोधतः ॥ ३० ॥ उत्पत्तिप्रौढिमासाद्यकलनाहृदयांतरे ॥ स्वमनोरूपिणीयस्यहृद्येवानु बभूवसा ॥ ३१ ॥ कैलासकाननेकांतेकदंबस्यतरोस्तले ॥ मुनित्वंशतमब्दानांजीन्मुक्तात्मनि र्मलम् ॥ ३२ ॥ विद्याधरत्वंवर्षाणांशतमाधिविवर्जितम् ॥ युगपंचकमिंद्रत्वंप्रणतंसुरचारणैः ॥ ३३ ॥ कल्पमेकंगणत्वंसचंद्रमौलेश्चकारह ॥ प्रतिभासवशादेतद्वीतहव्योऽनुभूतवान् ॥ ३४ ॥ अनंतरमनंतात्मवीतहव्याभिधंमनः ॥ इच्छांकदाचित्सकलप्राग्जन्मालोकनेऽकरोत् ॥ ३५ ॥ अशेषान्संददर्शाथनष्टानष्टान्स्वदेहकान् ॥ अनष्टांतामपश्यन्नुवीतहव्याभिधांतनुम् ॥ ३६ ॥ ताद्दिदृक्षयैवोद्धर्तुमग्नदेहेऽभवन्मतिः ॥ ३७ ॥ अथैवंचिंतयामासकायोऽयंपंकपीडितः ॥ एतदुद्ध रणायाहंप्रविशामिरविंप्रभुम् ॥ ३८ ॥

कद्वयंवाक्यम् ॥ तदीयःसूर्यस्यपार्श्ववर्तीपरिचरः । [illegible] पार्श्वकाद्यभिधानादसौमुनिःपुर्यष्टकवपुर्भूत्वाअहंकारक

लायुक्तमित्यादिनापूर्वोक्तंसूक्ष्मदेहमालंब्य अनिलरूपधृक्प्राणवायौसर्वेंद्रियशक्तीरंतर्भाव्य तद्रूपःसन् भस्त्रापिंडमनिलइवादित्यंविवेशे त्यन्वयः ॥ ३८ ॥ ३९ ॥ ४० ॥ भानुनेति ॥ अथवीतहव्याभिधंमनःवीतहव्यपदेशांतंपुर्यष्टकंवीतहव्यस्यपुर्यष्टकरूपेणप्रविष्टत्वात्तस्य

तदीयःपिंगलोदेहमुद्धरिष्यतिमेततः ॥ इत्यसौमुनिरादित्यंविवेशानिलरूपधृक् ॥ पुर्यष्टकवपु र्भूत्वाभस्त्रापिंडमिवानिलः ॥ ३९ ॥ भगवान्रविरप्येनंहृद्गतंमुनिनायकम् ॥ दृष्ट्वापिंगलमग्रस्थ मादिदेशाशुकार्यवित् ॥ ४० ॥ भानुनाथाभ्यनुज्ञातंवीतहव्याभिधंमनः ॥ विवेशपिंगलाकारं विंध्यकंदरगामिनम् ॥ ४१ ॥ पिंगलोऽसौनभस्त्यक्त्वाकुंजकंदरसुंदरम् ॥ प्रापविंध्यवनंप्रा वृण्नताभ्रांबरभास्वरम् ॥ ४२ ॥ ददर्शमुनिदेहंतंतांगत्वाविंध्यकंदराम् ॥ उद्दधारधराकोशा न्नखनिष्कृष्टभूतलः ॥ ४३ ॥ कलेवरंमुनेःकांतंमृणालमिवसारसः ॥ ४४ ॥ मौनंपुर्यष्टकमथस्वं विवेशकलेवरम् ॥ जगामपिंगलोव्योममुनिश्चविमलंसरः ॥ ४५ ॥ वीतहव्योममज्जाशुसरस्यु द्भिन्नपंकजे ॥ तत्रस्नात्वाजपंकृत्वापूजयित्वादिवाकरम् ॥ ४६ ॥ मनोभूषितयातन्वापूर्ववत्पु नराबभौ ॥ ४७ ॥ मैत्र्यातयासमतयापरयाचशक्त्यासत्प्रज्ञयामुदितयाकृपयाश्रियाच ॥ युक्तो मुनिःसकलसंगविमुक्तचेताविंध्येसरित्तटगतोदिवसानिरेमे ॥ ४८ ॥

चपुर्यष्टकस्यमनःप्रधानत्वात्तादृशंमनो गच्छेतिभानुनाअनुज्ञातंसत्विंध्यकंदरगामिनंपिंगलंदेहंविवेश ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ मौ नमिति ॥ मौनंमुनिसंबंधि ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥

॥ ४९ ॥ ५० ॥ अस्तिनास्तीति ॥ सत्त्वासत्त्वोल्लेखिनींकलनांभेदद्दष्टिंमृद्वींलतामिवभंक्त्वाभग्नांकृत्वा शेषेअव्यपदेश्येचिन्मात्रेअनुबद्धसंधानःअचलशृंगवत्तिष्ठामि ॥ ५१ ॥ उदितइति ॥ उदितोऽस्तंगतइव प्रकाशमानत्वेऽपिनिष्क्रियत्वात् । अस्तंगतउदितइव इंद्रियागोचरत्वेऽपिसर्वसाक्षित्वात् । समः एकरूपः समरसाभासः इष्टानिष्टादिषुसमरसएकप्रकारास्वादआभासोऽवभासोयस्यताद्दशःसन् स्वच्छतांग



वसिष्ठउवाच ॥ कदाचिच्छममाधातुंपुनरेवमनोमुनिः ॥ चेतसाकलयामासद्दष्टलोकपरावरः ॥ ४९ ॥ पूर्वमेवेंद्रियगणोमयापरिहृतःस्फुटम् ॥ इदानींचिंतयानार्थःपुनश्चिंतितयामम ॥ ५० ॥ अस्तिनास्तीतिकलनांभंक्त्वामृद्वींलतामिव ॥ शेषेनुबद्धसंधानस्तिष्ठाम्यचलशृंगवत् ॥ ५१ ॥ उदितोऽस्तंगतइवअस्तंगतइवोदितः ॥ समःसमरसाभासस्तिष्ठामिस्वच्छतांगतः ॥ ५२ ॥ प्रबुद्धोऽपिसुषुप्तस्थःसुषुप्तस्थःप्रबुद्धवान् ॥ तुर्यमालंब्यकायांतस्तिष्ठामिस्तंभितस्थितिः ॥ ५३ ॥ इतिसंचिंत्यसंधानेपुनस्तस्थौदिनानिषट् ॥ ततःप्रबोधमापन्नःक्षणंसुप्तइवाध्वगः ॥ ५४ ॥ ततःसिद्धःसभगवान्वीतहव्योमहातपाः ॥ विजहारचिरंकालंजीवन्मुक्ततयातया ॥ ५५ ॥ हेयादेयसमासंगत्यागादानद्दशोःक्षये ॥ वीतहव्यमुनेरासीदिच्छानिच्छातिगंमनः ॥ ५६ ॥

तोनिष्कलंकस्तिष्ठामि ॥ ५२ ॥ प्रबुद्धइति ॥ प्रबुद्धोऽपींद्रियैरर्थानुपलभमानोऽपिसुषुप्तस्थोहर्षविषादादिरहितःसुषुप्तस्थःसमाधिनिष्ठतयाबहिरनुसंधानाभावात्सुषुप्तिदशापन्नः प्रबुद्धवान्स्वस्वरूपेनित्यजागरितवान् तुर्यंअवस्थात्रयानुवृत्तिचिन्मात्रमालंब्य कायांतर्हृदयेस्तंभितस्थितिर्नियमितचित्तवृत्तिस्तिष्ठामि ॥ ५३ ॥ ५४ ॥ ५५ ॥ हेयेति ॥ हेयमादेयमितियःसमासंगोऽभिमानःतस्यत्यक्ष्यामिआदा

स्वामीतियेद्दृशौतयोश्चक्षयेसति वीतहव्यमुनेर्मनःइच्छानिच्छातिगं इच्छानिच्छारहितंनिर्विकल्पमासीत् ॥ ५६ ॥ विदेहेति ॥ जन्मकर्मणांसीमांतेपरमावधौ संसारसंगानांसम्यक्त्यागरूपेविदेहकैवल्ये अतिशायिनींवांछामापप्राप्तवान् ॥ ५७ ॥ ५८ ॥ रागेत्यादिनाश्लोकाष्टकेनरागादीन्पूर्वसंबंधिनःसप्रार्थनमुद्वासयति । हेरागत्वंनीरागतांगच्छ मद्विषयंरागंमुंचेत्यर्थः । मोक्षमाणंमांविसृजेतियावत् । द्वेष त्वं निर्द्वेषतांनिर्द्वेषत्वंव्रज त्वांविसृज्यगच्छंतंमांप्रतिद्वेषंमाकार्षीरित्यर्थः ॥ ५९ ॥ ६० ॥ इमामिति ॥ येनविषयसुखेन अहंइमामपिनिरति

विदेहकेवलीभावेसीमांतेजन्मकर्मणाम् ॥ संसारसंगसंत्यागेवांछामापातिशायिनीम् ॥ ५७ ॥
एकदासमुनीशानोविवेशगिरिकंदरम् ॥ बद्धपद्मासनःस्थित्वातत्रोवाचात्मनात्मनि ॥ ५८ ॥
रागनीरागतांगच्छद्वेषनिर्द्वेषतांव्रज ॥ भवद्भ्यांसुचिरंकालमिहप्रक्रीडितंमया ॥ ५९ ॥ भोगा
नमोऽस्तुयुष्मभ्यंजन्मकोटिशतान्यहम् ॥ भवद्भिर्लालितोलोकेलालकैरिवबालकः ॥ ६० ॥ इ
मामपिपरांपुण्यांनिर्वाणपदवीमहम् ॥ येनविस्मारितस्तस्मैसुखायास्तुनमोनमः ॥ ६१ ॥
त्वदुत्तप्तेनहेदुःखमयात्मान्विष्टआदरात् ॥ तस्मात्त्वदुपदिष्टोऽयंममर्गोनमोस्तुते ॥ ६२ ॥
कार्यमित्रमयाद्यत्वंत्यज्यसेचिरबांधवः ॥ अधिगम्यात्मविज्ञानंस्वस्यनाशःकृतस्त्वया ॥ ६३ ॥

शयानंदरूपांपरांनिर्वाणपदवींविस्मारितोऽस्मि तस्मैसुखायनमोऽस्तु । नमस्कारावृत्तिर्वचकलातिशयंद्योतयितुम् ॥ ६१ ॥ त्वदिति ॥ हे दुःखत्वदुत्तप्तेनमया दुःखशांतयेआत्माऽऽदरादन्विष्टः । तरतिशोकमात्मविदितिश्रुतेः । तत्कारणादयंमोक्षमार्गोममत्वदुपदिष्टः त्वयैववैराग्यहेतुनाबोधितः अतस्तेगुरुतुल्यायनमोऽस्तु ॥ ६२ ॥ कार्यमित्रेति ॥ हेकार्यमित्रधर्मादिसाधनत्वात्मयाआत्मविज्ञानमधिगम्य अद्य त्यज्यसे त्वयैवस्वस्यनाशःकृतः । मोक्षार्थमुद्यमंकुर्वतात्वयैवायमपराधःकृतइत्यर्थः ॥ ६३ ॥

एकाकिन्येति मातरिति ॥ ६४ ॥ ६५ ॥ वियोगदुःखितांडहितरमिवोपसांत्वयन्नाह ॥ नमइति ॥ हेसुकृतभवतेदेवायनमोऽस्तु ॥ ६६ ॥ एतइति ॥ अद्यक्रमेणपर्यायेणउत्कृताः उत्कांताःकृताइत्यर्थः ॥ ६७ ॥ एवमितिश्लोकत्रयंवाक्यम् ॥ प्रशांतानिमननानिसंकल्पाएषणाःपुत्रैषणादयश्चयस्य तारंउच्चतरंश्रुतिम् । प्राप्ताभूमिकायोगभूमिकायेन ॥ ६८ ॥ ६९ ॥ प्रणवपर्यंतदीर्घनिस्वनतंतुनासहइंद्रियाणांतन्मा

एकाकिन्याविशुष्यंत्याप्रशांतेमयिदीनया ॥ त्वयादुःखंनकर्तव्यंमातस्तूष्णेनमोऽस्तुते ॥६४॥
क्षंतव्याःकामभगवन्विपरीतापराधजाः ॥ दोषाउपशमैकांतंव्रजाम्यादिशमंगलम् ॥ ६५ ॥
नमःसुकृतदेवायभवतेऽस्तुत्वयापुरा ॥ नरकेभ्यःसमुत्तार्यस्वर्गेऽहमभियोजितः ॥ ६६ ॥ एते
भवंतःसहजाःप्राक्तनाःसुहृदोमया ॥ क्रमेणाद्योत्कृताःप्राणाःस्वस्तिवोऽस्तुव्रजाम्यहम् ॥ ६७ ॥
वसिष्ठउवाच ॥ एवंकलितवानंतःप्रशांतमननैषणः ॥ शनैरुच्चारयंस्तारंप्रणवंप्राप्तभूमिकः ॥ ६८ ॥
सबाह्याभ्यंतरान्भावान्स्थूलान्सूक्ष्मतरानपि ॥ त्रैलोक्यसंभवांस्त्यक्त्वासंकल्पैकविकल्पिता
न् ॥ ६९ ॥ सहप्रणवपर्यंतदीर्घनिःस्वनतंतुना ॥ जहाविंद्रियतन्मात्रजालंगंधमिवानिलः ॥ ७० ॥
ततोजहौतमोमात्रंप्रतिभातमिवांबरे ॥ उत्तिष्ठत्प्रस्फुरद्रूपंप्राज्ञःकोपलवंयथा ॥ ७१ ॥ प्रतिभा
तंततस्तेजोनिमेषार्धंविचार्यसः ॥ जहौबभूवचतदानतमोनप्रकाशनम् ॥ ७२ ॥

त्राणांचशब्दादीनांजालंजहौ । प्रणवस्यपर्यंतनादेनसहैवइंद्रियविषयजालमुपरराामेत्यर्थः ॥ ७० ॥ ततइति ॥ तमोमात्रंगुणत्रयात्मिकायाअपिअविद्यायास्तामसंवृत्तिविशेषम् । अंबरेचिदाकाशे ॥ ७१ ॥ प्रतिभातमिति ॥ तेजःसात्विकंवृत्तिविशेषं नतमोनप्रकाशनंबभूवेति

गुणत्रयातीतोबभूवेत्यर्थः ॥ ७२ ॥ तामिति ॥ तामवस्थांनिस्त्रैगुण्यावस्थाम् ॥ ७३ ॥ ततइति ॥ अंगसंविदंस्वरूपचैतन्यं सद्योजातशि
शुज्ञानसमानांनिर्वासनामित्यर्थः ॥ ७४ ॥ चेत्यदशांनिर्विकल्पांचिन्मात्राम् ॥ ७५ ॥ पश्यंतीशब्दवाच्यंततःपरंसत्तामात्रात्मकंसुषुप्त
पदमालंब्यगिरिरिवाचलस्तस्थौ ॥ ७६ ॥ सुषुप्तइति ॥ ससुषुप्तेर्निर्विकल्पसमाधौस्थैर्यमासाद्य तुर्यरूपंअवस्थात्रयातीतंरूपमुपाययौ त
स्यांदशायांसमुनिःनिरानंदःसानंदश्चबभूव । अपिशब्दःसमुच्चये । तत्रनिरानंदत्वंस्वरूपातिरिक्तस्यानंदस्याभावात् सानंदत्वंचानंदानुभ

तामवस्थामथासाद्यमनसातन्मनस्तृणम् ॥ मनागपिप्रस्फुरितंनिमेषार्धादथापतत् ॥ ७३ ॥
ततोऽगसंविदंस्वच्छांप्रतिभासमुपागताम् ॥ सद्योजातशिशुज्ञानसमानकलनामलाम् ॥ ७४ ॥
निमेषार्धार्धभागेनकालेनकलितांप्रभुः ॥ जहौचितश्चेत्यदशांस्पंदशक्तिमिवानिलः ॥ ७५ ॥
पश्यंतीपदमासाद्यसत्तामात्रात्मकंततः ॥ सुषुप्तपदमालंब्यतस्थौगिरिरिवाचलः ॥ ७६ ॥ सुषु
प्तेस्थैर्यमासाद्यतुर्यरूपमुपाययौ ॥ निरानंदोऽपिसानंदःसच्चासच्चापितत्रसः ॥ अचिन्मयश्चि
न्मयश्चनेतिनेतियदुच्यते ॥ ७७ ॥ ततस्तत्संबभूवासौयद्गिरामप्यगोचरम् ॥ यच्छून्यवादि
नांशून्यंब्रह्मब्रह्मविदांतथा ॥ ७८ ॥ विज्ञानमात्रंविज्ञानविदांयदमलास्पदम् ॥ पुरुषःसांख्यदृ
ष्टीनामीश्वरोयोगवादिनाम् ॥ ७९ ॥

वात् तथासद्रूपत्वात्सच्चबभूव सर्वव्यवहारनिवृत्तेरसच्चबभूव ॥ ७७ ॥ ततइतिसार्धश्लोकत्रयंवाक्यम् ॥ ततोऽनंतरंअसौमुनिःयद्वस्तुगि
रामगोचरंअभिधावृत्त्याप्रतिपादयितुंनशक्यते । अथचसर्वैरपिवादिभिःस्वस्वमतानुसारेणशून्यादिशब्दैर्व्यपदिश्यते तत्परमात्मस्वरूपंबभूवे
त्यन्वयः ॥ ७८ ॥ ७९ ॥

॥ ८० ॥ ८१ ॥ यदिति ॥ यद्वस्तुसर्वेषांशास्त्राणांसिद्धांतः तथापूर्वंप्रतिपादितत्वात् । सर्वहृदयानुगं अंतर्यामित्वात् सर्वंसर्वात्मकंसर्वगं व्यापकत्वात् सार्वं सर्वसंबंधिअंतर्यामित्वात् यच्छब्दवाच्यंतत्तादृशंवस्तुभूत्वाअसौस्थितः ॥ ८२ ॥ यदिति ॥ यद्वस्तुअनुत्तमनिष्पंदंअत्यंत निश्चलंतेजसांसूर्यादीनामपिदीपकम् ॥ ज्योतिषांज्योतिरितिश्रुतेः । स्वानुभूतिरेवैकंमानंप्रमाणंयस्य ॥ ८३ ॥ यदिति ॥ यद्वस्तुएकंच वस्तुतोऽद्वितीयत्वात् अनेकंचमायावशात् सांजनंचश्रुत्यानिश्चलं आचार्यवाक्यावगम्यत्वात् निरंजनंस्वयंप्रकाशत्वात् अंजनंव्यंजकंप्र

शिवःशैवमतस्थानांकालःकालैकवादिनाम् ॥ आत्मात्मकस्तद्विदुषांनैरात्म्यंतादृशात्मनाम् ॥ ८० ॥ मध्यंमाध्यमिकानांचसर्वंसुसमचेतसाम् ॥ ८१ ॥ यत्सर्वशास्त्रसिद्धांतोयत्सर्वहृदयानुगम् ॥ यत्सर्वंसर्वगंसार्वंयत्तत्तत्सदसौस्थितः ॥ ८२ ॥ यदनुत्तमनिष्पंदंदीपकंतेजसामपि ॥ स्वानुभूत्येकमानंचयत्तत्तत्सदसौस्थितः ॥ ८३ ॥ यदेकंचाप्यनेकंचसांजनंचनिरंजनम् ॥ यत्सर्वंचाप्यसर्वंचयद्यत्तत्सदसौस्थितः ॥ ८४ ॥ अजममरमनाद्यमाद्यमेकंपदममलंसकलंचनिष्कलंच ॥ स्थितइतिसतदानभःस्वरूपादपिविमलस्थितिरीश्वरोबभूव ॥ ८५ ॥ त्रिंशद्वर्षसहस्राणिस्फुरित्वासयथासुखम् ॥ वीतहव्यःशशामैवमपुनर्मनसेमुनिः ॥ ८६ ॥ इतिश्रीवाल्मीकीयेमोक्षोपायउपशममप्रकरणेवीतहव्योपाख्यानंनामसप्तविंशःसर्गः ॥ २७ ॥

काशकमितिपर्यायः । सर्वंसर्वात्मकत्वात् असर्वंसर्वप्रपंचातीतत्वात ॥ ८४ ॥ अजमिति ॥ समुनिःअजममरमनाद्यमादिरहितं आद्यं आदौभवंसकलंचनिष्कलंचरूपद्वयेनवर्तमानंअमलंपरंवस्तुभूत्वास्थितइतिहेतोः नभःस्वरूपादपिविमलस्थितिरीश्वरोबभूवेत्यन्वयः ॥ ८५ ॥ त्रिंशदिति ॥ अपुनर्मनसे पुनःमनःसत्वाभावाय जन्मांतराभावायेत्यर्थः ॥ ८६ ॥ इतिश्रीवासिष्ठविवरणउपशमप्रकरणेवीतहव्योपाख्या

नंनामसप्तविंशःसर्गः ॥ २७ ॥ पूर्वंचित्तविश्रांतिसिद्धयेसंगत्यागप्राणनिरोधसमाध्यभ्यासादर्शिताः । इदानींजीवन्मुक्तस्याकाशगत्य भावादिनिरूपणमुखेन चित्तस्योपशमप्राप्तिमुपसंहरति ॥ जीवन्मुक्तेति ॥ आकाशगमनादिकाः आकाशेगम्यतेययाशक्त्यासाआका शगमना साआदिर्यासांताः ॥ १ ॥ अनात्मविदिति ॥ द्रव्यंरसायनादि मंत्रस्त्रैपुरादिः क्रियादृढाभ्यासादिरूपा कालश्चिराभ्यासकालः

श्रीरामउवाच ॥ जीवन्मुक्तशरीराणांकथमात्मविदांवर ॥ शक्तयोनेहदृश्यंतेआकाशगमनादि काः ॥ १ ॥ वसिष्ठउवाच ॥ अनात्मविदमुक्तोऽपिनभोविहरणादिकम् ॥ द्रव्यमंत्रक्रियाकालश क्त्याप्नोत्येवराघव ॥ २ ॥ नात्मज्ञस्यैषविषयआत्मज्ञोह्यात्मदृक्स्वयम् ॥ आत्मनात्मनिसंतृ प्तोनाविद्यामनुधावति ॥ ३ ॥ आत्मवानिहसर्वस्मादतीतोविगतैषणः ॥ आत्मन्येवहिसंतुष्टो नकरोतिनचेहते ॥ ४ ॥ येकेचनजगद्भावास्तानविद्यामयान्विदुः ॥ कथंतेषुकिलात्मज्ञस्त्यक्ता विद्योनिमज्जति ॥ ५ ॥ यस्तुवाभावितात्मापिसिद्धिजालानिवांछति ॥ ससिद्धिसाधकैर्द्रव्यैस्ता निसाधयतिक्रमात् ॥ ६ ॥ द्रव्यमंत्रक्रियाकालशक्तयःसाधुसिद्धिदाः ॥ परमात्मपदप्राप्तौनोप कुर्वंतिकाश्चन ॥ ७ ॥ आत्मज्ञस्यतुपूर्णस्यनेच्छासंभवतिक्वचित् ॥ यस्येच्छाविद्यतेकाचित्स सिद्धिंसाधयत्यलम् ॥ ८ ॥

तेषांशक्त्या ॥ २ ॥ नेति ॥ आत्मज्ञस्यएषआकाशगमनादिर्विषयःसाध्यत्वेनबुद्धिगोचरोनभवति । हियस्मात्कारणादात्मज्ञःसदाआत्म दृक्आत्मज्ञानमनुसंदधत्स्वात्मानंदतृप्ततया अविद्यामयींआकाशगमनादिसिद्धिंनानुधावति ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥

॥ ९ ॥ १० ॥ प्राणानामिति ॥ प्राणानांप्राणादिवायूनांस्पंदनाच्चलनाद्देहस्यस्पंदश्चलनमस्थिरत्वमितियावत् तच्छान्तौप्राणस्पंदनिवृत्तौ नि रुद्धप्राणयोगिनो दृषत्समाः शिलावच्चिरकालस्थायिनः योगिनोयतोधारणायांप्राणनिरोधाभ्यासेस्थितास्तस्मात्कारणान्ननश्यंति ॥ ११ ॥ सबाह्येति ॥ यस्ययोगिनःसबाह्याभ्यंतरोबाह्यश्चाभ्यंतरश्च चित्तजोवातजोवास्पंदोनविद्यते तस्यनिरुद्धचित्तप्राणस्यविकृतिक्षयौजरामर

सर्वेच्छाजालसंशांतावात्मलाभोदयोहियः ॥ सकथंसिद्धिवांछायांमग्नचित्तेनलभ्यते ॥ ९ ॥ श्रीरामउवाच ॥ ब्रह्मन्नतिचिरंकालंकथंजीवंतियोगिनः ॥ एतन्मेसंशयंछिंधिसर्वब्रह्मविदांवर ॥ १० ॥ वसिष्ठउवाच ॥ प्राणानांस्पंदनात्स्पंदस्तच्छांतौतेदृषत्समाः ॥ यतःस्थिताधारणा यांतन्ननश्यंतियोगिनः ॥ ११ ॥ सबाह्याभ्यंतरःस्पंदश्चित्तजोवातजोऽथवा ॥ नयस्यविद्यतेत स्यदूरस्थौविकृतिक्षयौ ॥ १२ ॥ सबाह्याभ्यंतरेशांतेस्पंदेपवनचेतसोः ॥ धातवःसंस्थितिंदेहेन त्यजंतिकदाचन ॥ १३ ॥ येहिविज्ञातविषयावीतरागामहाधियः ॥ विच्छिन्नग्रंथयःसर्वेतेस्वतं त्रास्तनौस्थिताः ॥ १४ ॥ श्रीरामउवाच ॥ विवेकाभ्युदयाच्चित्तस्वरूपेंऽतर्हितेमुनेः ॥ मैत्र्यादयो गुणाःकुत्रजायंतेयोगिनांवद ॥ १५ ॥

णौदूरस्थौ ॥ १२ ॥ १३ ॥ येहीति ॥ विच्छिन्नग्रंथयःप्राणनिरोधात्सुषुम्नासुखभेदनेसति भिन्नब्रह्मविष्णुरुद्रग्रंथयइत्यर्थः । प्राणधारणा याःप्रकृतत्वात् तेसर्वेयोगिनःतनौदेहेस्वतंत्राःस्थिताः । स्वेच्छयैवत्यजंतिगृह्णंतिचेत्यर्थः ॥ १४ ॥ विवेकेति ॥ मैत्र्यादयःकुत्रजायंतेआ त्मनोनिर्गुणत्वात्चित्तस्यचविलीनत्वात् ॥ १५ ॥

॥ १६ ॥ १७ ॥ प्राकृतमिति ॥ प्राकृतंगुणसंभारंसत्वादिगुणसमुदायंममेतियच्चित्तमतज्ज्ञत्वात्बहुमन्यते दुःखितंसंसारदुःखभाजनंतच्चित्तंजी वउच्यते ॥ १८ ॥ सुखेति ॥ यन्मनःसुखदुःखादिभिरवष्टब्धमाश्रितं अस्मीत्येवसुख्यहंदुःख्यहमस्मीत्येवनिश्चलंदृढाभिमानं संसारद्रुमदोह दंसंसारवृक्षस्यपल्लवकुसुमफलोत्पादकंमनोविद्यमानंविद्धि ॥ १९ ॥ २० ॥ सुखेति ॥ यंधीरंज्ञानिनंसुखदुःखदशाःसाम्यान्नप्रोद्धरंतिनचा

वसिष्ठउवाच ॥ द्विविधश्चित्तनाशोऽस्तिस्वरूपोऽरूपएवच ॥ जीवन्मुक्तौस्वरूपःस्यादरूपोदे हमुक्तिजः ॥ १६ ॥ चित्तसत्तेहदुःखायचित्तनाशःसुखायतु ॥ चित्तसत्तांक्षयंनीत्वाचित्तनाशमु पानयेत् ॥ १७ ॥ प्राकृतंगुणसंभारंममेतिबहुमन्यते ॥ यत्तुचित्तमतत्त्वज्ञंदुःखितंजीवउच्यते ॥ १८ ॥ सुखदुःखाद्यवष्टब्धमस्मीत्येवविनिश्चलम् ॥ विद्यमानंमनोविद्धिसंसारद्रुमदोहदम् ॥ १९ ॥ चेतसःकथितासत्तामयारघुकुलोद्वह ॥ तस्यनाशमिदानींत्वंश्रृणुप्रश्नविदांवर ॥ २० ॥ सुखदुः खदशाधीरंसाम्यान्नप्रोद्धरंतियम् ॥ निःश्वासाइवशैलेंद्रंचित्तंतस्यमृतंविदुः ॥ २१ ॥ आपत्का र्पण्यमुत्साहोमदोमांद्यंमहोत्सवः ॥ यंनयंतिनवैरूप्यंतस्यनष्टंमनोविदुः ॥ २२ ॥ मनस्तांमूढ तांविद्धियदानश्यतिराघव ॥ चित्तनाशाभिधानंहितदासत्वमुदेत्यलम् ॥ २३ ॥

लयंति । निःश्वासवायवःशैलेंद्रमिव तस्यधीरस्यचित्तंमृतंविदुः ॥ २१ ॥ अस्यैवविवरणम् आपदिति ॥ आपत्पुत्रादिविपत्तिः कार्पण्यंदारि द्र्यं उत्साहःपुत्रोत्पत्त्यादिजन्योहर्षः मदःप्रसिद्धः मांद्यमपाटवं महोत्सवोविवाहादिःवैरूप्यं विकारताम् ॥ २२ ॥ मनस्तामिति ॥ मनस्ताम नःसत्ता तामेवमूढतांविद्धि सामनःसत्तायदानश्यतितदाचित्तनाशरूपंसत्वंज्ञानमुदेति । गुणत्रयात्मकेमनसि रजस्तमोमयीमूढतायदावि

नश्यति तदाज्ञानिनोमनःशुद्धसत्वात्मकंसंपद्यतइत्यर्थः ॥ २३ ॥ मैत्रीति ॥ तदेवसत्वंमैत्र्यादियुक्तंविशुद्धवासनंजीवन्मुक्तस्यमनोभवति ॥२४॥ सरूपइति ॥ समानरूपः । आत्मस्वरूपंमनसाभिन्नंस्फुरतीत्यर्थः ॥ २५॥ अरूपइति ॥ निष्कलात्मकःनिरंशस्वरूपः सत्वांशस्यापिविनष्टत्वात् ॥ २६ ॥ समग्राग्र्येतिश्लोकचतुष्टयंवाक्यम् ॥ यस्मात्कारणाद्विदेहमुक्तरूपेपरमपावनेपदे समग्राणामग्र्यगुणानांमैत्र्यादिश्रे

मैत्र्यादिभिर्गुणैर्युक्तंभवत्युत्तमवासनम् ॥ भूयोजन्मविनिर्मुक्तंजीवन्मुक्तस्यतन्मनः ॥ २४ ॥ सरूपोऽसौमनोनाशोजीवन्मुक्तस्यतत्रहि ॥ वसंतइवमंजर्योभांतिमैत्र्यादयोगुणाः ॥ २५ ॥ अरूपस्तुमनोनाशोयोमयोक्तोरघूद्वह ॥ विदेहमुक्तएवासौविद्यतेनिष्कलात्मकः ॥ २६ ॥ समग्राग्र्यगुणाधारमपिसत्वंप्रलीयते ॥ विदेहमुक्तेविमलेपदेपरमपावने ॥ २७ ॥ विदेहमुक्तिविषयेतस्मिंश्चित्तलयात्मके ॥ चित्तनाशेविरूपाख्येनकिंचिदपिविद्यते ॥ २८ ॥ नगुणानागुणास्तत्रनश्रीर्नाश्रीर्नलोलता ॥ नचोदयोनास्तमयोनहर्षामर्षसंविदः ॥ २९ ॥ नतेजोनतमःकिंचिन्नसंध्यादिर्नरात्रयः ॥ नसत्तानापिवासत्तानचमध्यंहितत्पदम् ॥ ३० ॥ येहिपारंगताबुद्धेःसंसाराडंबरस्यच ॥ तेषांतदास्पदंस्फारंपवनानामिवांबरम् ॥ ३१ ॥

ष्ठगुणानांआधारभूतंसत्वमपिप्रलीयते ॥२७॥ तस्माद्विदेहमुक्तिविषयेसत्वक्षयरूपे तस्मिन्विरूपेचित्तनाशेगुणदोषादिकंकिंचिदपिनविद्यते ॥२८॥ गुणामैत्र्यादयः अगुणाःमनोदोषाः श्रीर्गुणानांसमृद्धिः अश्रीर्दोषाणांसंपत् ॥२९॥ नसत्तावाप्यसत्ताच अस्तिनास्तिव्यवहारयोरभावात् तत्पदंविदेहमुक्तिरूपंमध्यंचन सदसदात्मकंअनुभवरूपंवानभवतिसत्त्वासत्त्वयोर्विरोधात् ॥ ३० ॥ येहीति ॥ ततविदेहकैवल्यं

स्फारमास्पदंविश्रांतिस्थानम् ॥ ३१ ॥ संशांतेति ॥ एकसुप्तंएकंसुषुप्तमेवयस्मिन् सर्वदाचित्तस्यलीनत्वात् । आनंदमंथरंब्रह्मानंदनिर्भरं एवंविधंयत्परंविदेहमुक्तिरूपंतस्मिन्पदेआकाशकोशवत्तनवःसूक्ष्माः । स्थूलसूक्ष्मकारणात्मकदेहत्रयाभावात् अतनवःगलितचित्तलवाः विगलितसत्वरूपचित्तांशाःमहांतोवसंतिविश्राम्यंति ॥३२॥ ब्रह्मन्नितिश्लोकद्वयंवाक्यम् ॥ मृद्वीकाद्राक्षालता ॥३३॥३४॥ अंतरिति ॥ अंतर्लीनसमारंभशुभाशुभमहांकुरं अंतर्गतोद्यमपुण्यपापरूपमहांकुरं शरीरमेवसंसृतिव्रततेर्बीजं संसारस्यशरीरान्वयव्यतिरेकानुविधायक

संशांतदुःखमजडात्मकमेकसुप्तमानंदमंथरमपेतरजस्तमोयत् ॥ आकाशकोशतनवोऽतनवोम हांतस्तस्मिन्पदेगलितचित्तलवावसंति ॥ ३२ ॥ श्रीरामउवाच ॥ ब्रह्मन्संसृतिमृद्वीकालता यावितताकृतेः ॥ किंबीजमथबीजस्यतस्यांकिंबीजमुच्यते ॥ ३३ ॥ अथतस्यापिकिंबीजंबीजं तस्यापिकिंभवेत् ॥ सर्वमेतत्समासेनपुनर्बोधविवृद्धये ॥ सिद्धयेज्ञानसारस्यवदमेवदतांवर ॥ ३४ ॥ वसिष्ठउवाच ॥ अंतर्लीनसमारंभशुभाशुभमहांकुरम् ॥ संसृतिव्रततेर्बीजंशरीरंविद्धि राघव ॥ ३५ ॥ भावाभावदशाकोशंदुःखरत्नसमुद्गकम् ॥ बीजमस्यशरीरस्यचित्तमाशावशा नुगम् ॥ ३६ ॥ चित्तादिदमुदेत्युच्चैःसदसच्चांगजालकम् ॥ यथाचैतत्स्वयंस्वप्नसंभ्रमेष्वनुभूयते ॥ ३७ ॥ द्वेबीजेचित्तवृक्षस्यवृत्तिव्रततिधारिणः ॥ एकंप्राणपरिस्पंदोद्वितीयंदृढवासना ॥ ३८ ॥

त्वात् ॥३५॥ भावेति ॥ भावाभावदशाकोशंभावाभावदशानांजन्ममरणाद्यवस्थानांकोशवदाश्रयभूतम् ॥३६॥ चित्तस्यशरीरबीजत्वमुप पादयति ॥ चित्तादिति ॥ इदंसदसच्चविद्यमानमविद्यमानंवांगजालकमवयवसमष्टिरूपंशरीरंचित्तादेवोदेति । एतच्चार्थस्वरूपंयथायेनप्रका रेणसप्रकारस्स्वप्नसंभ्रमेषुस्वयमेवानुभूयते चित्तस्यशरीरपरिकल्पनाहेतुत्वंस्वप्नेषुस्वानुभवसिद्धमित्यर्थः ॥३७॥ द्वेइति ॥ वृत्तिव्रततिधारिणः

वृत्तयःसत्वादिगुणपरिणामरूपाःताएवव्रततयःशाखास्तद्धारिणः ॥ ३८ ॥ प्राणस्पंदोवासनाचचित्तस्यबीजमित्युक्तम् तत्रप्राणस्पंदस्य बीजत्वमाह ॥ यदेति ॥ प्राणोयदानाडीसंस्पर्शनोद्यतः । शतंचैकाचहृदयस्यनाड्यइतिश्रुतेः । यानाड्योमनोवहाःतासुसंचारणोद्युक्तः सत्प्रस्पंदतेतदाचित्तमाशुसंवेदनमयंवृत्तिज्ञानप्रचुरंसंजायते ॥ ३९ ॥ सतीति ॥ सर्वगतासतीसंवित्प्राणस्पंदेनबोध्यते विक्षोभ्यते । त स्मात्संविदोबहिर्मुखायाःसंरोधनमेवपरमंश्रेयोविद्धि ॥ ४० ॥ संविदिति ॥ संवित्समुदिताबोधिताविक्षोभितैवाशुसंवेद्यंयाति ततःसंवे दनात्संवेद्यानुसंधानात्चेतसोऽनंतानिदुःखानिसंभवंति ॥ ४१ ॥ सुप्तेति ॥ यदासंवित्पुनरबोधाय पुनरनुत्थानाय सुप्तासंतिष्ठतेस्वरूपए

यदाप्रस्पंदतेप्राणोनाडीसंस्पर्शनोद्यतः ॥ तदासंवेदनमयंचित्तमाशुप्रजायते ॥ ३९ ॥ सतीस र्वगतासंवित्प्राणस्पंदेनबोध्यते ॥ संवित्संरोधनंश्रेयःपरमंविद्धिराघव ॥ ४० ॥ संवित्समुदि तैवाशुयातिसंवेद्यमादरात् ॥ संवेदनादनंतानिततोदुःखानिचेतसः ॥ ४१ ॥ सुप्तापुनरबोधा यसंवित्संतिष्ठतेयदा ॥ लब्धंभवतिलब्धव्यंतदातदमलंपदम् ॥ ४२ ॥ तस्मात्प्राणपरिस्पंदै र्वासनाचोदनैस्तथा ॥ नोचेत्संविदमुच्छूनांकरोषितदजोभवान् ॥ ४३ ॥ संविदुच्छूनतांवि द्धिचित्तंतेनेदमाततम् ॥ अनर्थजालमालूनविशीर्णजनजीवकम् ॥ ४४ ॥

वविश्राम्यति तदालब्धव्यंतदमलंपदंलब्धंभवति ॥ ४२ ॥ तस्मादिति ॥ तस्मात्पूर्वोक्ताद्धेतोःप्राणस्पंदैःवासनाचोदनैश्चसंविदमुच्छूनांसं वेद्यगर्भतयास्थूलांनोकरोषिचेत्तर्हिभवानजोजन्मादिरहितोभविष्यसि ॥ ४३ ॥ संविदिति ॥ संविदःउच्छूनताविक्षुब्धतैवचित्तं तेनचि त्तेनैव इदमालूनविशीर्णजनजीवकं आलूनाःआसमंताच्छिन्नाःविशीर्णाःक्षयंप्रापिताश्चजनानांजीवाःप्राणायेनतादृशमिदमनर्थजालंसंसा ररूपमाततंप्रपंचितम् ॥ ४४ ॥

योगिनइति ॥ युक्तिकल्पितैः । योगशास्त्रनिरूपितैःप्रयोगैर्महामुद्रादिभिः ॥ ४५ ॥ चित्तेति ॥ प्राणसंरोधनमेवचित्तोपशांतिफलदं साम्यावस्थाकारणंसंविदःस्वास्थ्यंचविदुः ॥ ४६ ॥ ज्ञानेति ॥ पूर्वंप्राणस्पंदकल्पिताचित्तस्योत्पत्तिरुक्ता इदानींवासनाकल्पितामपरां चित्तस्योत्पत्तिंशृणु ॥ ४७ ॥ दृढेति ॥ त्यक्तपूर्वापरविचारणं पूर्वंनियतपूर्वभाविकारणं अपरंनियतपश्चाद्भाविकार्यं त्यक्तंपूर्वापरयोर्विचारणंयस्मिन् । किमस्यकारणंकार्यंवेतिविचारंविनैवपदार्थस्यआदानमुपादानं यद्यस्मात्कारणाद्दृढभावनयैव दीर्घकालंनैरंतर्यपरिशीलनयैवभवति तस्मात्सैवदृढभावनावासनेतिप्रकीर्तिता । सद्योजातस्यसुप्तोत्थितस्यवा सहसाप्रवृत्तौहेतुर्वासनेत्यर्थः । यद्वापूर्वंचिरपरिशीलन

योगिनश्चित्तशांत्यर्थंकुर्वंतिप्राणरोधनम् ॥ प्राणायामैस्तथाध्यानैःप्रयोगैर्युक्तिकल्पितैः ॥ ४५ ॥
चित्तोपशांतिफलदंपरमंसाम्यकारणम् ॥ सुभगंसंविदःस्वास्थ्यंप्राणसंरोधनंविदुः ॥४६॥ ज्ञानवद्भिःप्रकटितामनुभूतांचराघव ॥ चित्तस्योत्पत्तिमपरांवासनाजनितांशृणु ॥ ४७ ॥ दृढभावनयात्यक्तपूर्वापरविचारणम् ॥ यदादानंपदार्थस्यवासनासाप्रकीर्तिता ॥ ४८ ॥ भावितंतीव्रसंवेगादात्मनायत्तदेवसः ॥ भवत्याशुमहाबाहोविगतेतरसंस्मृतिः ॥ ४९ ॥ तादृग्रूपोहिपुरुषोवासनाविवशीकृतः ॥ प्रपश्यातियदेवैतत्सद्वस्त्विवतिविमुह्यति ॥ ५० ॥

यासंप्रतित्यक्तपूर्वापरविचारणं परिशीलितसजातीयपदार्थादानं यतःसंस्काराद्भवतिसावासनाप्रकीर्तिता संस्कारोवासनेत्यर्थः ॥४८॥ भावितमिति ॥ यद्वस्तुतीव्रसंवेगाद्दृढाभ्यासादात्मनाचित्तेनभावितंवासितंभवति सभावितपुरुषोविगतेतरसंस्मृतिःवस्त्वंतरमचिंतयन्आशु तदेववस्तुभवति ॥ ४९ ॥ तादृगिति ॥ वासनाविवशीकृतःतादृग्रूपःपुरुषोयदेववस्तुप्रपश्यतिभावयति तदेवसद्वस्तुप्रामाणिकंवस्त्विवति विमुह्यति ॥ ५० ॥

वासनेति ॥ दुर्दृष्टिःदुर्वासनादूषितदृष्टिःपुरुषो वासनावेगवैवश्यात् तत्प्रसिद्धंवस्तुस्वरूपंप्रजहाति नगृह्णातीत्यर्थः । मदवशादिवमदपारवश्यादिव सर्ववस्तुभ्रांतमन्यथाभूतमेवपश्यति ॥ ५१ ॥ असम्यगिति ॥ यच्छब्दत्रयमव्ययंहेत्वर्थे । असम्यग्दर्शनेअनात्मन्यात्मभावनेअवस्तुनिवस्तुत्वसंकल्पनेचयत्कारणं तदेवान्यथाज्ञाननिमित्तंचित्तमित्यर्थः ॥ ५२ ॥ दृढेति ॥ पदार्थैकभावनात् दृढाभ्यासमतिचंचलंचित्तंजन्मादिकारणंसंजायते ॥ ५३ ॥ यदेति ॥ यत्हेयोपादेयरूपि तद्वस्तुकिंचिदपियदानभाव्यते किंतर्हिसकलंत्यक्त्वातूष्णींस्थीयतेत

वासनावेगवैवश्यात्स्वरूपंप्रजहातितत् ॥ भ्रांतंपश्यतिदुर्दृष्टिःसर्वंमदवशादिव ॥ ५१ ॥ असम्यग्दर्शनेयद्यदनात्मन्यात्मभावने ॥ यदवस्तुनिवस्तुत्वंतच्चित्तंविद्धिराघव ॥५२॥ दृढाभ्यासंपदार्थैकभावनादतिचंचलम् ॥ चित्तंसंजायतेजन्मजरामरणकारणम् ॥ ५३ ॥ यदानभाव्यतेकिंचिद्धेयोपादेयरूपियत् ॥ स्थीयतेसकलंत्यक्त्वातदाचित्तंनजायते ॥ ५४ ॥ अवासनत्वात्सततंयदानमनुतेमनः ॥ अमनस्तातदोदेतिपरमोपशमप्रदा ॥ ५५ ॥ यदानभाव्यतेभावःक्वचिज्जगतिवस्तुनि ॥ तदाहृदंबरेशून्येकथंचित्तंप्रजायते ॥ ५६ ॥ एतावन्मात्रकंमन्येरूपंचित्तस्यराघव ॥ यद्भावनंवस्तुनोऽतर्वस्तुत्वेनरसेनच ॥५७॥ नकिंचित्कलनायोग्यंदृश्यंभावयतःस्वतः ॥ आकाशकोशस्वच्छस्यकुतश्चित्तोदयोभवेत् ॥ ५८ ॥

दाचित्तंनजायते ॥ ५४ ॥ अवासनत्वादिति ॥ मनःकर्तृनमनुतेनसंकल्पयति ॥ ५५ ॥ यदेति ॥ जगतिवस्तुनिचक्वचिदपिभावःसत्तायदानभाव्यते तदानिर्वासनत्वात्शून्येहृदंबरेकथंचित्तंप्रजायते ॥ ५६ ॥ एतावदिति ॥ वस्तुनःपदार्थस्य अंतःअंतःकरणेवस्तुत्वेनवस्तुस्वरूपेणरसेनआदरेणच यद्भावनंएतावन्मात्रकमेवचित्तस्यस्वरूपंमन्ये ॥ ५७ ॥ नकिंचिदिति ॥ कलनायोग्यंसंकल्पादिविषयंदृश्यंकिं

चिदपिस्वतोनभावयतःअतएवाकाशवत्स्वच्छस्य चित्तोदयःकुतोभवेत् ॥ ५८ ॥ यदिति ॥ आस्थायआदृत्यदृश्यस्ययदभावनंअनादर
वीक्षणमित्यर्थः । अभावस्यदृश्यस्यनास्तित्वस्यवायद्भावनंयथावस्तुदर्शित्वं ब्रह्मैवेदंसर्वमितियथार्थवस्तुदर्शित्वंचयावत् तत्सर्वमचित्तत्वमुच्य
ते । त्रेधापिचित्तस्यनिर्वासनत्वात् ॥ ५९ ॥ सर्वमिति ॥ शीतलंशीतलत्वंब्रह्मैवेदंसर्वमाशयवर्ति निवृत्तरागद्वेषतयाशीतलेनाभिप्रायेणव
र्तमानं वृत्तिस्थमपिवृत्तिमदपि ॥ ६० ॥ घनेति ॥ चक्रभ्रमवत् यथाहिकुलालचक्रस्यभ्रमणंकुलालव्यापारनिवृत्तावपियावत्संस्कारमनुवर्तते
तद्वज्जीवन्मुक्तशरीरमविद्यानिवृत्तावपितत्संस्कारशेषात्प्रारब्धभोगपर्यंतमवतिष्ठतइत्यर्थः ॥ ६१ ॥ भ्रष्टेति ॥ रसनिर्हीना रसोविषयेष्वाद

यदभावनमास्थाययदभावस्यभावनम् ॥ यद्यथावस्तुदर्शित्वंतदचित्तत्वमुच्यते ॥ ५९ ॥ सर्व
मंतःपरित्यज्यशीतलाशयवर्तियत् ॥ वृत्तिस्थमपितच्चित्तमसद्रूपमुदाहृतम् ॥ ६० ॥ घनानवा
सनायस्यपुनर्जननकारिणी ॥ जीवन्मुक्तःसतत्त्वस्थश्चक्रभ्रमवदास्थितः ॥ ६१ ॥ भ्रष्टबीजोप
मायेषांपुनर्जननवर्जिता ॥ वासनारसनिर्हीनाजीवन्मुक्ताहितेस्मृताः ॥ ६२ ॥ सत्वरूपपरिप्रा
प्तचित्तास्तेज्ञानपारगाः ॥ अचित्ताइतिकथ्यंतेदेहांतेव्योमरूपिणः ॥ ६३ ॥ द्वेबीजेरामचित्तस्य
प्राणस्पंदनवासने ॥ एकस्मिंश्चतयोःक्षीणेक्षिप्रंद्वेअपिनश्यतः ॥ ६४ ॥

रातिशयःतद्रहिता ॥ ६२ ॥ सत्वेति ॥ सत्वरूपपरिप्राप्तचित्ताः रजस्तमोभागयोर्निवृत्तत्वात् सत्वरूपमेवप्राप्तंचित्तंयेषांतेजीवन्मुक्ताअ
चित्ताःकथ्यंते । अचित्तत्वादेवदेहस्यांतेव्योमरूपिणःचिदाकाशरूपाभवंति ॥ ६३ ॥ द्वेबीजेइति ॥ वासनाप्राणस्पंदयोःचित्तबीजत्व
मुपपाद्य इदानींबीजांकुरतयोःपरस्परहेतुत्वादन्यतरनाशेऽपिद्वयोर्नाशइतिश्लोकद्वयेनोच्यते । चित्तबीजस्य चित्तस्यबीजभूतयोर्वासना
प्राणस्पंदयोरित्यर्थः ॥ ६४ ॥

 ॥ ६५ ॥ वासनेति ॥ संवेद्यंदृश्यं यतःकरणात्तौवासनाप्राणस्पंदौ ततःसंवेद्यात्स्फुरतःप्रवर्तेते ॥ ६६ ॥ ६७ ॥ संविदमिति ॥ धीरेति 
संबोधनम् । तयासंविदा ॥ ६८ ॥ नबहिरिति ॥ संवित्कल्पितत्वात्संवेद्यस्यसंविदेवबीजमित्यर्थः ॥ ६९ ॥ एतदेवसदृष्टांतमुपपादयति ॥
॥ ६६ ॥ स्वप्नइति ॥ यथास्वप्नेस्वचमत्कारयोगेनस्वस्यैवभावनावशात् असद्भूतमपिस्वमरणंदेशांतरस्थितिश्चप्रतीयते तथासंविद्वशात्संवेद्यमित्यर्थः

वासनावशतःप्राणस्पंदस्तेनचवासना ॥ जायतेचित्तबीजस्यतेनबीजांकुरक्रमः ॥ ६५ ॥ वासनाप्राणपवनस्पंदयोरनयोर्द्वयोः ॥ संवेद्यंबीजमित्युक्तंस्फुरतस्तौयतस्ततः ॥ ६६ ॥ संवेद्यसंपरित्यागात्प्राणस्पंदनवासने ॥ समूलंनश्यतःक्षिप्रंमूलच्छेदादिवद्रुमः ॥ ६७ ॥ संविदंविद्धिसंवेद्यबीजंधीरतयाविना ॥ नसंभवतिसंवेद्यंतैलहीनस्तिलोयथा ॥ ६८ ॥ नबहिर्नांतरेकिंचित्संवेद्यंविद्यतेपृथक् ॥ संवित्स्फुरतिसंकल्प्यसंवेद्यंपश्यतिस्वतः ॥ ६९ ॥ स्वप्नेयथात्ममरणंतथादेशांतरस्थितिः ॥ स्वचमत्कारयोगेनसंवेद्यंसंविदस्तथा ॥ ७० ॥ पूर्वदृष्टमदृष्टंवायदस्याःप्रतिभासते ॥ संविदस्तत्प्रयत्नेनमार्जनीयंविजानता ॥ ७१ ॥ तदमार्जनमात्रंहिमहासंसारतांगतम् ॥ तत्प्रमार्जनमात्रंतुमोक्षइत्यनुभूयते ॥ ७२ ॥ संवेदनमनंतायदुःखायजननात्मने ॥ असंवित्तिरजाड्यस्थासुखायाजननात्मने ॥ ७३ ॥

॥ ६६ ॥

॥ ७० ॥ पूर्वेति ॥ यद्वस्तुपूर्वदृष्टमदृष्टंवा अस्याःसंविदःसकाशात्प्रतिभासते तत्संवेद्यंवस्तु विजानतापुरुषेणप्रयत्नेनमार्जनीयंनिरसनीयम् ॥ ७१ ॥ तदिति ॥ तदमार्जनमात्रं तस्यसंवेद्यस्याविस्मरणमेवमहान्संसारःतत्प्रमार्जनमात्रंदृश्यविस्मरणमेवमोक्षः ॥ ७२ ॥ संवेदनमिति ॥ संवेदनंसंवेद्यानुसंधानं अनंतायजननात्मनेसंसाररूपाय दुःखायभवति । अजाड्यस्थाजाड्यसंबंधरहितायाअसंवित्तिःसंवेद्याननु

संधानंसा अजननात्मनेमोक्षरूपायसुखायभवति ॥७३॥ अजडइति ॥ हेरघूद्वहत्वंअजडोजाडयरहितःविगलितानंदरूपचित्तपरिणामः त्य
क्तसंवेदनःहीनसंवेद्यानुसंधानश्चभव । यःअसंवेद्य संवेद्यमननुसंधाय प्रबुद्धात्माप्रकाशमानस्वरूपः सएवपरमात्मैवत्वंसत्यं नात्रसंदेहइत्यर्थः
॥ ७४ ॥ असंवित्तिरिति ॥ असंवित्तौसंवित्त्यभावेतज्जाडयंकथंनिवार्यतेअसंवित्तेर्जाडयाविनाभूतत्वस्यअचेतनेषुदृष्टत्वात् ॥ ७५ ॥ यइ
ति ॥ योजीवःसर्वत्रसर्वेषुदृश्येषुअनवस्थास्थोऽस्थिरादरः कुत्रचित्कस्मिंश्चिदपिदृश्येविश्रांतास्थोनभवति अतश्चकिंचिदपिसंवेद्यंचित्ते न

अजडोगलितानंदस्त्यक्तसंवेदनोभव ॥ असंवेद्यप्रबुद्धात्मायस्तुसत्वंरघूद्वह ॥ ७४ ॥ श्रीरा
मउवाच ॥ असंवित्तिरजाडयस्थाकीदृशीभवतिप्रभो ॥ असंवित्तौचजाडयंतत्कथंवाविनिवा
र्यते ॥ ७५ ॥ वसिष्ठउवाच ॥ यःसर्वत्रानवस्थास्थोविश्रांतास्थोनकुत्रचित् ॥ जीवोनविंदते
किंचिदसंविदजडोहिसः ॥ ७६ ॥ संविद्वस्तुदशालंबःसयस्येहनविद्यते ॥ सोऽसंविदजडःप्रो
क्तःकुर्वन्कार्यशतान्यपि ॥ ७७ ॥ संवेद्येनहृदाकाशंमनागपिनलिप्यते ॥ यस्यासावजडोऽसं
विज्जीवन्मुक्तःसउच्यते ॥ ७८ ॥ यदानभाव्यतेकिंचिन्निर्वासनतयात्मनि ॥ बालमूकादिवि
ज्ञानमिवचस्थीयतेस्थिरम् ॥ ७९ ॥

विंदतेनानुसंधत्ते सजीवः असंवित्संवेद्याननुसंधानात् अजडश्चेतनत्वात् ॥ ७६ ॥ संविदिति ॥ वस्तुदशालंबःचैतन्यस्यतदिदमितिभूता
दिवस्त्ववस्थानुसंधानंसंविदित्युच्यते । सातादृशीसंविद्यस्यनविद्यतेसकार्यशतान्यपिकुर्वन्नसंविदजडःप्रोक्तः ॥ ७७ ॥ संवेद्येनेति ॥ हृदा
काशंचित्ताकाशंनलिप्यतेनिर्वासनत्वात्नश्लिष्यते ॥७८॥ यदेतिश्लोकद्वयंवाक्यम् ॥ यदानिर्वासनतयाकिंचिदप्यात्मनिनभाव्यतेनानुसं
धीयते बालमूकादीनांविज्ञानमिवचनिर्विकल्पतयास्थिरंस्थीयते स्वरूपेणेतिशेषः । बालादिवन्निर्विकल्पज्ञानस्वरूपतयास्थीयतइत्यर्थः ॥७९॥

 

तदाजाड्यविनिर्मुक्तंअसंवेदनंआश्रितंभवति । यस्मादसंवेदनाश्रयणात्भूयोनलिप्यते पुण्यपापवासनाभिर्नसंबध्यते ॥ ८० ॥ समस्तेति ॥ समस्तांवासनांत्यक्त्वायोनिर्विकल्पःसमाधिःसंभूतःतस्माद्धेतोःखेआकाशेनीलत्वमिवकलितंस्फारमानंदित्वंप्रवर्तते ॥ ८१ ॥ योगिनइति ॥ तत्रनिर्विकल्पसमाधौलीनस्य अतएवनिःसंवेदना संवेद्यानुसंधानरहितासंविद्यस्यताद्दशस्ययोगिनः तन्मयत्वात् ध्येयेन वस्तुनासामरस्याद्धेतोरनाद्यंते अंतःस्वरूपे तदपिआनंदित्वमपिविलीयते ॥ ८२ ॥ ८३ ॥ एतामिति ॥ एतांदृष्टिंजाड्यरहितांसंवित्तिरूपांदृष्टिम् ॥ ८४ ॥ अथेति ॥ याहिसंवित्संवेद्यस्यबीजंअस्याःसंविदःसन्मात्रंअविच्छिन्नंचित्स्वरूपंबीजमुच्यते । यद्यस्मात्कारणादेषासंवित्तेजसस्तेजोद्रव्यात्प्रदीपादेः प्राकाश्यमिवप्रकाशइवसन्मात्रादेवोदेति ॥ ८५ ॥ द्वेइति ॥ सत्तायाःस्वरूपसत्तायाःद्वेरूपेस्तः । तत्रतयोर्मध्येएकंरूपंनानाकृति नानाप्रकारवत्स्थितं एकरूपमविक्षिप्तंतुरूपंद्वितीयम् ॥ ८६ ॥ घटेति ॥ यत्सत्तारूपंघटतापटतातत्तात्वत्ता

तदाजाड्यविनिर्मुक्तमसंवेदनमाततम् ॥ आश्रितंभवतिप्राज्ञयस्माद्भूयोनलिप्यते ॥ ८० ॥ समस्तवासनांत्यक्त्वानिर्विकल्पसमाधितः ॥ नीलत्वमिवखेस्फारमानंदित्वंप्रवर्तते ॥ ८१ ॥ योगिनस्तत्रलीनस्यनिःसंवेदनसंविदः ॥ तन्मयत्वादनाद्यंतेतदप्यंतर्विलीयते ॥ ८२ ॥ गच्छंस्तिष्ठन्स्पृशन्जिघ्रन्नपितेनसउच्यते ॥ अजडोगलितानंदस्त्यक्तसंवेदनःसुखी ॥ ८३ ॥ एतांदृष्टिमवष्टभ्यकष्टयायत्नचेष्टया ॥ तरेद्दुःखांबुधेःपारमपारगुणसागरम् ॥ ८४ ॥ अथास्यांसंविदोरामसन्मात्रंबीजमुच्यते ॥ सन्मात्राद्यदुदेत्येषाप्राकाश्यमिवतेजसः ॥ ८५ ॥ द्वेरूपेतत्रसत्तायाएकंनानाकृतिस्थितम् ॥ द्वितीयमेकरूपंतुविभागोऽयंतयोःशृणु ॥ ८६ ॥ घटतापटतात्तात्वत्तामत्तेतिकथ्यते ॥ सत्तारूपंविभागेनयत्तत्रानाकृतिस्मृतम् ॥ ८७ ॥

मत्तेतिविभागेनकथ्यते तत्सत्तायारूपंनानाकृतीतिस्मृम् । तदुक्तंहरिणा । संबंधिभेदात्सत्तैवभिद्यमानागवादिषु । जातिरित्युच्यते तस्यांसर्वेशब्दाव्यवस्थिताइति ॥ ८७ ॥ विशेषमिति ॥ विशेषंनामजात्यादिभेदंपरित्यज्य यत्सन्मात्रमलेपकंनिर्दोषंरूपमस्तितत्सत्तायामहारूपंपदंएकरूपमितिविदुः ॥ ८८ ॥ कालेति ॥ कालसत्ता कालकृताभूतभवद्भाविभेदभिन्नासत्ता कलासत्ता कलाअंशः तद्भेदकृता स्थूलसूक्ष्मदीर्घह्रस्वादिरूपासत्ता वस्तुस्वरूपभेदकृताघटपटादिरूपासत्ता । इयंकालसत्ताइयंकलासत्ताइयंच वस्तुसत्तेत्यपिविभागकलनांभेदभावनांत्यक्त्वासन्मात्रैकपरोभव ॥ ८९ ॥ कालेति ॥ कालसत्तास्वसत्तास्वरूपसत्ता चकारात्कलासत्ताप्रोन्मुक्तकलना परित्यक्त

विशेषंसंपरित्यज्यसन्मात्रंयदलेपकम् ॥ एकरूपंमहारूपंसत्तायास्तत्पदंविदुः ॥८८॥ कालसत्ता कलासत्तावस्तुसत्तेयमित्यपि ॥ विभागकलनांत्यक्त्वासन्मात्रैकपरोभव ॥ ८९ ॥ कालसत्तास्वसत्ताचप्रोन्मुक्तकलनासती ॥ यद्यप्युत्तमसद्रूपातथाप्येषानवास्तवी ॥ ९० ॥ विभागकलनायत्र विभिन्नपददायिनी ॥ नानात्वकारणंदृष्टातत्कथंपावनंभवेत् ॥ ९१ ॥ सत्तासामान्यमेवैकंभावयन्केवलंविभुम् ॥ परिपूर्णपरानंदीतिष्ठापूरितदिग्भरः ॥ ९२ ॥ सत्तासामान्यमात्रस्ययया कोटिःकोविदेश्वर ॥ सैवास्यबीजतांयाताततएतत्प्रवर्तते ॥ ९३ ॥

विकल्पांशासती यद्यपिउत्तमसद्रूपातथापिएषाकालादिसत्तावास्तवीअविकल्पितानभवति ॥ ९० ॥ विभागेति ॥ यत्रकालसत्तादौनानात्वकारणंभेदहेतुमुपाधिंदृष्टा विभागकलना विभिन्नपददायिनी वस्तुस्वरूपभेदबोधिनीभवति तत्कालसत्तादिकेसत्तारूपंकथंनामपावनंशुद्धंभवेत् । औपाधिकत्वादितिभावः ॥ ९१ ॥ सत्तेति ॥ विभुंव्यापकंसत्तासामान्यमेवैकंवस्तु केवलंभावयन् परिपूर्णपरानंदीआपूरितदिग्भरस्तिष्ठ ॥ ९२ ॥ सत्तेति ॥ सत्तासामान्यमात्रस्यययाकोटिरुत्कर्षः अविकृतरूपैव अस्यजगतोबीजतांयाताततएतज्जगत्पूर्वोक्त

क्रमेणप्रवर्ततेअयंक्रमः । सत्तासामान्यात्संवित्प्रवर्तते । संविदः संवेद्यं संवेद्यात्प्राणस्पंदवासने ततश्चित्तं ततोदेहः ततःसंसारइति ॥ ९३ ॥ सत्तेति ॥ सत्तासामान्यस्यपर्यंतेकोटौयत्प्रसिद्धंकलनयोज्झितं आद्यमनाद्यंतंचपदंतस्यवस्तुनोबीजंनविद्यते ॥ ९४ ॥ तत्रेति ॥ तत्रसर्वबीजपूर्वोक्तपदेतिष्ठति ॥ ९५ ॥ ९६ ॥ ९७ ॥ तत्पूर्वोक्तंसत्तासामान्यकोटिस्थंपदम् । अवगतंविततमेकंतत्स्वरूपंयेनताद्दशस्त्वंभव ।

सत्तासामान्यपर्यंतेयत्तत्कलनयोज्झितम् ॥ पदमाद्यमनाद्यंतंतस्यबीजंनविद्यते ॥ ९४ ॥ तत्रसत्तालयंयातिनिर्विकारंचतिष्ठति ॥ भूयोनावर्ततेदुःखंतत्रलब्धपदःपुनः ॥ ९५ ॥ तद्धेतुःसर्वहेतूनांतस्यहेतुर्नविद्यते ॥ ससारःसर्वसाराणांतस्मात्सारोनविद्यते ॥ ९६ ॥ तस्मिंश्चिद्दर्पणेस्फारेसमस्तावस्तुद्दष्टयः ॥ इमास्ताःप्रतिबिंबंतिसरसीवतटद्रुमाः ॥ ९७ ॥ तदमलमजरंतदात्मतत्त्वंतदवगताद्युपशांतिमेतिचेतः ॥ अवगतविततैकतत्स्वरूपोभवभयमुक्तपदोऽसितच्चिराय ॥ ९८ ॥ श्रीरामउवाच ॥ एतानितानिप्रोक्तानित्वयाबीजानिमानद ॥ कतमस्यप्रयोगेणशीघ्रमासाद्यतेपदम् ॥ ९९ ॥ वसिष्ठउवाच ॥ एतेषांदुःखबीजानांप्रोक्तंयद्यन्मयोत्तरम् ॥ तस्यतस्यप्रयोगेणशीघ्रमासाद्यतेपदम् ॥ १०० ॥ सत्तासामान्यकोटिस्थेद्रागित्येवपदेयदि ॥ पौरुषेणप्रयत्नेनबलात्संत्यज्यवासनाः ॥ १ ॥

भयेनसंसारभयेनमुक्तं पदंस्वरूपंयस्यसोऽसि सम्यगेवतत्संविन्मात्रमात्मतत्त्वं चिरायचिरम् ॥ ९८ ॥ ९९ ॥ एतेषामिति ॥ तस्यतस्यउत्तरोत्तरबीजस्यप्रयोगेणभावनया ॥ १०० ॥ सत्तेतिश्लोकद्वयंवाक्यम् । सत्तासामान्यकोटिस्थेपरेपदेक्षणमपिस्थितिंसमाधिंबध्वा

सिचेत्तस्मिन्नेवक्षणेतत्पदमासादयसीत्यन्वयः ॥ १ ॥ २ ॥ सत्तेति ॥ सत्तासामान्यनिष्ठायांतु ततोऽपिप्रयत्नविशेषःकर्तव्यइत्यर्थः ॥ ३ ॥ संविदिति ॥ संवित्तत्त्वसमाधौतु ततोऽप्यधिकोयत्नविशेषइत्यर्थः ॥ ४ ॥ संवेद्यइति ॥ केवलेसंवेद्येध्यानमेवनसंभवति अस्याःसंवित्तेरेव सर्वत्रसर्वदासंभवात् कैवल्यस्यसंवेद्यस्यासंभवादितिभावः ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ पूर्वेभ्यइति ॥ श्लोकषट्कंवाक्यम् । अयंवासनात्यागविष

स्थितिंबध्नासितत्त्वज्ञक्षणमप्यक्षयात्मिकाम् ॥ क्षणेऽस्मिन्नेवतत्साधुपदमासादयस्यलम् ॥ २ ॥ सत्तासामान्यरूपेवाकरोषिस्थितिमंगचेत् ॥ तत्किंचिदधिकेनेहयत्नेनाप्नोषितत्पदम् ॥ ३ ॥ संवित्तत्त्वेकृतध्यानोयदितिष्ठसिराघव ॥ तद्यत्नेनाधिकेनोच्चैरासादयसितत्पदम् ॥ ४ ॥ संवेद्ये केवलेध्यानंनकार्यंरघुनंदन ॥ संवेद्येवासनात्यागःसुमेरून्मूलनादपि ॥ ५ ॥ यावद्विलीनंनमनो नतावद्वासनाक्षयः ॥ नक्षीणावासनाध्यानंनसंभवतिराघव ॥ ६ ॥ सर्वत्रसंभवादस्याःसंवित्तेरे वसर्वदा ॥ वासनासंपरित्यागेयदियत्नंकरोषिवा ॥ ७ ॥ तत्तेशिथिलतांयांतिसर्वाधिव्याधयः क्षणात् ॥ ८ ॥ पूर्वेभ्यस्तुप्रयत्नेभ्योविषमोऽयंहिसंस्मृतः ॥ दुःसाध्योवासनात्यागःसुमेरून्मूल नादपि ॥ ९ ॥ यावद्विलीनंनमनोनतावद्वासनाक्षयः ॥ नक्षीणावासनायावत्तावच्चित्तंनशाम्य ति ॥ १० ॥ यावन्नतत्त्वविज्ञानंनतावच्चित्तसंक्षयः ॥ यावन्नचित्तोपशमोनतावत्तत्त्ववेदनम् ॥ ११ ॥

यःप्रयत्नः वासनाक्षयमनोनाशतत्त्वज्ञानानामन्योन्यसापेक्षत्वात् एकैकशःसाधयितुंअशक्यत्वात् त्रयमपिसममेवाभ्यसेदित्यर्थः ॥ ९ ॥ ॥ १० ॥ ११ ॥

॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ एकैकशइति ॥ मंत्राःसंकीर्तिताइव शिवशक्तिमंत्राणांपरस्परसापेक्षाणामेकैकशःपुरश्चरणंयथानफलदंतद्वदित्यर्थः ॥ १७ ॥ १८ ॥ १९ ॥ वासनेति ॥ वासनाप्राणस्पंदयोर्मिलित्वाचित्तबीजत्वात् वासनात्यागेनसमंप्राण





यावन्नवासनानाशस्तावत्तत्त्वागमःकुतः ॥ यावन्नतत्त्वसंप्राप्तिर्नतावद्वासनाक्षयः ॥१२॥ तत्त्वज्ञानंमनोनाशोवासनाक्षयएवच ॥ मिथःकारणतांगत्वादुःसाध्यानिस्थितान्यतः ॥१३॥ तस्माद्राघवयत्नेनपौरुषेणविवेकतः ॥ भोगेच्छांदूरतःकृत्वात्रयमेतत्समाश्रयेत् ॥ १४ ॥ त्रयएतेसमंयावन्नस्वभ्यस्तामुहुर्मुहुः ॥ तावन्नतत्त्वसंप्राप्तिर्भवत्यपिसमाशतैः ॥ १५ ॥ वासनाक्षयविज्ञानमनोनाशामहामते ॥ समकालंसमभ्यस्ताभवंतिफलदामुने ॥ १६ ॥ एकैकशोनिषेव्यंतेयद्येतेचिरमप्यलम् ॥ तन्नसिद्धिंप्रयच्छंतिमंत्राःसंकीर्तिताइव ॥ १७ ॥ त्रिभिरेभिश्चिराभ्यस्तैर्हृदयग्रंथयोदृढाः ॥ निःशंकमेवत्रुटयंतिबिसच्छेदाद्गुणाइव ॥ १८ ॥ जन्मांतरशताभ्यस्ताराामसंसारसंस्थितिः ॥ साचिराभ्यासयोगेनविनानक्षीयतेक्वचित् ॥ १९ ॥ वासनासंपरित्यागसमंप्राणनिरोधनम् ॥ विदुस्तत्त्वविदस्तस्मात्तदप्येवंसमाहरेत् ॥ २० ॥ वासनासंपरित्यागाच्चित्तंगच्छत्यचित्तताम् ॥ प्राणस्पंदनिरोधाच्चयथेच्छासितथाकुरु ॥ २१ ॥



निरोधनंविदुः । तस्मात्कारणात्तदपिप्राणनिरोधनमपि एवंवासनात्यागादित्रयेणसममेवसमाहरेत्समभ्यसेत् ॥ २० ॥ वासनेति ॥ चित्तनाशेवासनात्यागःप्राणनिरोधोवाहेतुरित्यर्थः ॥ २१ ॥

तत्रप्राणानिरोधोपायमाह ॥ प्राणेति ॥ युक्त्यापूर्वोक्तेनयोगेन आसनाशनयोगेन आसनंपद्मादि अशनंशरीरादि तदेवयोगउपायस्ते न ॥ २२ ॥ वासनाक्षयेउपायमाह ॥ निःसंगेति ॥ भवभावनवर्जनात्भवभावनानिसंसारहेतवोमलिनवासनाः तद्वर्जनात् ॥ २३ ॥

प्राणायामदृढाभ्यासैर्युक्त्याचगुरुदत्तया ॥ आसनाशनयोगेनप्राणस्पंदोनिरुध्यते ॥ २२ ॥ निःसंगव्यवहारित्वाद्भवभावनवर्जनात् ॥ शरीरनाशदर्शित्वाद्वासनानप्रवर्तते ॥ २३ ॥ वासनाभिभवेनष्टेनचित्तंसंप्रवर्तते ॥ संशांतपवनस्पंदेयथापांशुर्नभःस्थले ॥ २४ ॥ यःप्राणपवनस्पंदश्चित्तस्पंदःसएवहि ॥ प्राणस्पंदजयेयत्नःकर्तव्योधीमतोच्चकैः ॥ २५ ॥ उपविश्योपविश्यैकचित्तकेनमुहुर्मुहुः ॥ नशक्यतेमनोजेतुंविनायुक्तिमनिंदिताम् ॥ २६ ॥ अंकुशेनविनामत्तोयथादुष्टमतंगजः ॥ २७ ॥ अध्यात्मविद्याधिगमःसाधुसंगमएवच ॥ वासनासंपरित्यागः प्राणस्पंदनिरोधनम् ॥ २८ ॥ एतास्तुयुक्तयःपुष्टाःसंतिचित्तजयेकिल ॥ आभिस्तज्जीयतेक्षिप्रंधाराभिरिवभूरजः ॥ २९ ॥ सतीषुयुक्तिष्वेतासुहठान्नियमयंतिये ॥ चेतस्तेदीपमुत्सृज्यविनिघ्नंतितमोऽजनैः ॥ ३० ॥ विमूढाःकर्तुमुद्युक्तायेहठाच्चेतसोजयम् ॥ तेनिबध्नंतिनागेंद्रमुन्मत्तंबिसतंतुभिः ॥ ३१ ॥

॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ चित्तनाशोपायमाह ॥ अध्यात्मेतिश्लोकद्वयंवाक्यम् ॥ २८ ॥ आभिर्युक्तिभिःतच्चित्तम् ॥ २९ ॥ ॥ ३० ॥ ३१ ॥

मतिरिति ॥ यदीयाहठयोगसंबंधिनी ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ आगृहीतेति ॥ आगृहीतंआसमंतात्स्वीकृतं महापीठंमहतीप्रतिष्ठायेनतं रूढमूलमित्यर्थः । अतएवस्थिरस्थितिसुस्थितं स्थिरप्रतिष्ठत्वादचलंविचाररूपंकुसुमद्रुमंचिंतावात्यानविधुन्वं



मतिरालूनशीर्णांगीयदीयापेलवांगिका ॥ नक्वचिद्यातिविश्वासंमृगीग्रामगतायथा ॥ ३२ ॥ कालंयज्ञतपोदानतीर्थदेवार्चनभ्रमैः ॥ चिरमाधिशतोपेताःक्षपयंतिमृगाइव ॥ ३३ ॥ तस्मादेतांपरित्यज्यदुर्दृष्टिंरघुनंदन ॥ शुद्धांसंविदमाश्रित्यवीतरागःस्थिरोभव ॥ ३४ ॥ संवेद्यवर्जितमनुत्तममाद्यमेकंसंवित्पदंविकलनंकलयन्महात्मन् ॥ हृद्येवनिष्ठकलनारहितःक्रियांतुकुर्वन्नकर्तृपदमेत्यशमोदितश्रीः ॥ ३५ ॥ वसिष्ठउवाच ॥ मनागपिविचारेणचेतसःस्वस्यानिग्रहः ॥ मनागपिकृतोयेनतेनाप्तंजन्मनःफलम् ॥ ३६ ॥ विचारकणिकायेषाहृदिस्फुरतिपेलवा ॥ एषैवाभ्यासयोगेनप्रयातिशतशाखताम् ॥ ३७ ॥ आगृहीतंमहापीठंविचारकुसुमद्रुमम् ॥ चिंतावात्याविधुन्वंतिनास्थिरस्थितिसुस्थितम् ॥ ३८ ॥ गच्छतस्तिष्ठतोवापिजाग्रतःस्वपतोऽपिवा ॥ नविचारपरंचेतोयस्यासौमृतएवसः ॥ ३९ ॥ किमिदंस्याज्जगत्किंस्यादहमित्यनिशंशनैः ॥ विचारयाध्यात्मदृशास्वयंवासज्जनैःसह ॥ ४० ॥ विचारोऽध्यात्मविद्यानांज्ञानमंगविदुर्बुधाः ॥ ज्ञेयंतस्यांतरेवास्तिमाधुर्यंपयसोयथा ॥ ४१ ॥



ति ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥

सम्यगितिश्लोकद्वयंवाक्यम् ॥ सम्यग्ज्ञानेनसमालोकःसमदृष्टिः ज्ञेयसमःज्ञेयेनवस्तुनासमः ॥ ४२ ॥ ४३ ॥ अपवित्रमिति ॥ मृष्टव दपवित्रादिकंभुक्त्वाक्षिप्रंजरयति । समदृष्टितयानिःसंगत्वादितिभावः । तत्रअपवित्रंउच्छिष्टादि अपथ्यंवैद्यशास्त्रविरुद्धं क्लिन्नंचिरपर्युषितत्वात् । आर्द्राक्लिष्टमितिपाठेक्लिष्टमितिपक्कनष्टंस्वस्वरूपेणनष्टंरूपांतरापन्नमित्यर्थः । मृष्टंनिर्दोषंगुणवच्च । मृजशौचालंकारयोरितिधातुः

सम्यग्ज्ञानसमालोकःपुंसोज्ञेयसमःस्वयम् ॥ नबिभेतिनचादत्तेवैवश्यंनचदीनताम् ॥ ४२ ॥ भवत्यापीतमैरेयःसदामदमयोयथा ॥ समंचिद्रूपममलंज्ञेयंब्रह्मपरांवदुः ॥ ज्ञानाभिगममात्रेण तत्स्वयंसंप्रसीदति ॥ ४३ ॥ अपवित्रमपथ्यंचविषसिक्तंमलाद्यपि ॥ भुक्त्वाजरयतिक्षिप्रंक्लिन्नंन ष्टंचमृष्टवत् ॥ ४४ ॥ विषप्रतिविषाकल्कक्षीरेषुसलिलेऽधसि ॥ असक्तबुद्धिस्तत्त्वज्ञोभवत्यास्वा दनेसमः ॥ ४५ ॥ जीवितस्यापिहर्तारंदातारंचैकरूपया ॥ दृशाप्रसादमाधुर्यशालिन्यापरिप श्यति ॥ ४६ ॥ सकस्यचिन्नोकदाचिदक्षस्यविषयस्थितौ ॥ ददातिप्रसरंसाधुराधिप्रोज्झित याधिया ॥ ४७ ॥ अतत्त्वज्ञमविश्रांतमलब्धात्मानमस्थितिम् ॥ निगिरंतींद्रियाण्याशुहरि णाइवपल्लवम् ॥ ४८ ॥ संगःकारणमर्थानांसंगःसंसारकारणम् ॥ संगःकारणमाशानांसंगःका रणमापदाम् ॥ ४९ ॥

॥ ४४ ॥ विषेति ॥ विषंप्रसिद्धं प्रतिविषंविषनिवर्तकं प्रतिविषाधिकारेनिरूपितंद्रव्यांतरं अकल्कंअकल्मषंयत्क्षीरंतत्रच । अंधसिअन्ने ॥ ४५ ॥ ४६ ॥ सइति ॥ सःसमदृष्टिःअक्षस्यइंद्रियस्यप्रसरंआसक्तिम् ॥ ४७ ॥ अतत्त्वज्ञमिति ॥ निगिरंतिग्रसंति ॥ ४८ ॥ निःसंग व्यहारित्वादित्यादौप्रस्तुतत्वात् । संगनिरूपणायतंसंगमवश्यहेयत्वेनप्रस्तौति ॥ संगइत्यादिना ॥ ४९ ॥

॥ ७१ ॥

संगत्यागंविदुर्मोक्षंसंगत्यागादजन्मता ॥ संगंत्यजत्वंभावानांजीवन्मुक्तोभवानघ ॥ ५० ॥
श्रीरामउवाच ॥ सर्वसंशयनीहारशरन्मारुतहेमुने ॥ संगःकिमुच्यतेब्रूहिसमासेनममप्रभो
॥ ५१ ॥ वसिष्ठउवाच ॥ भावाभावपदार्थानांहर्षामर्षविकारदा ॥ मलिनावासनायैषासासंगइ
तिकथ्यते ॥ ५२ ॥ जीवन्मुक्तशरीराणामपुनर्जन्मकारिणी ॥ मुक्ताहर्षविषादाभ्यांशुद्धाभव
तिवासना ॥ ५३ ॥ अजीवन्मुक्तरूपाणांदीनानामूढचेतसाम् ॥ कथ्यतेसंगशब्देनवासनाभ
वकारिणी ॥ ५४ ॥ हर्षामर्षविषादानांयदिगच्छसिवश्यताम् ॥ ततोहर्षविषादाभ्यांबंधनीवा
सनाभवेत् ॥ ५५ ॥ मुक्तोहर्षविषादाभ्यांयदिगच्छसिनान्यताम् ॥ वीतरागभयक्रोधस्तदसं
गोऽसिराघव ॥ ५६ ॥ दुःखैर्नग्लानिमायासियदिहृष्यासिनोसुखैः ॥ आशावैवश्यमुत्सृज्यतद
संगोऽसिराघव ॥ ५७ ॥ संपद्विपदिचैवात्मायदितेलक्ष्यतेसमः ॥ यथाप्राप्तानुवर्तीचतदसंगो
सिराघाव ॥ ५८ ॥ सदासमस्तेऽपिहिवस्तुजातेसमाशयोह्यंतरदीनसत्वः ॥ यदेवकिंचित्प्रकृतं
तदेवकुर्वन्नसंगःसुखमास्वराम ॥ ५९ ॥ इतिश्रीवाल्मीकीयेमोक्षोपायउपशमप्रकरणआकाश
गत्यभावादिनिरूपणंनामाष्टाविंशःसर्गः ॥ २८ ॥ समाप्तमिदमुपशमप्रकरणम् ॥ ५ ॥

॥ ७१ ॥

॥ ५९ ॥ इतिश्रीवासिष्ठविवरणउपशमप्रकरणआकाशगत्यभावादिनिरूपणंनामाष्टाविंशःसर्गःसमाप्तः ॥ २८ ॥ ॥ ॥

॥१७॥१८॥१९॥ अथेति श्लोकद्वयंवाक्यम् ॥ २० ॥ गीताउपनिषदर्थसंग्राहकाःश्लोकाः गीतात्मभावनाः गीतावर्णिताः आत्मभावना स्वानुसंधानप्रकारोयासुताः गीतायांनिरूपितोयोऽयमात्मातस्यभावनंस्वरूपनिरूपणंयासुताः ॥२१॥ तत्रप्रथमःसिद्धआह ॥ द्रष्टृति ॥ द्रष्टृ दृश्यसमायोगात् द्रष्टुःपुरुषस्यदृश्येनदृष्टिप्रियेणवस्तुनासमायोगात् संश्लेषाद्धेतोर्यःप्रत्ययानंदनिश्चयः प्रत्ययेबुद्धावानंदावभासः । आत्म तत्त्वोत्थं आत्मनोजीवस्यतत्त्वेनब्रह्मभावेनोत्थमाविर्भूतं तादृगानंदात्मकं स्वमात्मानमेवदेवं निस्पंदंनिश्चलमुपास्महेभावयामः । वांछि

वसिष्ठउवाच ॥ अस्त्यस्तमितसर्वापदुद्यत्संपदुदारधीः ॥ विदेहानांमहीपालोजनकोनामवी र्यवान् ॥ १७ ॥ कल्पवृक्षोऽर्थिसार्थानांमित्राब्जानांदिवाकरः ॥ सकदाचिन्मधौमत्तकोकिलो ल्लासशालिनि ॥ ययावुपवनंकांतंनंदनंवासवोयथा ॥ १८ ॥ तस्मिन्नुपवनेरम्येकेसरामोदमोदि ते ॥ दूरस्थानुचरःसोऽथकुंजेषुविचचारह ॥ १९ ॥ अथशुश्रावकस्मिंश्चित्तमालवनगुल्मके ॥ सिद्धानामप्रदृश्यानांस्वप्रसंगादुदाहृताः ॥ २० ॥ विविक्तवासिनांनित्यंशैलकंदरचारिणाम् ॥ इमाःकमलपत्राक्षगीतागीतात्मभावनाः ॥२१॥ द्रष्टृदृश्यसमायोगात्प्रत्ययानंदनिश्चयः ॥ य स्तंस्वमात्मतत्त्वोत्थंनिस्पंदंसमुपास्महे ॥ २२ ॥ द्रष्टृदर्शनदृश्यानित्यक्त्वावासनयासह ॥ दर्शनप्रथमाभासमात्मानंसमुपास्महे ॥ २३ ॥

तार्थप्राप्तौचरितार्थतयाचेतस्युपरतेसत्यात्मन्युदितआनंदोब्रह्मानंदएवेतिभावः ॥ २२ ॥ द्वितीयआह ॥ द्रष्टृदर्शनदृश्यानि द्रष्टाअहंकर्ता आत्मा दर्शनंचक्षुरादिव्यापारोपहितंवृत्तिज्ञानं दृश्यंतद्विषयः तानित्रीण्यपितद्वादसनयासहैवत्यक्त्वायोदर्शनप्रथमाभासो दर्शनात्वृत्ति ज्ञानात् प्रथममाभासतेतं सर्वस्मात्पूर्वंभातंस्वभासैवसर्वमवभासयंतमात्मानंसमुपास्महे ॥ २३ ॥

समइति ॥ शांतःप्रवृत्तिमार्गाद्उपरतः शांतमनाःउपशांतचित्तःमुनिर्मननननिष्ठः वरमणिस्वच्छः आकरजोमणिरिवनिर्मलः ॥७॥ यथेति ॥
यथाप्राप्तस्यप्रारब्धफलस्यानुभवनात् अप्राप्तेसर्वत्रअनभिवांछनाच्चहेतोस्त्यागादानपरित्यागीविज्वरोभव ॥८॥ यस्येति ॥ पाश्चात्त्यंचरमं इतः
परंजन्मांतराभावाद्विद्याःज्ञानहेतवः ॥ ९ ॥ तान्येवाह ॥ आर्यतेति ॥ आर्यतासदाचारपरंपरत्वं हृद्यतासर्वसंमतत्वं मैत्रीसर्वभूतानुकंपा

समःस्वस्थःस्थिरमतिःशांतःशांतमनामुनिः ॥ मौनीवरमणिस्वच्छोविज्वरोभवराघव ॥ ७ ॥
यथाप्राप्तानुभवनात्सर्वत्रानभिवांछनात् ॥ त्यागादानपरित्यागाद्विज्वरोभवराघव ॥ ८ ॥
यस्येदंजन्मपाश्चात्त्यंतस्यचैवमहामते ॥ विशंतिविद्याविमलामुक्तावेणुमिवोत्तमम् ॥ ९ ॥ आ
र्यताहृद्यतामैत्रीसौम्यतामुक्तताज्ञता ॥ समाश्रयंतितंनित्यमंतःपुरमिवांगनाः ॥ १० ॥ पेशला
चारमधुरंसर्वेवांछंतितंजनाः ॥ वेणुंमधुरनिध्वानंवनेवनमृगाइव ॥ ११ ॥ एषतावत्क्रमःप्रोक्तः
सामान्यःसर्वजंतुषु ॥ इममन्यंविशेषंत्वंशृणुराजीवलोचन ॥ १२ ॥ अस्मिन्संसारसंरंभेजा
तानांदेहधारिणाम् ॥ अपवर्गक्षमौरामद्वाविमावुत्तमौक्रमौ ॥ १३ ॥ एकस्तावद्गुरुप्रोक्तादनुष्ठा
नाच्छनैःशनैः ॥ जन्मनाजन्मभिर्वापिसिद्धिदःसमुदाहृतः ॥ १४ ॥ द्वितीयःस्वात्मनैवाशुकिं
चिद्व्युत्पन्नचेतसः ॥ भवतिज्ञानसंप्राप्तिराकाशफलपातवत् ॥१५॥ नभःफलनिपाताभेज्ञानसं
प्रतिपत्तये ॥ अत्रेमंशृणुवृत्तांतंप्राक्तनंकथयामिते ॥ १६ ॥

सौम्यताअंतःशीतलता मुक्ततानिःसंगत्वं ज्ञताज्ञाननिष्ठता ॥ १० ॥ ११ ॥ एषइति ॥ एषःपूर्वोक्तःक्रमोमुक्तिक्रमःसर्वजंतुषुसामान्यः
साधारणः इमंवक्ष्यमाणम् ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥

ॐस्वस्ति श्रीगणेशायनमः ॥ अथोपशमप्रकरणम् ॥ पूर्वंजगदुत्पत्तिस्थित्योर्मनएवकारणमित्युक्तम् । इदानींतदुपशमार्थंइदंप्रकरणमारभ्यते । तत्रच दशाख्यानानिभवंति । जनकःपुण्यपावनौबलिःप्रह्लादःगाधिःउद्दालकःसुरघुःभासविलासौवीतहव्यःजीवन्मुक्तस्याकाशगमनाद्यभावश्चेति तत्रचजनकवृत्तांतमवतारयितुंपीठिकामाचरति ॥ दीर्घेत्यादिना ॥ राजसतामसैरजस्तमःप्रधानैः रजःप्रभृतीनांलक्षणं सत्वंलघुप्रकाशकमिष्टमवष्टंभकंचलंचरजः गुरुआवरणकमेवतमइतिसांख्ये । सत्वंज्ञानंतमोऽज्ञानंरजोमिश्रमुदाहृतमितिगीतासु ॥१॥ सत्वेति ॥ सत्वस्थासत्वगुणप्रधानाजातिर्जन्मयेषांतैर्गुणबृंहितैःगुणामैत्र्यादयःतैर्बृंहितावर्धिताः तैर्हेलयालीलया त्वक्कंचुकः ॥२॥३॥ ततइति ॥ ब्रह्मघने

ॐश्रीवसिष्ठउवाच ॥ दीर्घसंसारमायेयंरामराजसतामसैः ॥ धार्यतेमानवैर्नित्यंसुस्तंभैरिवमंडपः ॥ १ ॥ सत्वस्थजातिभिर्धीरैस्त्वादृशैर्गुणबृंहितैः ॥ हेलयात्यज्यतेपक्कामायेयंत्वगिवोरगैः ॥ २ ॥ समस्तंखल्विदंब्रह्मसर्वमात्मेदमाततम् ॥ अहमन्यइदंचान्यदितिभ्रांतिंत्यजानघ ॥ ३ ॥ ततेब्रह्मघनेनित्येसंभवंतिनकल्पनाः ॥ विच्छित्तयःपयोराशौयथारामनसन्मयाः ॥ ४ ॥ नशोकोऽस्तिनमोहोऽस्तिनजन्मास्तिनजन्मवान् ॥ यदस्तीहतदेवास्तिविज्वरोभवराघव ॥५॥ निर्द्वंद्वोनित्यसत्वस्थोनिर्योगक्षेमआत्मवान् ॥ अद्वितीयोविशोकात्माविज्वरोभवराघव ॥६॥

घनीभूतेब्रह्मणिविच्छित्तयःतरंगादिभेदरचनाः सन्मयाःसंतःपरमार्थसंतः संतश्चतेमयाविक्षेपाश्चेतिसन्मयाः । डुमिञ्प्रक्षेपणे अन्यथामयटष्टित्वात् सन्मय्यइतिभवितव्यम् ॥४॥ नेति ॥ इहयदस्तियच्चिन्मात्रंवस्तुपरमार्थतोऽस्ति तदेवास्तितदेवसत्तयाप्रतीयते । अतोविज्वरोविगततापत्रयोभव ॥५॥ निर्द्वंद्वइति ॥ निर्द्वंद्वःशीतोष्णादेर्द्वंद्वान्निष्क्रांतः नित्यंसत्वगुणनिष्ठः निर्योगक्षेमः इष्टसाधनंयोगः अनिष्टनिवारणंक्षेमः तद्रहितः आत्मवान्अप्रमत्तचित्तःअद्वितीयोभेदभावनारहितः विशोकात्माविनष्टानुशोचनचित्सुखः ॥ ६ ॥

ॐ श्रीगणेशायनमः ॥ अथनिर्वाणप्रकरणंनिरूप्यते ॥ तत्रपंचदशाख्यानानि । भुशुंडःदेवपूजाबिल्वफलंशिला अर्जुनःशतरुद्राःवेतालःभगीरथःकिरातचिंतामणिगजाख्योपाख्यानत्रयगर्भःशिखिध्वजःकचःमिथ्याभृंगीइक्ष्वाकुःव्याधःभूमिकाश्चेति । तत्रप्राणवृत्त्यनुसंधानात् चित्तविश्रांत्यानिर्वाणमिति भुशुंडोपाख्यानेननिरूप्यते हितमुपदिशति ॥ दिक्कालेतिश्लोकद्वयंवाक्यम् ॥ अहंदिगादिभिरनवच्छिन्नमाद्यंतरहितंचिन्मात्रंब्रह्मैवास्मि इतरद्देहादिकंनास्तीत्यंतर्मत्वानिश्चित्य मुक्तामुक्तवपुः अभिमानपरित्यागान्मुक्तं प्रारब्धवशादमुक्तंचवपुर्येन तादृशः सन्स्वात्मसुखः आत्मारामोभव। अस्तिमुक्त्वेतिपाठेएकंब्रह्मैवास्ति इतरन्नेतिमत्वाअंतरहमित्यहंतांमुक्त्वाअमुक्तवपुर्जीवन्नेवस्वात्म

ॐ श्रीवसिष्ठउवाच ॥ दिक्कालाद्यनवच्छिन्नमदृष्टोभयकोटिकम् ॥ चिन्मात्रमक्षयंशांतमेकंब्रह्मास्मिनेतरत् ॥ १ ॥ इतिमत्वाहमित्यंतर्मुक्तामुक्तवपुर्महान् ॥ एकरूपःप्रशांतात्मामौनीस्वात्मसुखोभव ॥ २ ॥ यावदज्ञानकलनायावदब्रह्मभावना ॥ यावदास्थाजगज्जालेतावच्चित्तादिकल्पना ॥ ३ ॥ नास्तिचित्तंनचाविद्यानमनोनास्तिजीवकः ॥ एताश्चकलनारामकृताब्रह्मणएव ताः ॥ ब्रह्मैवैकमनाद्यंतमब्धिवत्प्रतिजृंभते ॥ ४ ॥ देहेयावदहंभावोदृश्येऽस्मिन्यावदात्मता ॥ यावन्ममेदमित्यास्थातावच्चित्तादिविभ्रमः ॥ ५ ॥

सुखोभवेतियोजना ॥ १ ॥ २ ॥ अन्यथासंसारोननिवर्ततइत्याह ॥ यावदिति ॥ ब्रह्मभावनाब्रह्मैवेदंसर्वमितिभावनाया अभावोयावदनुवर्तते अतएवाज्ञानकलनाऽज्ञानमयोबंधश्चयावदनुवर्तते अतश्चजगज्जालेआस्थायावत्तावदेवचित्तादिकल्पना चित्तंजीवोविद्येत्यादिभेदकल्पनाप्रवर्तते ॥ ३ ॥ वस्तुतस्तुनकाचिद्भेदकल्पनेत्याह ॥ नास्तीति ॥ चित्तंशुद्धसत्वप्रधानमंतःकरणं मनस्तुरजोगुणप्रचुरं संकल्पविकल्पात्मकमंतःकरणम् ॥ ४ ॥ देहइति ॥ पूर्वोक्तस्यैवप्रपंचः दृश्येपरकीयदेहादौआत्मताचेतनत्वबुद्धिः । यद्वा । दृश्येप्रतिमादौआत्मतापर

मात्मभावोदेवताबुद्धिरित्यर्थः ॥ ५ ॥ चित्तादिकल्पनायानिवृत्त्युपायमाह ॥ अंतरिति ॥ अंतर्मुखतयासर्वात्मकोऽहमिति परिपूर्णात्म भावनया त्रिजगत्तृणंतृणवदुपेक्षणीयं दृश्यं चिद्वह्नौसर्वप्रपंचाधिष्ठानभूतेस्वात्मचैतन्येजुह्वतः दृग्व्यतिरेकेणदृश्यस्याभावात् विलापयतो मुनेश्चित्तादिविभ्रमानिवर्तंते ॥ ६ ॥ कैषाअंतर्मुखतेत्याकांक्षायांचित्स्वरूपमाह ॥ चिदात्मेति ॥ पारावारविवर्जितःपूर्वोत्तरावधिरहितो निरंशश्चिदात्मास्मीतिनिजंस्फारंव्याप्तंरूपंस्मरअनुसंधत्स्व । इयमेवांतर्मुखतेतिभावः । अस्मृत्यानिजस्वरूपविस्मरणेनसंमितः परिच्छिन्नो माभव । असीतिपाठे यतश्चिदात्मासिअतोनिजंस्फारंरूपंस्मरेतियोजना ॥ ७ ॥ यइति ॥ यःअतितरांशत्रुःसत्वरंमारणोद्यतश्च तमेवतथा

अंतर्मुखतयासर्वंचिद्वह्नौत्रिजगत्तृणम् ॥ जुह्वतोंऽतर्निवर्तंतेमुनेश्चित्तादिविभ्रमाः ॥ ६ ॥ चिदात्मास्मिनिरंशोऽस्मिपारावारविवर्जितः ॥ रूपंस्मरनिजंस्फारंमाऽस्मृत्यासंमितोभव ॥ ७ ॥ यएवातितरांशत्रुःसत्वरंमारणोद्यतः ॥ तमेवाकृत्रिमंमित्रंयःपश्यतिसपश्यति ॥ ८ ॥ समूलकाषंकषतिनदीतटइवद्रुमम् ॥ यःसौहृदंमत्सरंचसहर्षामर्षदोषहा ॥ ९ ॥ अध्यात्मशास्त्रमंत्रेणतृष्णाविषविषूचिका ॥ क्षीयतेभावितेनांतःशरदामिहिकायथा ॥ १० ॥ यत्रोपादेयवाक्यत्वंभावितंस्वेनचेतसा ॥ तद्वचोंऽतर्विशत्युच्चैस्तप्तक्षेत्रेयथापयः ॥ ११ ॥

विधमेवशत्रुंयोरागद्वेषरहिततयाअकृत्रिमंमित्रंपश्यति सशत्रुमित्रयोःसमदर्शीपुमान्पश्यति । जानात्यात्मतत्त्वमित्यर्थः ॥ ८ ॥ समूलेति ॥ यःसौहृदंमत्सरंचरागंद्वेषंच समूलकाषंकषतिसवासनंपरित्यजतिसपुमान्हर्षामर्षादिदोषान्हंति ॥ ९ ॥ अध्यात्मेति ॥ अंतःअंतःकरणेभाविते नचिरंवासितेन अध्यात्मशास्त्रमंत्रेणतृष्णाविषविषूचिकातृष्णारूपाविषजन्याविषूचिकाक्षीयते शरदामिहिकायथा शरत्कालेन हिममिव ॥ १० ॥ अध्यात्मशास्त्रमध्यात्मविन्मुखादेवश्रुतंचित्तेलगतिनान्यथेत्याह ॥ यत्रेति ॥ यत्रयस्मिन्पुरुषेउपादेयवाक्यत्वं आप्तत्वेनस्वचे

तसा भावितंनिश्चितंतद्वचस्तस्यैवाप्तस्यवाक्यं उच्चैःप्रकर्षेणअंतः अंतःकरणे विशतिप्रविशति । तप्तक्षेत्रेपयोजलमिव ॥ ११ ॥ गुरुमुखे नस्वानुभवेनचविचाराभावेसंशयएवपर्यवस्यतीत्याह ॥ अपर्यालोचितेति ॥ अपर्यालोचितात्मार्थाः आत्मैवार्थःप्रतिपाद्योयस्मिन्शास्त्रेतदात्मार्थमध्यात्मशास्त्रं तदपर्यालोचितमविचारितंयैस्ते अपरामृष्टसंविदःअविचारितस्वरूपसंविदश्चमूढबुद्धयःसर्वेतृणवत्स्पंदंते । इतस्ततश्चलंति संदिहंतइत्यर्थः ॥ १२ ॥ ननुसर्वेषामपिजीवानांचिद्रूपत्वात्कथंकेषांचित्संदेहइत्यत्राह ॥ सर्वेषामिति ॥ सत्यंसर्वेषामेवैतेषां जीवानामव्ययाचिदेषास्थितैवस्वरूपत्वेनावस्थितैव । किंत्वस्याःस्वरूपत्वेनावस्थितायाश्चितःअबोधवशात् अनाद्यविद्यामहिम्नाअननु

अपर्यालोचितात्मार्थाअपरामृष्टसंविदः ॥ स्पंदंतेचेतनोन्मुक्तास्तृणवन्मूढबुद्धयः ॥ १२ ॥ सर्वेषामेवचैतेषांस्थितैवैषाचिदव्यया ॥ किंत्वबोधवशादस्याःपरांकृपणतांगताः ॥ १३ ॥ तर्जनंगर्जनंमूढाद्धनुर्दंडगुणादिव ॥ श्रूयतेमरणायैवचिद्बोधपरिवर्जितम् ॥ १४ ॥ तस्मिन्यदधमेदत्तंतत्त्यक्तंसांद्रकर्दमे ॥ तेनसार्धंकथायासाकौलेयाह्वानमंबरे ॥ १५ ॥ अज्ञत्वमापदांनिष्ठाकाहिनापदजानतः ॥ इयंसंसारसरणिर्वहत्यज्ञप्रसादतः ॥ १६ ॥

संधानवशात् परांनिरवधिकांकृपणतांक्षुद्रतांगताः ॥ १३ ॥ तामेवकृपणतांद्रूषयन्नाह ॥ तर्जनमिति ॥ धनुर्दंडगुणादिव धनुष्यारोपिताया:मौर्व्याइवमूढादज्ञाज्जनात् चिद्बोधपरिवर्जितं स्वरूपचितोऽवबोधरहितंतर्जनंभर्त्सनंगर्जनंकंठकोलाहलश्चमरणायैवभूतद्रोहायैवश्रूयते । धनुर्गुणवन्मूढोहिस्वनन्परेषांनाशायैवकल्पते । अतोनतस्मात्किंचिदपिश्रोतव्यमितिभावः ॥ १४ ॥ समूढोदानसन्मानादिकंकिंचिदपि नार्हतीत्याह । तस्मिन्निति ॥ तस्मिन्नात्मावबोधविधुरेअधमेदत्तंधनंकर्दमेक्षारे उप्तमिवतेनसहसंकथापिअंबरेनिरावरणप्रदेशे ॥ १५ ॥ कौलेयकबाधायाअपरिहार्यत्वंदर्शयति । तस्मात्सर्वापदांसंसारसरणेश्चाज्ञानमेवमूलमित्याह ॥ अज्ञत्वमिति ॥ अज्ञत्वंअज्ञानं आपदांज

रामरणादीनांनिष्ठानिष्पत्तिहेतुःकुतः। हियस्मात्कारणात् अजानतःपुरुषस्यकाआपन्नस्यात् सर्वाप्यापत्स्यादेव। इयंचसंसारसरणिरज्ञानामे वप्रसादतोवहति प्रवर्तते। संसारप्रवृत्तेरज्ञप्रवृत्तिमूलत्वात् ॥ १६ ॥ यदिति ॥ ज्ञधियःज्ञानिनोबुद्धेर्यदेवजगद्गोष्पदाकारंगोष्पदमिवपेलवम ल्पमवभासतेतदेवजगत्अमहात्मनोऽज्ञस्यअगाधमपारपर्यंतंचप्रतीयते। दुस्तरंभवतीत्यर्थः ॥१७॥ इत्थमात्मज्ञादेवगुरोःश्रोतव्यमित्युक्त्वात त्त्वंबोधयितुमाह संवेद्येनेति ॥ संवेद्येनविषयेणापरामृष्टंअसंश्लिष्टंशांतंसर्वात्मकंचयद्वस्तुसच्चिदानंदमयंकलनोज्झितंनिष्कलंतदेववस्तुतो ऽस्ति ॥१८॥ समुदेतीति ॥ तस्मात्परब्रह्मणःसकाशात्कलनरूपिणीबंधनस्वभावाकलाअविद्या स्वतएवनतुपरेच्छयावासमुदेति साचकलना

यदेवगोष्पदाकारंज्ञधियःपेलवंजगत् ॥ तदेवापारपर्यंतमगाधममहात्मनः ॥ १७ ॥ संवेद्येना परामृष्टंशांतंसर्वात्मकंचयत् ॥ तत्सच्चिदानंदमयमस्तीहकलनोज्झितम् ॥ १८ ॥ समुदेति स्वतस्तस्मात्कलाकलनरूपिणी ॥ सूक्ष्मामध्यातथास्थूलाचेतिसाकल्प्यतेत्रिधा ॥ १९ ॥ स त्वंरजस्तमइतिचैषैवप्रकृतिःस्मृता ॥ एषैवसंसृतिर्जंतोरस्याःपारंपरंपदम् ॥ २० ॥ अत्रयेतुत्रयः प्रोक्तागुणास्तेऽपित्रिधास्मृताः ॥ नवधैवविभक्तेयमविद्यागुणरूपिणी ॥ २१ ॥ ऋषयोमुनयः सिद्धानागाविद्याधराःसुराः ॥ इतिभागमविद्यायाःसात्विकंविद्धिराघव ॥ २२ ॥

सूक्ष्मादिभेदात्रिधाकल्प्यते ॥ १९॥ सत्वमिति ॥ एषासूक्ष्मादिभेदभिन्नाकलैवसत्वादिगुणत्रयात्मिकाप्रकृतिःस्मृता एषैवगुणत्रयात्मकप्रकृ तिरूपाकलैवजंतोःसंसृतिर्बंधहेतुः अस्याएवपारंनिवृत्तिः परंपदंकैवल्यम् ॥ २० ॥ अत्रेति ॥ अस्यांप्रकृतौगुणाःतेप्रत्येकंत्रिधास्मृताः स त्वादीनांगुणांतरैःसहव्यामिश्रितत्वात्। तथाहि सत्वंशुद्धंरजोमिश्रंतमोमिश्रंचेतित्रिविधं इत्थंरजस्तमसीचेति। एवंगुणत्रयात्मिकेयमवि द्याकलाशब्दवाच्यानवधाविभक्ता ॥ २१ ॥ ऋषयइति ॥ अत्रमंत्रद्रष्टारोवसिष्ठविश्वामित्रादयऋषयः। मौननिष्ठामुनयः। ऋष्यादयोमि

लित्वाअविद्यायाःसात्विकोभागइत्यर्थः ॥ २२ ॥ तत्रावांतरविभागमाह । सात्विकस्येति ॥ सात्विकस्यास्यभागस्यमध्येनागावासुकित क्षकप्रमुखाःफणींद्राः विद्याधराःखड्गलांगुलिकांजनादिविद्याधारिणोजीमूतकेतुप्रभृतयश्च तमःतमोमिश्रसत्वांशाः मोहभूयिष्ठत्वात् । मुनयः सिद्धाश्चरजःरजोमिश्रःसत्वांशः तपोनिष्ठतयाप्रवृत्तिभूयिष्ठत्वात् । हरादयोदेवाःसत्वंसात्विकभागः सत्वांशज्ञानभूयिष्ठत्वात् ॥ २३ ॥ भा गइति ॥ अविद्यायामध्येअविद्याप्रभेदानांनवानांमध्येएषभागः सात्विकभागस्यसत्वांशोविद्यात्वंविद्याशब्दवाच्यत्वमागतः यस्मात्कार णात् शुद्धंसत्वं शुद्धसत्वरूपोविद्याभागएवविद्येतिकथ्यते ॥ २४ ॥ उक्तन्यायमन्यत्रातिदिशति ॥ राजसीति ॥ एवमुक्तप्रकारेणराजसीता

सात्विकस्यास्यभागस्यनागाविद्याधरास्तमः ॥ रजस्तुमुनयःसिद्धाःसत्वंदेवाहरादयः ॥ २३ ॥
भागएषत्वविद्यायाएवंविद्यात्वमागतः ॥ शुद्धंसत्वंह्यविद्यायाभागोऽविद्येतिकथ्यते ॥ २४ ॥ रा
जसीतामसीचेतिसृष्टिरेवंत्रिधात्रिधा ॥ मौर्ख्यपिंडःस्थावरादिःप्राप्तस्तामससीमताम् ॥ २५ ॥
श्रीरामउवाच ॥ मौर्ख्यमत्यंतघनतामागतंसमुपस्थितम् ॥ स्थावरादितनुंप्राप्तंकीदृशंभवति
प्रभो ॥ २६ ॥ वसिष्ठउवाच ॥ अमनस्त्वमसंप्राप्तंमनस्त्वादपिविच्युतम् ॥ तटस्थंरूपमाश्रित्य
स्थितैषास्थावरेषुचित् ॥ २७ ॥

मसीचसृष्टिस्त्रिविधोक्ता । तथाहि । मनुष्याणामपिसर्वेषांराजसत्वेज्ञानप्रधानाब्राह्मणाःसत्वांशः युद्धादिप्रवृत्तिप्रधानाःक्षत्रियादयोरजोंऽशो मोहबहुलाःसच्छूद्रादयस्तमोंऽशः । एवंतामसेष्वतिर्यक्ष्वपिप्रकाशप्रवृत्तिमोहबाहुल्याद्गवादिषुत्रैविध्यंवेदितव्यम् । मौर्ख्यपिंडःपिंडीभूताज्ञानरू पःस्थावरादिः सर्गविशेषः । तामससीमतांतामससृष्टेःपरमावधित्वंप्राप्तः ॥२५॥ मौर्ख्यमिति ॥ अत्यंतघनतामतिसांद्रतामागतंमौर्ख्यमज्ञानं स्थावरादितनुंप्राप्तंसत्कीदृशंसमुपस्थितंभवति केनप्रकारेणावस्थितंभवति ॥ २६ ॥ अमनस्त्वमिति ॥ अमनस्त्वंपाषाणादिवन्निर्मनस्क

तांअसंप्राप्तं हिताहितप्राप्तिपरिहारार्थायाःप्रवृत्तेरसंभवात्। मनस्त्वादपिमनोव्यापारादपिविच्युतंच्युतंस्मरणाद्यभावात्। इत्थंतटस्थंमनस्त्वा मनस्त्वमध्यवर्तियन्मौरूर्यंतादृशंरूपमाश्रित्यचिदेषास्थावरेषुस्थिता ॥ २७ ॥ २८ ॥ सुप्तेति ॥ यत्रस्थावरेषुचिच्चैतन्यंसुप्तपुर्यष्टका अहंकारकलायुक्तंबुद्धिबीजसमन्वितं तत्पुर्यष्टकमित्युक्तम्। शैवागमेतु स्यात्पुर्यष्टकमंतःकरणंधीकर्मकरणादीत्यतउक्तं तादृशंपुर्यष्टकमिंद्रियसमष्टिरूपं सुप्तंनिलीनंयस्यांसातादृशीसतीसुखदायिनीसुषुप्ताविवसुखाविर्भावहेतुःस्थिता । तत्रस्थावरेषुमूकांधजडेष्विवचित्सत्तामात्रेण तिष्ठतिनपुनःप्रकटतयाप्रकाशते ॥ २९ ॥ सत्तेति ॥ यत्रस्थावरेषुसत्ताचित्सत्ताद्वैततयासत्तयासहाभिन्नतया सत्तामात्ररूपतयेतियावत्।

श्रीरामउवाच ॥ मनस्त्वाद्विच्युतायत्रसंस्थितास्थावरेषुचित् ॥ तत्राद्दूरस्थितांमुक्तिंमन्येवेदविदांवर ॥ २८ ॥ वसिष्ठउवाच ॥ सुप्तपुर्यष्टकायत्रचित्स्थितासुखदायिनी ॥ मूकांधजडवत्तत्र सत्तामात्रेणतिष्ठति ॥ २९ ॥ श्रीरामउवाच ॥ सत्ताद्वैततयायत्रसंस्थितास्थावरेषुचित् ॥ तत्रादूरस्थितांमुक्तिंमन्येवेदविदांवर ॥ ३० ॥ वसिष्ठउवाच ॥ बुद्धिपूर्वंविचार्येदंयथावस्त्ववलोकनात् ॥ सत्तासामान्यबोधोयःसमोक्षःस्यादनंतकः ॥ ३१ ॥ परिज्ञायपरित्यागोवासनानांयउत्तमः ॥ सत्तासामान्यरूपत्वात्तत्कैवल्यपदंविदुः ॥ ३२ ॥

संस्थिता संकल्पविकल्पाद्यभावात्। तत्रस्थावरेषुमुक्तिमदूरस्थितांसंनिहितांमन्ये समाध्यवस्थासादृश्यादितिभावः ॥ ३० ॥ बुद्धीति ॥ इदं जगद्विचार्य श्रुतियुक्तिविद्वदनुभवैःपर्यालोच्य यथावस्त्ववलोकनात् परमार्थनिश्चयात् बुद्धिपूर्वंयःसत्तासामान्यबोधः सत्तामात्रपर्यवसितोबोधः सएवानंतःपुनरावृत्तिरहितोमोक्षःस्यात् अन्यथामहापातकैरेवकायिकैःस्थावरत्वसिद्धेर्मोक्षस्यसुलभत्वात् मोक्षशास्त्राणांवैयर्थ्यं स्यादितिभावः ॥ ३१ ॥ एतदेवाह ॥ परीति ॥ परिज्ञायविचार्य हेयत्वाद्वासनानांसंसारहेतूनांयःउत्तमःपरित्यागःसंसारप्राप्तिरहितः प

रित्यागः कुतः सत्तासामान्यरूपत्वात् चैतन्यस्य सर्वोपाधिविनिर्मुक्तत्वात् तदेव कैवल्यरूपं विद्धुः ॥ ३२ ॥ विचार्येति ॥ पूर्वोक्तस्यैव प्रपंचः । शास्त्राण्यध्यात्मशास्त्राणि आलोक्य गुरुमुखादवधार्य आर्यैः सह ब्रह्मवादिभिः सह विचार्य युक्तिभिः अनुचिंत्य अध्यात्मभावनात्स्वचित्तेऽनुसंधानात् यत्सत्तासामान्यनिष्ठत्वं तदेव परं ब्रह्म विद्धुः ॥ ३३ ॥ अंतरिति ॥ यत्र यस्यां स्थावरदशायां वासनाबीजांकुर इव अंतरंतःकरणे सुप्ता निलीना मंदा स्थिता तत्सुषुप्तत्वं गाढनिद्रासादृश्यात् । तत्पुनर्जन्मप्रदं विद्धि वासनाया निक्षिप्तधनवन्निगूढमवस्थानात् ॥ ३४ ॥ अंतरिति ॥ अंतः अभ्यंतरे संलीनमननं निलीनमनोव्यापारं परितः सुप्तवासनं च यत् सुषुप्तं सुषुप्तसदृशी दशा तज्जडधर्मत्वात् जडेष्वेव वर्तमानत्वात् जन्मदुःखश

विचार्यार्यैः सहालोक्य शास्त्राण्यध्यात्मभावनात् ॥ सत्तासामान्यनिष्ठत्वं यत्तद्ब्रह्म परं विद्धुः ॥ ३३ ॥
अंतः सुप्ता स्थिता मंदा यत्र बीज इवांकुरः ॥ वासना तत्सुषुप्तत्वं विद्धि जन्मप्रदं पुनः ॥ ३४ ॥ अंतः संलीनमननं परितः सुप्तवासनम् ॥ सुषुप्तं जडधर्मत्वाज्जन्मदुःखशतप्रदम् ॥ ३५ ॥ स्थावरादय एते हि समस्ता जडधर्मिणः ॥ सुषुप्तपदमारूढा जन्मयोग्याः पुनः पुनः ॥ ३६ ॥ यथा बीजेषु पुष्पाणि मृदो राशौ घटा यथा ॥ तथांतः संस्थिताः साधो स्थावरेषु स्ववासनाः ॥ ३७ ॥ यत्रास्ति वासनाबीजं तत्सुषुप्तं न सिद्धये ॥ निर्बीजा वासना यत्र तत्तुर्यं सिद्धिदं स्मृतम् ॥ ३८ ॥

तप्रदं जन्मनां दुःखशतानां च हेतुः ॥ ३५ ॥ स्थावरादय इति ॥ अंतःकरणादेते स्थावरादयो जडधर्मिणः समस्ताः सुषुप्तपदमारूढा इति कृत्वा पुनः पुनः जन्मयोग्याः । सुषुप्ता हि पुनः पुनः संसरंति ॥ ३६ ॥ यथेति ॥ बीजेषु चूतादिबीजेषु यथा अंतः पुष्पाणि सूक्ष्मरूपतया संस्थितानि । पुष्पग्रहणमुपलक्षणं फलादीनाम् । यथा च मृदो राशौ मृत्तिकासमूहे घटाः संस्थिताः । घटग्रहणं च शरावोदंचनादीनामुपलक्षणम् । तथा स्थावरेषु स्ववासनाः स्वीयाः पुण्यापुण्यसंस्काररूपा जन्मांतरहेतव अंतःस्थिताः ॥ ३७ ॥ यत्रेति ॥ यत्र स्थावरदशायां वासना च तद्बीजमज्ञानं च संसारका

रणमस्ति तत्सुषुप्तत्वमेवनतुर्यावस्था । तच्चसिद्धयेकैवल्यायनभवति । यत्रयस्मिन्जीवन्मुक्तपदे निर्बीजानिर्गतंबीजमज्ञानरूपंयस्याः सा शुद्धवासनाप्रवर्तते तत्तुर्यंपदंसिद्धिदंस्मृतम् ॥ ३८ ॥ वासनायाइति ॥ वह्न्यादीनामिववासनायाःशेषःस्वल्पोऽपिबाधतइत्यर्थः ॥ ३९ ॥ निर्दग्धेति ॥ निर्दग्धवासनाबीजः निर्दग्धावासनातद्बीजमज्ञानंचयेनताहशः सत्तासामान्यनिष्ठत्वात् तद्रूपवान्पुरुषः सत्यसतिवादेहेभूयो दुःखभाङ्भवेत् ॥ ४० ॥ चिच्छक्तिरिति ॥ याखलुचिच्छक्तिः ब्रह्मचैतन्यरूपायाश्रितः शक्तिः वासनाबीजरूपिणीवासनारूपातद्बीजा ज्ञानरूपाचस्वापधर्मिणीनिद्राहेतुश्चविद्यते । यत् अस्याश्चिच्छक्तेर्हेतोश्रितः स्वरूपस्यतत्प्रसिद्धमदर्शनं अप्रतीतिः साआवरणशक्तिरविद्येत्यु

वासनायास्तथावह्नेर्ऋणव्याधिद्विषामपि ॥ स्नेहवैरिविषाणांचशेषःस्वल्पोऽपिबाधते ॥ ३९ ॥
निर्दग्धवासनाबीजःसत्तासामान्यरूपवान् ॥ सदेहोऽपिविदेहोवानभूयोदुःखभाग्भवेत् ॥ ४० ॥
चिच्छक्तिर्वासनाबीजरूपिणीसर्वदेहिनाम् ॥ अस्यास्त्वदर्शनंयत्तदविद्येत्युच्यतेबुधैः ॥ ४१ ॥
अविद्यायास्तुभागेनप्रधानेनेतरंदहेत ॥ तावद्यावन्मिथोघर्षाद्द्वयंशाम्येच्छिवंभवेत् ॥ ४२ ॥
एतावदेवाविद्यात्वंनेदंब्रह्मेतिनिश्चयः ॥ एषएवक्षयोऽस्यायद्ब्रह्मेदमितिनिश्चयः ॥ ४३ ॥

च्यते । यत्तदविद्येतिपाठे तद्दर्शनकारणमविद्येत्युद्देश्यगतलिंगोपादानान्नपुंसकत्वम् ॥ ४१ ॥ अविद्यायाइति ॥ अविद्यायाउक्तलक्षणायाः गुणत्रयात्मकत्वाद्गुणानांचप्रत्येकंत्रिविधत्वान्नवधाविभक्तायाः प्रधानभूतोयोभागः शुद्धसत्वरूपः तेनविद्याशब्दवाच्येनभागेनइतरम विद्याभागंतावद्दहेत् । यावद्भागद्वयंविद्याविद्यारूपंमिथोघर्षात् परस्पराभिभवाद्द्वंदंसम्यक् शाम्येत् विद्ययाअविद्यानिवर्त्यमानाविद्यामपि निवर्तयति अंत्यशब्देनोपांत्यशब्दइवेतिभावः ॥ ४२ ॥ एतावदिति ॥ इदंजगद्ब्रह्मन ब्रह्मात्मकंनभवति किंतर्हिवियदादिरूपमेवेतियो निश्चयः एतावदेवाविद्यात्वंअविद्यापारः इदंब्रह्मेतियोनिश्चयः एषएवतस्याअविद्यायाः क्षयइतिसंक्षेपः ॥ ४३ ॥

प्रकृतमनुसरति ॥ निश्चयइति ॥ हरादीनांदेवतानांनारदादीनामृषीणांचहृदिनिर्मलोयोनिश्चयोवर्तते सनिश्चयस्तेभवतु त्वमपितमेवजीवन्मु
क्तमार्गमवलंबस्वेत्यर्थः ॥ ४४ ॥ येनेति ॥ एतेहरादयोयेननिश्चयेनविशोकाजीवन्मुक्ताःसंस्थिताःतंनिश्चयंतत्त्वतोमेब्रूहि ॥ ४५ ॥ यदि
ति ॥ प्रतीयमानंदृश्यमखिलंब्रह्मैवेतिहरादीनांनिश्चयइत्यर्थः ॥ ४६ ॥ एतदेवप्रपंचयति । ब्रह्मेति ॥ प्रकाशिकाचित् प्रकाश्यंचचेतनाचेत
नात्मकंब्रह्मेत्यर्थः । भूतपरंपरावियदादिमहाभूतसमूहः । अहमितिमच्छत्रुरितिच हरादीनांनिश्चयःस्वरूपाभिनयः ॥ ४७ ॥ नन्वेकमेवेदं

निश्चयोयोहरादीनांहृदितिष्ठतिनिर्मलः ॥ ऋषीणांनारदादीनांसतेभवतुराघव ॥ ४४ ॥ श्रीरा
मउवाच ॥ येनैतेभगवन्धीरानिश्चयेनमहाधियः ॥ विशोकाःसंस्थितास्तन्मेब्रह्मन्प्रब्रूहितत्त्व
तः ॥ ४५ ॥ श्रीवसिष्ठउवाच ॥ यदिदंकिंचिदाभोगिजगज्जालंप्रदृश्यते ॥ तत्सर्वममलंब्रह्मबृं
हदेतद्व्यवस्थितम् ॥ ४६ ॥ ब्रह्मचिद्ब्रह्मभुवनंब्रह्मभूतपरंपरा ॥ ब्रह्माहंब्रह्ममच्छत्रुर्ब्रह्ममन्मित्रबां
धवाः ॥ ४७ ॥ अज्ञस्यदुःखौघमयंज्ञस्यानंदमयंजगत् ॥ अंधंभुवनमंधस्यप्रकाशंतुसुचक्षुषः
॥ ४८ ॥ सर्वमेवहिब्रह्मेतिभाविते ब्रह्मवैपुमान् ॥ पीतेऽमृतेऽमृतमयःकोनामनभवेत्किल ॥ ४९ ॥
आभासमात्रममलंसर्वभूतावबोधकम् ॥ सर्वत्रावस्थितंशांतंचिद्ब्रह्मेत्यनुभूयते ॥ ५० ॥ असं
स्तुताध्वगालोकेमनस्यन्यत्रसंस्थिते ॥ याप्रतीतिरनागस्कातच्चिद्ब्रह्मास्मिसर्वगः ॥ ५१ ॥

जगत्तत्कथंकस्यचिद्दुःखायकस्यचित्सुखायचस्यादित्याशंक्यदृष्टांतेनोपपादयन्नाह । अज्ञस्येति ॥ ज्ञानाज्ञानकृतोऽयंविशेषइत्यर्थः ॥ ४८॥
ज्ञानप्रकारमेवसदृष्टांतमाह ॥ सर्वमिति ॥ ब्रह्मैवेतिभाविते निश्चिते ॥ ४९ ॥ आभासमात्रमिति ॥ आभासमात्रंविषयासंस्पृष्टज्ञानरूपंय
द्रस्तुतच्चिद्ब्रह्मेतिचिद्रूपंपरंब्रह्मेत्यनुभूयते । चिद्ग्रहणंशब्दब्रह्मणोनिवृत्त्यर्थम् ॥ ५० ॥ एतदेवोदाहरणेनस्पष्टयन्नाह ॥ असंस्तुतेति ॥ असं

स्तुतस्यपूर्वमपरिचितस्याध्वगस्यालोकेदर्शनेसति मनसिचान्यत्रवस्त्वंतरेस्वाभिमतेसंस्थितेसति अनागस्का निखिलविकल्पनिर्मुक्तायाप्र तीतिरस्ति तत्सर्वगंचिद्ब्रह्मास्मि । अत्रासंस्तुतेत्यनेनपूर्वानुभवजनितसंस्कारमहिम्नाविकल्पानांनोदयइत्युक्तम् । अध्वगेत्यनेनकालविलंबा भावात् विकल्पोदयस्यावकाशोनास्तीतिदर्शितम् । मनसोऽन्यत्रावस्थानकथनात्तात्कालिकविकल्पकल्पनापिनसंभवतीतिसूचितमित्य नुसंधेयम् । नचप्रतीतिरेवनोदेतीतिवक्तुंबाह्येंद्रियप्रनाडिकयाबहिर्मुखायाःसंविदःप्रकाशकत्वाव्यभिचारात् । अन्यथानिर्विकल्पकाभावे तन्मू लस्यसविकल्पस्याप्यनुदयप्रसंगात् कालांतरेकिमत्रकश्चिदागतइतिपृष्टस्यतद्विषयस्मरणसंभवाच्च । तस्मान्निर्विकल्पतयाविषयदोषनिर्मुक्ता

सर्वसंकल्पफलदंसर्वतेजःप्रकाशकम् ॥ सर्वोपादेयसीमांतंचिदात्मानमुपास्महे ॥ ५२ ॥ प्रशां तसर्वसंकल्पंविगताखिलकौतुकम् ॥ विगताशेषसंरंभंचिदात्मानमुपास्महे ॥ ५३ ॥ इतिनिश्च यवंतस्तेमहांतोविगतैनसः ॥ सत्याःसत्येपदेशांतेसमेसुखमवस्थिताः ॥ ५४ ॥ इतिपूर्णधियो धीराःसमनीरागचेतसः ॥ ननंदंतिननिंदंतिजीवितंमरणंतथा ॥ ५५ ॥ श्रीरामउवाच ॥ सम्य ग्ज्ञानविलासेनवासनाविलयोदये ॥ जीवन्मुक्तपदेब्रह्मन्नूनंविश्रांतवानहम् ॥ ५६ ॥

निर्मलाप्रतीतिरस्तीत्यभ्युपगंतव्यम् ॥ ५१ ॥ सर्वेति ॥ सर्वेषांसंकल्पानांफलदंजगत्स्वामित्वात्तादृशंचिदात्मानमुपास्महे ॥ ५२ ॥ ५३ ॥ इतीति ॥ इतिनिश्चयवंतःपूर्वोक्तप्रकारनिश्चययुक्ताः अतएवविगतैनसःनिष्पापाः सत्याःसतिसद्रूपेब्रह्मणिसाधवः तेनारदादयोमहांतः समे एकरूपेशांतेनिर्विकारेसत्येअबाध्यस्वरूपेपरेब्रह्मणिसुखंयथातथाअवस्थिताः ॥ सत्यासत्यइतिपाठेदृग्रूपत्वात्सत्ये दृश्यरूपत्वात्असत्यइति व्याख्येयम् ॥ ५४ ॥ इतीति ॥ इतिअनेनप्रकारेणपूर्णधियःपरिपूर्णबुद्धयःब्रह्मनिष्ठत्वात् । अतएवसमंनीरागंचचेतोयेषांतेधीराजीवितंन नंदंति आत्मारामत्वात ॥ ५५ ॥ सम्यगिति ॥ सम्यग्ज्ञानस्यविलासेनमहिम्नाप्राणनिरोधेनवा कथंकेनप्रकारेणवासनाविलयेसतिजीव

न्मुक्तौविश्रम्यते ॥ ५६ ॥ ५७ ॥ संसारेति ॥ संसारस्योत्तरणेयायुक्तिःउपायःसएवयोगः सचआत्मज्ञानंप्राणनिरोधनमितिद्विविधः ॥ ५८ ॥ प्रकाराविति ॥ प्रकारद्वयसाधारणोऽपियोगशब्दःप्राणनिरोधेभृशंरूढइत्यर्थः ॥ ५९ ॥ ६० ॥ तदितिअर्धवाक्यम् ॥ तत्संसारोत्तरणसाधनंज्ञानंभवतेपूर्वमेवप्रोक्तम् । अतःपरंयोगक्रमंप्राणनिरोधस्योपायभावंशृणु ॥ ६१ ॥ ६२ ॥ ६३ ॥ मेरोरिति ॥ पद्मराग

प्राणस्पंदनिरोधेनवासनाविलयोदये ॥ जीवन्मुक्तपदेब्रह्मन्वदाविश्रम्यतेकथम् ॥ ५७ ॥ वसिष्ठउवाच ॥ संसारोत्तरणेयुक्तिर्योगशब्देनकथ्यते ॥ आत्मज्ञानप्रकारोऽस्यप्राणानांसंयमस्तथा ॥ ५८ ॥ प्रकारौद्वावपिप्रोक्तौयोगशब्देनयद्यपि ॥ तथापिरूढमायातःप्राणयुक्तावसौभृशम् ॥ ५९ ॥ असाध्यःकस्यचिद्योगःकस्यचिज्ज्ञाननिश्चयः ॥ प्रकारौद्वौततोदेवोजगादपरमःशिवः ॥ ६० ॥ तत्प्रोक्तंभवतेज्ञानंयोगक्रममथशृणु ॥ अत्रतेकथयिष्यामिवृत्तांतंपरमाद्भुतम् ॥ ६१ ॥ अहंकदाचिदास्थानेस्वर्गेऽतिष्ठंशतक्रतोः ॥ श्रुतवान्नारदादिभ्यःकथास्ताश्चिरजीविनाम् ॥ ६२ ॥ कथाप्रसंगेकस्मिंश्चिदथतत्राभ्युवाचह ॥ शातातपोनाममुनिःप्रस्तावेचिरजीविनाम् ॥ ६३ ॥ मेरोरीशानकोणस्थेपद्मरागमयोद्भिदि ॥ अस्तिकल्पतरुःश्रीमान्शृंगेसर्वमनोरमे ॥ ६४ ॥ तस्यकल्पतरोर्मूर्ध्निदक्षिणेस्कंधकोटरे ॥ कलधौतलताप्रोतेविद्यतेविमलाशयः ॥ ६५ ॥

मयोद्भिदिपद्मरागमणिमयाउद्भिदः तरुगुल्मादयोयस्मिंस्तस्मिन्मेरोःशृंगेकल्पतरुरस्तीतिसंबंधः । पद्मरागमयेदिवीतिपाठे । पद्मरागमये मेरोःशृंगेयाद्यौःस्वर्गस्तत्रकल्पतरुरस्तीतियोजना । एकविंशाअमीस्वर्गानिविष्टामेरुमूर्धनीतिस्वर्गाणांबाहुल्यश्रवणात् ॥ ६४ ॥ ६५ ॥

तस्मिन्निति ॥ तस्मिन्विहगालये भुशुंडोनाम भुवनेषुसर्वेष्वपिसुखंडयतेविहरतीतिभुशुंडइतिप्रसिद्धः ॥ ६६ ॥ ६७ ॥ ६८ ॥ ६९ ॥ ७० ॥
॥ ७१ ॥ तस्येति ॥ कच्छाःजलप्रायाः कोटरप्रदेशाः । कुंजाः लतादिभिःपिहितप्रदेशाः । लताःशाखाः पत्राणिपलाशानि पर्वाणिग्रंथयस्ते
ष्वालयान्विधाय तत्रसंलीनान्विहगान्दृष्टवान् । भुशुंडान्वेषणार्थमित्यर्थः ॥ ७२ ॥ निशानाथेतिचतुर्भिःश्लोकैर्वाक्यम् ॥ विरिंचिरथहंस

तस्मिन्निवसतिश्रीमान्भुशुंडोनामवायसः ॥ वीतरागोबृहत्कोशोब्रह्मेवनिजपंजरे ॥ ६६ ॥ स
यथाजगतांकोशेजीवतीहसुराश्चिरम् ॥ चिरंजीवीतथास्वर्गेनभूतोनभविष्यति ॥ ६७ ॥ सदी
र्घायुःसनीरोगःसश्रीमान्समहामतिः ॥ सविश्रांतमतिःशांतःसकांतःकालकोविदः ॥ ६८ ॥ इ
तितेनभुशुंडोऽसौभूयःपृष्टेनवर्णितः ॥ यथाचदेवदेवानांसभायांसत्यमुक्तवान् ॥ ६९ ॥ कथाव
सरसंशांतावथयातेसुरव्रजे ॥ भुशुंडंविहगंद्रष्टुमहंयातःकुतूहलात् ॥ ७० ॥ भुशुंडःसंस्थितोय
त्रमेरोःशृंगोत्तमोत्तमे ॥ कल्पद्रुमस्थमद्राक्षंशाखाचक्रमिवस्थितम् ॥ ७१ ॥ तस्यकच्छेषुकुंजेषु
लतापत्रेषुपर्वसु ॥ पुष्पेष्वालयसंलीनान्विहगान्दृष्टवानहम् ॥ ७२ ॥ निशानाथकलाखंडमृ
णालशकलैधितान् ॥ विरिंचिरथहंसानांपोतकान्सामगायिनः ॥ ७३ ॥

पोतकादीन्पक्षिणोयावत्पश्यामितावदेकत्रस्कंधकोटरेसभायांवायसाअपरिक्षुभिताकाराःस्थिताइत्यन्वयः । अपरिक्षुभितत्वंचगुरुसंनिधौ
चापलानौचित्यात्अंतर्मुखत्वाद्वेतिवेदितव्यम् । हंसादीनांसामगायनमंत्रोच्चारणशैवागमविज्ञानादिकंब्रह्मलोकादौमहर्षिभिःसामगाना
दौसहवासादितिद्रष्टव्यम् ॥ ७३ ॥

॥ ७ ॥

उद्गीर्णमंत्रनिचयान्स्वाहाकारनिभस्वनान् ॥ शुकान्काकान्कोकिलांश्चपक्षिणोऽन्याननेकशः ॥ ७४ ॥ गौरीकबरबर्हौघान्कौमारान्वरबर्हिणः ॥ स्कंदोपन्यस्तनिःशेषशैवविज्ञानकोविदान् ॥ ७५ ॥ तत्रप श्याम्यहंयावदेकांतेस्कंधकोटरे ॥ अपरिक्षुभिताकाराःसभायांवायसाःस्थिताः ॥ ७६ ॥ तेषांमध्ये स्थितःश्रीमान्भुशुंडःप्रोन्नताकृतिः ॥ परिपूर्णमनामौनीसमःसर्वांगसुंदरः ॥ ७७ ॥ प्राणस्पंदावधा नेननित्यमंतर्मुखःसुखी ॥ प्रसन्नगंभीरमनाःपेशलःस्निग्धवाक्सुधीः ॥ ७८ ॥ अथतस्याहमपतंदी प्यमानवपुःपुरः ॥ चुक्षोभवायसंस्थानंनीलोत्पलसरःक्षणम् ॥ ७९ ॥ अशंकितमपिप्राप्तंददर्शमाम नंतरम् ॥ भुशुंडस्तुवसिष्ठोऽयंप्राप्तइत्यवबुद्धवान् ॥ ८० ॥ पत्रपुंजात्समुत्तस्थौमेघशावइवाचलात् ॥ हेमुनेस्वागतमितिप्रोवाचमधुराक्षरम् ॥ मामुवाचमहातेजाःसौहार्दान्मधुराक्षरम् ॥ ८१ ॥ संकल्प मात्रजाताभ्यांकराभ्यांकुसुमांजलिम् ॥ मह्यमाशुतदैवादान्मेघोहैममिवोत्करम् ॥ ८२ ॥ इदमास नमित्युक्त्वानवंकल्पतरुच्छदम् ॥ उपानिन्येमहाबुद्धिःस्वयमेवखगाधिपः ॥ ८३ ॥ समंतात्खग वृंदेषुदर्शनोन्मुखदृष्टिषु ॥ तस्मिन्कल्पलतापुंजेह्युपविष्टोऽहमासने ॥ ८४ ॥ अर्घ्यपाद्यादिसं पाद्यभुशुंडस्तुष्टमानसः ॥ मामुवाचमहातेजाःसौहार्दमधुराक्षरम् ॥ ८५ ॥

॥ ७ ॥

ममुत्करमिवसौवर्णपुष्पप्रकरमिव ॥ ८२ ॥ ८३ ॥ ८४ ॥ ८५ ॥

॥ ८६ ॥ ८७ ॥ ८८ ॥ ज्ञातेति ॥ ज्ञातत्वदागमोऽपिअवगतत्वदागमननिमित्तोऽपि एवमनेनप्रकारेणत्वां यद्यस्मात्कारणात्पृच्छामि सेयंकारणभूताभवद्वाक्यामृतास्वादवांछैवमयिजृंभते । भवद्वाक्यश्रवणवांछयैवभवदागमननिमित्तंजानन्नपिपृच्छामीत्यर्थः ॥ ८९ ॥ ९०॥

भुशुंडउवाच ॥ अहोभगवतास्माकंप्रसादोदर्शितश्चिरात् ॥ दर्शनामृतमेघेनयत्सिक्ताःसद्रुमावयम् ॥ ८६ ॥ किमर्थमद्यागमनंक्लेशेनात्माकदर्थितः ॥ वचनश्रवणोत्कानामाज्ञांनोदातुमर्हसि ॥ ८७ ॥ त्वत्पाददर्शनादेवसर्वंज्ञातंमयामुने ॥ चिरजीवितचर्चाभिर्वयंवःस्मृतिमागताः ॥ ८८ ॥ ज्ञातत्वदागमोऽप्येवंयत्त्वांपृच्छाम्यहंमुने ॥ भवद्वाक्यामृतास्वादवांछैवमयिजृंभते ॥ ८९ ॥ इत्युक्तवानसौ पक्षीभुशुंडश्चिरजीवितः ॥ त्रिकालामलसंवेदीतत्रप्रोक्तमिदंमया ॥ ९० ॥ विहंगममहाराजसत्यमेतत्त्वयोच्यते ॥ द्रष्टुमभ्यागतोऽस्म्यद्यत्वामेवचिरजीविनम् ॥ ९१ ॥ तदेवंसंशयंछिंधिभगवन्ममतत्त्वतः ॥ कस्मिन्कुलेभवान्जातोज्ञातज्ञेयःकथंभवान् ॥ ९२ ॥ कियदायुश्चतेसाधोवृत्तंस्मरसिकिंचवा ॥ केनायंवानिवासस्तेनिर्दिष्टोदीर्घदर्शिना ॥ ९३ ॥ अथराममुशुंडोऽसौनप्रहृष्टोनवक्रधीः ॥ यत्पृच्छसिमुनेसर्वंश्रृणुतत्कथयाम्यहम् ॥ ९४ ॥ भवादृशामिमामाज्ञांकोविलंघयितुंक्षमः ॥ इत्युक्त्वाविहगाधीशःसर्वंकथितवानिदम् ॥ ९५॥ भुशुंडउवाच ॥ अस्त्यस्मिन्जगतिश्रेष्ठःसर्वनाकनिवासिनाम् ॥ देवदेवोहरोनामदेवदेवाभिवंदितः ॥ ९६ ॥

॥ ९१ ॥ ९२ ॥ ९३ ॥ ९४ ॥ ९५ ॥ ९६ ॥

शिरःखुराइति ॥ शिरसिखुराःशफानियेषांते खुरेषुकरायेषांतेखुरकराः खुराकाराःकरायेषांतेवा करदंताः करस्थादंतायेषांतेच मुखोदराः मुखान्युदरेषुयेषांतेच । ऋक्षोष्ट्राजेभवक्राश्च ऋक्षाःभल्लूकाःउष्ट्राःक्रमेलकाःअजाःछागाःइभागजाःतेषांवक्राणीववक्राणियेषांतेताहृशाश्च ।



शिरःखुराःखुरकराःकरदंतामुखोदराः ॥ ऋक्षोष्ट्राजेभवक्राश्चप्रमथायस्यलालकाः ॥ ९७ ॥ यथागणास्तथैवान्याःपरिवाराहिमातरः ॥ नृत्यंतिमातरस्तस्यपुरोभूतगणानताः ॥ ९८ ॥ वसंतिगिरिकूटेषुव्योम्निलोकांतरेषुच ॥ अवटेषुश्मशानेषुशरीरेषुचदेहिनाम् ॥ ९९ ॥ जयाचविजयाचैवजयंतीचापराजिता ॥ सिद्धारक्ताऽलंबुषाचउत्पलाचेतिदेवताः ॥ १०० ॥ सर्वासामेवमातॄणामष्टावेतास्तुनायिकाः ॥ आसामनुगतास्त्वन्यास्तासामनुगताःपराः ॥ १ ॥ तासांमध्येमहार्हाणांमातॄणांमुनिनायक ॥ अलंबुषेतिविख्यातामातामानदविद्यते ॥ २ ॥ वज्रास्थितुंडश्चंडाख्यइंद्रनीलाचलोपमः ॥ तस्यास्तुवाहनःकाकोवैष्णव्यागरुडोयथा ॥ ३ ॥ इत्यष्टैश्वर्ययुक्तास्तामातरोरौद्रचेष्टिताः ॥ कदाचिन्मिलिताव्योम्निसर्वाःकेनापिहेतुना ॥ ४ ॥ उत्सवंपरमंचक्रुःपरमार्थप्रकाशकम् ॥ जहसुर्ननृतुश्चैवपपुरुच्चैर्जगुस्तथा ॥ ५ ॥ इत्युत्सवेवर्तमानेतासांवाहास्तथोत्तमाः ॥ तथैवमत्ताजहसुर्ननृतुःपपुरासवम् ॥ ६ ॥



नानारूपाःप्रमथायस्यदेवस्यलालकाःक्रीडाहेतवः ॥ ९७ ॥ ९८ ॥ ९९ ॥ १०० ॥ १ ॥ २ ॥ वज्रेति ॥ वज्रास्थितुंडः वज्रंवज्रवत्कठिनंअस्थितुंडंअस्थिमयंमुखंयस्यसः चंडाख्यः चंडइत्याख्यायस्यताहृशःकाकः तस्याअलंबुषायावाहनमस्ति ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥

तत्रैकत्रासवोन्मत्ताःक्वचिन्ननृतुरंबरे ॥ रथहंस्यःस्थिताब्राह्म्यःकाकश्चालंबुषारथः ॥ ७ ॥ संजातरत
यस्तत्रसर्वाहंस्योमदाकुलाः ॥ रेमिरेसहकाकेनचंडकेनाथतास्तदा ॥ ८ ॥ अथतागर्भधारिण्योबभू
वुरतितोषिताः ॥ देव्यश्चकृतनृत्यास्ताःप्रशांतमदतांयुः ॥ ९ ॥ ततोदेव्योहरश्चैवपरिवारसमन्वि
ताः ॥ सर्वाःसंतुष्टमनसःस्वांस्वामुपययुर्दिशम् ॥ १० ॥ अंतर्वत्न्योबभूवुस्ताब्राह्म्योहंस्योमुनीश्वर ॥
वृत्तांतंकथयामासुर्ब्राह्म्यादेव्यायथास्थितम् ॥ ११ ॥ हेवत्स्यःसांप्रतंवत्सवत्योमेरथकर्मणि ॥ नसम
र्थाभवंत्योहिस्वैरंचरतसांप्रतम् ॥ १२ ॥ इतिगर्भालसाहंसीरुक्त्वादेवीदयापरा ॥ निर्विकल्पसमा
धानेब्राह्मीतस्थौयथासुखम् ॥ १३ ॥ हंस्योऽपिपक्वगर्भास्ताःसुवतेस्मयथाक्रमम् ॥ वैरंचेसरसि
स्फारेतनयानेकविंशतिः ॥ १४ ॥ एवंताभ्यस्तुहंसीभ्योजातावयमिमेमुने ॥ भ्रातरश्चंडतनयावा
यसाएकविंशतिः ॥ १५ ॥ मातृभिःसहहंसीभिर्ब्राह्मीभगवतीततः ॥ चिरमाराधितास्माभिःसमा
धिविरतासती ॥ १६ ॥ प्रसादपरयाकालेभगवत्याततःस्वयम् ॥ तथैवानुगृहीताःस्मोयथामुक्तावयं
स्थिताः ॥१७॥ संतृप्तमनसःशांतास्त्वेकांतेध्यानसंस्थितौ ॥ तिष्ठामइतिनिश्चित्यपितुःपार्श्वेवयंगताः
॥ १८ ॥ वंदित्वापितरंतत्रनत्वादेवीमलंबुषाम् ॥ तयादृष्टाःप्रसादेनप्रोक्तवंतस्तदावयम् ॥ १९ ॥
तातज्ञातमलंज्ञेयंब्राह्म्यादेव्याःप्रसादतः ॥ किंत्वेकांतस्थितेःस्थानमभिवांछामउत्तमम् ॥ २० ॥

॥ २१ ॥ २२ ॥ २३ ॥ रसायनेति ॥ रसायनमयी रागादिदोषनिवर्तकत्वात् । शांता तापत्रयापाकरणात् परमानंददायिनी ज्ञानोपदेशहेतुत्वात् । इत्थंभूतासासाधूनांसंगतिरूपाचंद्रिका कंनामनानंदयति ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥





तेनायंसर्वबाधानामगम्यःकल्पपादपः ॥ कथितंस्थानमस्माकंज्ञानिनासर्वदर्शिना ॥ २१ ॥ ततःकृतनमस्कारास्तस्माद्देशाद्विनिर्गताः ॥ इमंकल्पतरुंप्राप्यतिष्ठामोविगतज्वराः ॥ २२ ॥ अद्यमेफलितंपुण्यैश्चिरकालोपसंभृतैः ॥ निर्विघ्नमेवपश्यामियद्भवंतंमुनीश्वरम् ॥ २३ ॥ रसायनमयींशांतापरमानंददायिनी ॥ नानंदयतिकंनामसाधुसंगतिचंद्रिका ॥ २४ ॥ नातःपरतरंकिंचिन्मन्येकुशलमात्मनः ॥ संतोयदनुगम्यंतेसंत्यक्तसकलैषणाः ॥ २५ ॥ अधिगतपरमात्मनोऽपिमन्येभवदवलोकनशान्तदुष्कृतस्य ॥ ममसफलमिहाद्यजन्मसाधोसकलभयापहरोहिसाधुसंगः ॥ २६ ॥ वसिष्ठउवाच ॥ इत्युक्त्वार्घ्यंचपाद्यंचभूयोदत्तवतिस्वयम् ॥ भुशुंडविहगेतस्मिन्निदंरामाहमुक्तवान् ॥ २७ ॥ भ्रातरस्तेविहंगेशताद्दक्तत्त्वामहाधियः ॥ इहकस्मान्नदृश्यंतेत्वमेवैकोहिदृश्यते ॥ २८ ॥ भुशुंडउवाच ॥ तिष्ठतामिहनःकालोभूयानतिगतोमुने ॥ युगानांपंक्तयःक्षीणाःकल्पानांचमहामते ॥ २९ ॥ एतावताचकालेनसर्वएवममानुजाः ॥ तनूस्तृणमिवत्यक्त्वाशिवेपरिणताःपदे ॥ ३० ॥ दीर्घायुषोमहांतोऽपिसंतोऽपिबलिनोऽपिवा ॥ सर्वएवनिगीर्यंतेकालेनाकलितात्मना ॥ ३१ ॥



॥ २९ ॥ ३० ॥ ३१ ॥

॥ ३२ ॥ ३३ ॥ आकाशइति ॥ स्तब्धप्रकृतिसर्वांगः स्तब्धानिश्चलाप्रकृतिःशरीरंसर्वांगानिसर्वावयवाश्चयस्यताहशःसन् निर्वासनंमनइववासनाविहीनंजीवन्मुक्तचित्तमिवविगताखिलकल्पनं विगताअखिलाःकल्पनायस्मिन्कर्मणितत्सर्वकल्पनारहितंयथातथातिष्ठामि । दग्धप्रकृतिसर्वांगमितिपाठे ज्ञानाग्निनादग्धाप्रकृतिरविद्यासर्वांगानिचकामसंकल्पविचिकित्सादीनियस्येतिमनोविशेषणंवेदितव्यम् ॥ ३४ ॥ प्रतपंतीति ॥ यदाप्रलयसमये आदित्याद्वादशापियुगपदेवोदिताःप्रतपंति तदाव्योमांगणेगतोऽहं वारुणींवरुणसंबंधि

अहमुवाच ॥ कल्पांतेषुमहाबुद्धेवहत्स्वग्न्यम्बुवायुषु ॥ प्रतपत्सुतथार्केषुकथंतिष्ठसिविज्वरः ॥ ३२ ॥ भुशुंडउवाच ॥ यदाशाम्यतिकल्पांतेव्यवहारोजगद्गतः ॥ कृतघ्नइवमन्मित्रंतदानीडंत्यजाम्यहम् ॥ ३३ ॥ आकाशएवतिष्ठामिविगताखिलकल्पनम् ॥ स्तब्धप्रकृतिसर्वांगोमनोनिर्वासनंयथा ॥ ३४ ॥ प्रतपंतियदादित्याव्योमाङ्गणगतोऽह्यहम् ॥ वारुणींधारणांबध्वातदातिष्ठामिधीरधीः ॥ ३५ ॥ यदाशकलिताद्रींद्रावांतिप्रलयवायवः ॥ पार्वतींधारणांबध्वाखेतिष्ठाम्यचलंतदा ॥ ३६ ॥ जगद्गलतिमेर्वादियात्येकार्णवतांयदा ॥ वायवींधारणांबध्वासंप्लवेऽचलधीस्तदा ॥ ३७ ॥

नींधारणांभावनांचबध्वा धीरधीर्निश्चयबुद्धिस्तिष्ठामि । वरुणोयथाअपांमध्यमध्यासीनोबाह्यमातपसंतापंनावगच्छति तद्वद्भुशुंडोऽपिवरुणभावनयातन्मयत्वमासाद्य तद्वदेवबाह्यसंतापंनानुभवतीत्यर्थः ॥ ३५ ॥ यदेति ॥ यदाप्रलयवायवः शकलिताद्रींद्रावांति तदापार्वतींधारणांबध्वा आकाशेअचलंतिष्ठामि । भूमिष्ठानामेवपर्वतानांसंहार्यत्वेनतत्रैवप्रलयवायुसंरंभात् तत्संरंभाविषयेब्रह्मांडबहिराकाशेसाधारणवायुसंक्षोभाभावायपार्वतींधारणामालंब्यसुखंतिष्ठामीत्यर्थः ॥ ३६ ॥ जगदिति ॥ एकार्णवसमयेऽपिवायुधारणायाःसंप्लवेउपर्येवतरा

मि ॥ ३७ ॥ ब्रह्मांडेतिश्लोकद्वयंवाक्यम् ॥ प्रलयेसतिब्रह्मांडस्यपारंबहिर्भागमासाद्य तत्त्वांतेब्रह्मांडावरणभूतानांभूम्यप्तेजोवाय्वाकाशाहंकारमहत्प्रकृतिरूपाणांसप्तानांतत्त्वानामंतेविमलेपदेसुषुप्तावस्थयासमाध्यवस्थयातावत्तिष्ठामि । यावत्कमलजःपुनःसृष्टिकर्मणितिष्ठति तदापुनःसृष्टौब्रह्मांडंप्रविश्यविहगालयेतिष्ठामि ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥ ब्रह्मन्निति ॥ नियतिर्नियमनात्मिका



ब्रह्मांडपारमासाद्यतत्त्वांतेविमलेपदे ॥ सुषुप्तावस्थयातावत्तिष्ठाम्यचलरूपया ॥ ३८ ॥ यावत्पुनःकमलजःसृष्टिकर्मणितिष्ठति ॥ तत्रप्रविश्यब्रह्मांडंतिष्ठामिविहगालये ॥ ३९ ॥ मत्संकल्पवशेनैवकल्पेकल्पेपुनःपुनः ॥ अस्मिन्नेवगिरेःशृंगेतरुरित्थंभवत्ययम् ॥ ४० ॥ वसिष्ठउवाच ॥ यथातिष्ठसिपक्षींद्रधारणाभिरखंडितः ॥ कल्पांतेषुतथाकस्मान्नान्येतिष्ठंतियोगिनः ॥ ४१ ॥ भुशुंडउवाच ॥ ब्रह्मन्नियतिरेषाहिदुर्लंघ्यापारमेश्वरी ॥ मयेदृशेनवैभाव्यंभाव्यमन्यैश्चतादृशैः ॥ ४२ ॥ नशक्यतेचालयितुमवश्यंभवितव्यता ॥ यद्यथातत्तथैतद्धिस्वभावस्यैषनिश्चयः ॥ ४३ ॥ वसिष्ठउवाच ॥ ज्ञानविज्ञानवान्वीरोयोगयोग्यमनोगतिः ॥ किंकिंस्मरसिकल्याणचित्रमस्मिन्जगत्त्रये ॥ ४४ ॥ भुशुंडउवाच ॥ बृहत्तरशिलावृक्षामजाततृणवीरुधम् ॥ अशैलवनवृक्षौघांस्मरामीमांधरामधः ॥ ४५ ॥

पारमेश्वरीशक्तिः ॥ ४२ ॥ नेति ॥ विचालयितुंविलंघयितुं भवितव्यतादैवगतिः । नियतिरितिईश्वरवादे भवितव्यतेतिनिरीश्वरवादे स्वभावस्यैषनिश्चयइतिस्वभाववादइति मतभेदेनोक्तमुररीकृतमित्यनुसंधेयम् ॥ ४३ ॥ ज्ञानेति ॥ तत्रज्ञानंमोक्षहेतुस्तत्त्वज्ञानं लौकिकनिखिलकलाशास्त्रादिविशेषज्ञानं चित्रमाश्चर्यम् ॥ ४४ ॥ बृहत्तरेति ॥ अधःअतीतेकल्पांते ॥ ४५ ॥

दशवर्षेति ॥ शोषणदहनानंतरं विलंबितायामतिसृष्टावेकादशसहस्रवर्षाणि भस्मभारपरिपूर्णैवधरास्थितेत्यर्थः ॥ ४६ ॥ चतुर्युगांतमि तिश्लोकद्वयंवाक्यम् ॥ अपरांकल्पांतरगतां जगत्कुटींजगदाधारभूतांधरां चतुर्युगांतएकस्मिंश्चतुर्युगेवनपादपैः नीरंध्रांसंस्मरामि । अन्य स्मिंश्चतुर्युगेनीरंध्रैरचलैर्वृतांसंस्मरामि अन्यस्मिंश्चतुर्युगेअगस्त्येनमहर्षिणाशून्यामतएवचनियामकाभावादेकविंध्यपर्वततांगतांविंध्येनैवैके नव्याप्तांसंस्मरामि ॥ ४७॥४८ ॥ सुरापेति ॥ सुरापाब्राह्मणायस्मिन् निषिद्धसुरावर्जितसुरापानाःशूद्रायस्मिन् स्वैरवृत्तयःस्वेच्छाचारिण्यः

दशवर्षसहस्राणिदशवर्षशतानिच ॥ भस्मभारभरापूर्णांसंस्मरामिधरामधः ॥ ४६ ॥ चतुर्यु
गांतमपरांनीरंध्रांवनपादपैः ॥ चतुर्युगांतमपरांनीरंध्रैरचलैर्वृताम् ॥ ४७ ॥ अनगस्त्यामिमा
मेकविंध्यपर्वततांगताम् ॥ चतुर्युगांतमपरांसंस्मरामिजगत्कुटीम् ॥ ४८ ॥ सुरापब्राह्मणंतात
निषिद्धसुरशूद्रकम् ॥ स्वैरवृत्तिसतीकंचकंचित्सर्गंस्मराम्यहम् ॥ ४९ ॥ जन्मेंदुभास्करादीना
मिंद्रोपेंद्रव्यवस्थितिम् ॥ हिरण्याक्षापहरणंवाराहोद्धरणंक्षितेः ॥ ५० ॥ कल्पनंपार्थिवानांचवे
दानयनमेवच ॥ मंदरोन्मूलनंचाब्धेरमृतार्थंचमंथनम् ॥ ५१ ॥ अजातपक्षोगरुडःसागराणां
समुद्भवः ॥ इत्यादिकायाःस्मृतयःस्वल्पातीतजगत्क्रमाः ॥ ५२ ॥

सत्यःकुलांगनायस्मिन् तादृशं कंचित्सर्गसृष्टिंस्मरामि ॥ ४९ ॥ जन्मेतिश्लोकत्रयंवाक्यम् ॥ इंदुभास्करादीनांजन्मउत्पत्तिं इंद्रोपेंद्रव्यव स्थितिंइंद्रस्योपेंद्रस्यचमर्यादांक्षितेर्हिरण्याक्षेणापहरणंवाराहेणचोद्धरणम् ॥ ५० ॥ पार्थिवानांमन्वंतराधिपतीनांकल्पनं वेदानांसोमकेन सुरारिणापहृतानांमत्स्यावतारेणानयनं मंदरस्यमंथानत्वपरिकल्पनायसुरासुरैरुन्मूलनं अमृतार्थमब्धेर्मंथनंचतृतीयास्मृतिरस्ति । इत्यादिका एवमादयः स्वल्पातीताजगत्क्रमायासुताः स्मृतयःस्मर्तव्याथाः ॥ ५१ ॥ ५२ ॥

बालैरपीति ॥ बालैरपिस्मर्यंते अतःकारणात्तासुस्मृतिषुकोग्रहःकोवाआदरः । मांप्रत्येतादृशोवृत्तांतोनप्रष्टव्यइतिभावः ॥ ५३ ॥ ततइति सार्धश्लोकद्वयंवाक्यम् ॥ युष्मदादिषु भरद्वाजादिषु सनत्कुमारादिषु तथाद्यतनसर्गेषुचयत्स्मरणंतत्रस्मरणेकागणनाकोवाआदरः ॥५४॥ ॥ ५५ ॥ मुनेइति ॥ ब्रह्मपुत्रस्यब्रह्मणोमानसपुत्रस्यते इदंजन्मअष्टमंकिल अष्टमेजन्मनिब्रह्मपुत्रस्त्वंजातइत्यर्थः । तस्मिन्नष्टमेसर्गेजन्मनि



बालैरपिहितास्तातस्मर्यंतेतासुकोग्रहः ॥ ५३ ॥ ततोजगतिजातेषुभगवन्युष्मदादिषु॥ भरद्वाजपुलस्त्यात्रिनारदेंद्रमरीचिषु ॥ ५४ ॥ सनत्कुमारभृग्वीशस्कंदेभवदनादिषु ॥ गौरीसरस्वतीलक्ष्मीगायत्र्याद्यासुभूरिषु ॥ तथाद्यतनसर्गेषुस्मरणेगणनैवका ॥ ५५ ॥ मुनेतेब्रह्मपुत्रस्यजन्माष्टमामिदंकिल ॥ संस्मराम्यष्टमेसर्गेतस्मिंस्त्वंममसंगतः ॥ ५६ ॥ कदाचिज्जायसेव्योम्नःकदाचिज्जायसेजलात् ॥ कदाचिज्जायसेशैलात्कदाचिज्जायसेऽनलात् ॥५७॥ अंतर्धानंगताधात्रीवारपंचकमुद्धृता ॥ मुनेपंचसुसर्गेषुकूर्मेणैवपयोदधेः ॥ ५८ ॥ स्मरामिद्वादशंचेदममृतांभोधिमंथनम्॥वारत्रयंहिरण्याक्षोनीतवान्वसुधामधः ॥ ५९ ॥ रेणुकाजन्मतांयातःषष्ठवारमयंहरिः ॥ दशशतंकलियुगानांचहरेर्बुद्धदशाशतम् ॥ ६० ॥ त्रिंशत्त्रिपुरविक्षोभान्द्वौदक्षाध्वरसंक्षयौ ॥ दशशक्रविघातांश्चचंद्रमौलेःस्मराम्यहम् ॥ बाणार्थमष्टौसंग्रामानध्वरप्रमथत्रयम् ॥ ६१ ॥



तेमेचसंगतिमिदानींवर्तमानामपिपूर्वमेवस्मरामि ॥ ५६ ॥ जन्मांतरेषुकुतोजातइत्यत्राह ॥ कदाचिदिति ॥ कदाचित्कस्मिंश्चिन्मन्वंतरे ॥ ५७ ॥ अंतरिति ॥ अंतर्धानंएकार्णवजलेतिरोधानंकूर्मेणैवनतुवराहादिना ॥ ५८ ॥ ५९ ॥ ६० ॥ त्रिंशदिति ॥ केनचिदविनयेन

क्षुब्धाचंद्रमौलेःसकाशाद्दशानांशक्राणांविघातान्पूर्वमनुभूतान् इदानींस्मरामि ॥ ६१ ॥ युगमिति ॥ युगंप्रति युगापेक्षया पुंसांधियां पुरुषबुद्धीनांन्यूनतयाअधिकतयाच क्रियांगपाठवैचित्र्ययुक्तान् । क्रियावेदोक्तकर्मानुष्ठानं अंगानिव्याकरणादीनि पाठोऽध्ययनप्रकारः क्रियावैचित्र्येणपाठवैचित्र्येणयुक्तान्वेदान्स्मरामि । द्वापरेकलौचधर्मह्रासात्पुरुषबुद्धीनांह्रासेसति तदनुसारेणवेदानांक्रियांगपाठह्रासो भवति त्रेतायांकृतेचधर्मवृद्ध्यापुरुषबुद्धिप्रवृद्धौसत्यां क्रियादिवृद्धिरितिवैचित्र्यमित्यर्थः ॥ ६२ ॥ एकार्थानीति ॥ निवृत्तानिसंप्रदायाभावा द्युगांतेनिवृत्तानि युगंप्रतिभारतादियुगापेक्षया पुरुषबुद्धिवैचित्र्यादेकार्थानिसमानार्थान्येवबहुपाठानिपुराणानिपुनरपिप्रवर्तंते ॥ ६३ ॥ इ

युगंप्रतिधियांपुंसांन्यूनाधिकतयामुने ॥ क्रियांगपाठवैचित्र्ययुक्तान्वेदान्स्मराम्यहम् ॥ ६२ ॥
एकार्थानिसमग्राणिबहुपाठानिचानघ ॥ पुराणानिप्रवर्तंतेनिवृत्तानियुगंप्रति ॥ ६३ ॥ इति
हासंमहाश्चर्यमन्यद्रामायणाभिधम् ॥ ग्रंथंलक्षप्रमाणंचज्ञानशास्त्रंस्मराम्यहम् ॥ ६४ ॥ वा
ल्मीकिनाम्नाजीवेनतेनैवान्येनवाकृतम् ॥ एतच्चद्वादशंवारंक्रियतेविस्मृतिंगतम् ॥ ६५ ॥
द्वितीयमेतस्यसमंभारतंनामनामतः ॥ स्मरामिप्राक्तनंव्यासकृतंजगतिविस्मृतम् ॥ ६६ ॥

तिहासमिति ॥ महाश्चर्यंमहांत्याश्चर्याणियस्मिंस्तादृशंज्ञानशास्त्रंमोक्षोपायनिरूपणपरं अतएवहेतोःअन्यद्रावणवधार्थात्प्रसिद्धाद्रामायणाद्भि न्नंरामायणाभिधंग्रंथंलक्षप्रमाणमितिसंस्मरामि । अन्यदितिज्ञानशास्त्रापेक्षयानपुंसकनिर्देशः ॥ ६४ ॥ वाल्मीकीति ॥ तेनैवयःप्रसिद्धस्य रामायणस्यप्रणेतातेनैव अन्येनतस्मादन्येनवाल्मीकिनाम्नाजीवेनकृतमेतच्चज्ञानशास्त्ररूपंरामायणं युगांतेविस्मृतिंगतमितिकृत्वाद्वादशंवार मधुनाक्रियते । यःपूर्वंरावणवधार्थानांज्ञानशास्त्ररूपाणांचरामायणानांप्रणेतासएववाल्मीकिः संप्रदायप्रवृत्तयेपरमेश्वराज्ञयापुनःपुनःआवि र्भवति अन्योवाकश्चिज्जीवः । तपोमहिम्नावाल्मीकिभावमासाद्यरामायणसंप्रदायंप्रवर्तयतीत्यर्थः ॥ ६५ ॥ द्वितीयमिति ॥ एतस्यरामायण

स्यसमंलक्षप्रमाणं भारतंनामप्राक्तनंपूर्वकल्पातीतंव्यासकृतंद्वितीयमितिहासं जगतिविस्मृतिंगतमपिस्मरामि । गतान्यपिभारतानिस्म रामीत्यर्थः ॥ ६६ ॥ व्यासेति ॥ पूर्ववद्व्याख्येयम् ॥ ६७ ॥ राक्षसेति ॥ रामावतारात्प्रागेवरामायणप्रवृत्तेरवतरिष्यतो भविष्यतीतिचभा वितयानिर्देशः ॥ ६८ ॥ ६९ ॥ जगदिति ॥ जगद्रूपाभ्रांतिरियंकदाचित्कल्पांतेनैवविद्यते । कदाचित्तुस्थितिकालेविद्यते अतोजलबुद्बु दवत्स्थिता ॥ ७० ॥ दृश्येति ॥ इयमनिष्ठानियता अतिविचित्रत्वात् । अनष्टेतिपाठेनाशरहितापुनरपिप्रादुर्भावात् । दृश्यभ्रांतिरात्म

व्यासाभिधेनजीवेनतेनैवान्येनवाकृतम् ॥ एतच्चसप्तमंवारंक्रियतेविस्मृतिंगतम् ॥ ६७ ॥ वसु
राक्षसक्षतयेविष्णोर्महीमवतरिष्यतः ॥ अधुनैकादशंजन्मरामनाम्नोभविष्यति ॥ ६८ ॥ वसु
देवगृहेविष्णोर्भुवोभारनिवृत्तये ॥ अधुनाषोडशंजन्मभविष्यतिमुनीश्वर ॥ ६९ ॥ जगन्मयी
भ्रांतिरियंनकदाचनविद्यते ॥ विद्यतेतुकदाचिच्चजलबुद्बुदवत्स्थिता ॥ ७० ॥ दृश्यभ्रांतिरनिष्ठे
यमंतस्थासंविदात्मनः ॥ जायतेलीयतेचाशुलोलावीचिरिवांभसि ॥ ७१ ॥ नेहाभूदुत्तरापूर्वं
ककुब्नायंचभूधरः ॥ दिग्युत्तराभूदन्यत्रपूर्वमेषमहीधरः ॥ ७२ ॥ अर्कादिऋक्षसंचारान्मेर्वादि
स्थानकाद्दिशाम् ॥ संस्थानमन्यथातस्मिन्स्थितेयांतिदिशोऽन्यथा ॥ ७३ ॥

नोऽतस्थासंविदेव । अतोवीचिरंभसीवलोलाजायतेलीयतेच ॥ ७१ ॥ नेहेति ॥ पूर्वमतीतेकल्पांतरेइहास्मिन्प्रदेशेउत्तराककुब्नाभूत् । अयंमेरुश्चनाभूत् । अन्यत्रोत्तरादिगभूत् । अयंमहीधरश्चान्यत्राभूत् ॥ ७२ ॥ अर्केति ॥ अर्कादिऋक्षसंचारात्सूर्यादिग्रहसंचारात् मेर्वादि स्थानकात् । मेरुप्रभृतिमर्यादापर्वतसंस्थानाच्चदिशांसंस्थानं संनिवेशस्तस्मिन्मेर्वादिसंस्थाने अन्यथास्थितेसति । दिशोऽन्यथाप्रकारांतरं यांति । दिशामादित्यादिग्रहसंचारंमेर्वादिसंनिवेशंच अपेक्ष्यंकल्पितत्वात् तदन्यथाभावेदिशामपिअन्यथात्वंभवतीतिभावः ॥ ७३ ॥

॥ ७४ ॥ ७५ ॥ ७६ ॥ ७७ ॥ तथापीति ॥ तथापिजानन्नपियद्यस्मान्मांपृच्छसि । तत्तस्मात्तेप्रकथयामि । सतांविदुषामाज्ञाचरणमेवआ ज्ञापितार्थानुष्ठानमेवाराधनमाहुः ॥ ७८ ॥ दोषेति ॥ दोषैरागद्वेषादिभिरेवमुक्ताफलैः प्रोतावासनारूपातंतुसंततिर्यस्यहृदिनग्रथिता । तंमृत्युर्नजिघांसतिहंतुंनेच्छति ॥ ७९ ॥ विश्वासेति ॥ विश्वासवृक्षक्रकचाः विश्वासानांपुत्रमित्रादिविषयाणांविश्रंभाणामेववृक्षाणांक्रक

कलौकृतयुगाचारान्कृतेकलियुगस्थितिम् ॥ त्रेतायांद्वापरेचैवविपर्यासंस्मराम्यहम् ॥ ७४ ॥ वसिष्ठउवाच ॥ अथासौवायसःश्रेष्ठोजिज्ञासार्थमिदंमया ॥ भूयःपृष्टोमहाबाहोकल्पवृक्षलताग्रके ॥ ७५ ॥ चरतांजगतःकोशेव्यवहारवतामपि ॥ कथंविहगराजेंद्रदेहंमृत्युर्नबाधते ॥ ७६ ॥ भुशुंडउवाच ॥ जानन्नपिहिसर्वज्ञब्रह्मजिज्ञासयैवमाम् ॥ पृच्छसिप्रभवोनित्यंभृत्यंवाचालयंतिहि ॥ ७७ ॥ तथापियत्पृच्छसिमांतत्तेप्रकटयाम्यहम् ॥ आज्ञाचरणमेवाहुर्मुख्यमाराधनंसताम् ॥ ७८ ॥ दोषमुक्ताफलप्रोतावासनातंतुसंततिः ॥ हृदिनग्रथितायस्यमृत्युस्तंनजिघांसति ॥ ७९ ॥ विश्वासवृक्षक्रकचाःसर्वदेहलताघुणाः ॥ आधयोयंनभिंदंतिमृत्युस्तंनजिघांसति ॥८०॥ शरीरतरुसर्पौघाश्चिंतार्पितशिरःफटाः ॥ आशायंनदहत्यंतर्मृत्युस्तंनजिघांसति ॥८१॥

चाः विदारणसाधनानिक्रकचपत्राणि । सर्वदेहानामेवलतानांघुणाः विलेखनपटवः कृमयः यत्कृतेविलेखनेघुणाक्षरमितिप्रसिद्धिः । आधयोमानसदुःखानि ॥ ८० ॥ शरीरेति ॥ शरीराणामेवतरूणांसर्पौघाः सर्पसमूहवत्तापहेतवः । आशास्तृष्णाविशेषाश्चिंतार्पितशिरःफटाः चिंताभिरर्पिताः शिरसिफटायासांताः आशारूपाणांसर्पाणांचिंताएवशिरोभागस्थिताः फणाइत्यर्थः ॥ ८१ ॥

रागेति ॥ लोभव्यालःलोभरूपःसर्पः ॥ ८२ ॥ ८३ ॥ यंत्रमिति ॥ कठिनंदार्वादिमयत्वाद्दृढंतिलानांयंत्रंतिलेभ्यस्तैलनिष्पीडनार्थंयंत्रंक तृउग्रंउन्नतत्वाद्भीषणम् ॥ ८४ ॥ एकस्मिन्निति ॥ संश्रितासंप्राप्ता तंमृत्युर्नजिघांसति ॥ ८५ ॥ मृत्युःकंवानबाधतइतिपृष्टे यस्याशय दोषानसंतितंनबाधतइत्युक्तम् । तत्राशयदोषनिवृत्तिःकथमित्याकांक्षायामिदानींतन्निवृत्त्युपायमाह ॥ एतइति ॥ संसारव्याधिहेतवःए तेपूर्वोक्तामहादोषाएकसमाहितंएकस्मिंस्तत्त्वेसमाधियुक्तंचित्तं मनागपिनलुंपंति ॥ ८६ ॥ आधीति ॥ महाभ्रमैःपुत्रकलत्रादिविषय

रागद्वेषविषाघूर्णःस्वमनोबिलमंदिरः ॥ लोभव्यालोनभुंक्तेयंमृत्युस्तंनजिघांसति ॥ ८२ ॥ पीताशेषवि वेकांबुःशरीरांभोधिवाडवः ॥ ननिर्दहतियंकोपस्तंमृत्युर्नजिघांसति ॥ ८३ ॥ यंत्रंतिलानांकठिनंराशि मुग्रमिवाकुलम् ॥ यंपीडयतिनानंगस्तंमृत्युर्नजिघांसति ॥८४॥ एकस्मिन्निर्मलेयेनपदेपरमपावने ॥ सं श्रिताचित्तविश्रांतिस्तंमृत्युर्नजिघांसति ॥ ८५ ॥ एतेब्रह्मन्महादोषाःसंसारव्याधिहेतवः ॥ मनाग पिनलुंपंतिचित्तमेकसमाहितम् ॥ ८६ ॥ आधिव्याधिसमुत्थानिचलितानिमहाभ्रमैः ॥ नविलुंपंतिदुः खानिचित्तमेकसमाहितम् ॥ ८७ ॥ अंधीकृतहृदाकाशाःकामकोपविकारजाः ॥ चिंतानपरिहिंसं तिचित्तमेकसमाहितम् ॥ ८८ ॥ येदुरर्थाद्दुरारंभाद्दुर्गुणाद्दुरुदाहृताः ॥ दुष्क्रमास्तेनकृंतंतिचित्तमे कसमाहितम् ॥ ८९ ॥

व्यामोहैश्चलितानिप्रवृत्तानि ॥ ८७ ॥ ८८ ॥ यइति ॥ अर्थाःसांसारिककार्यासिद्धिहेतवःसंपदः । आरंभास्तदर्थमुद्यमा गुणास्तदनुकू लाःशौर्यादयउदाहृताः । त्यागभोगादिपरित्रैःपामरजनैरुदीरिताःकीर्तितायेदुष्क्रमाःपरचित्तरंजनक्रमानीतिशास्त्रोक्तास्तेषांदुःखत्वंदुःख भूयिष्ठत्वंपर्यंतविरसत्वानित्यत्वादिनापूर्वमेववैराग्यप्रकरणेनिरूपितम् । तेदुरर्थादयःएकसमाहितंचित्तंनहिंसंतिकिंतर्हिविक्षिप्तंचित्तमेवसं

सारिणमिति ॥ ८९ ॥ एकसमाहितमित्युक्तं कुत्रवासमाहितमित्याकांक्षायांचित्तसमाधेर्विषयंदर्शयितुमाह यदिति ॥ यद्वस्तुउदर्कहितं उत्तरकालेबंधमोक्षहेतुगतभ्रमं निवृत्ताविद्यं अतश्चअनुपाध्युपाधिरहितंअतएवदुरीहितदशायाःसंसारदशायाउन्मुक्तं अतश्चसत्यमबाध्यं तिष्ठति । मनःकर्मतत्परंतादृक्परब्रह्मनिष्ठंकारयेत् तथासतिनमनोदोषाः असतिचदोषकालुष्येनमृत्युभयमितिपूर्वोक्तनिर्वाहः ॥ ९० ॥ यदिति ॥ चिरंवैधुर्यदायिनाचिरकालंविरोधहेतुना अशुद्धेनअप्रामाणिकेनअनेकत्वपिशाचेनभेदभ्रमेण यद्वस्तुअमृष्टमस्पृष्टम् । एकमेवा

यदुदर्कहितंसत्यमनुपाधिगतभ्रमम् ॥ दुरीहितदशोन्मुक्तंतत्परंकारयेन्मनः ॥ ९० ॥ यदमृष्टमशुद्धे नचिरवैधुर्यदायिना ॥ अनेकत्वपिशाचेनतत्परंकारयेन्मनः ॥ ९१ ॥ आत्मचिंतासमस्तानांदुःखा नामंतकारिणी ॥ युष्मदादिषुसुप्रापादुष्प्रापाचास्मदादिषु ॥ ९२ ॥ समस्तकलनातीतंपरांकोटिमुपा श्रितम् ॥ पदमासादयंत्येतत्कथंसामान्यबुद्धयः ॥ ९३ ॥ आत्मचिंतासमानानांविविधानांमुनीश्वर ॥ आत्मचिंतावयस्यानांमध्यादेकतमामया ॥ ९४ ॥ सर्वदुःखक्षयकरीसर्वसौभाग्यवर्धिनी ॥ कारणं जीवितस्येहप्राणचिंतासमाश्रिता ॥ ९५ ॥ इत्युक्तवंतंविहगंभुशुंडंपुनरप्यहम् ॥ जानन्नपीदमव्यग्रः पृष्टवान्क्रीडयामुनिः ॥ ९६ ॥

द्वितीयंब्रह्मेतिश्रुतेः । मनस्तादृग्ब्रह्मपरंकारयेद्भेदस्यविरोधहेतुत्वंविशदयितुमेवश्रुत्याभेदभावनायांभयंप्रतिपाद्यते ॥ यदाह्येवैषएतस्मिन् उदरमंतरंकुरुतेअथतस्यभयंभवतीतिश्रुतिः ॥ ९१ ॥ आत्मेति ॥ अस्मदादिष्वितिमंदबुद्ध्युपलक्षणम् ॥ ९२ ॥ मंदानांदुष्प्रापत्वमेवाह ॥ समस्तेति ॥ सामान्यबुद्धयोमंदबुद्धयः ॥ ९३ ॥ आत्मचिंतायादुष्प्रापत्वादेवतत्समानाप्राणचिंतामयाश्रितेत्याहश्लोकद्वयेन ॥ आ त्मेति आत्मचिंतासमानत्वादेवंविधानामुपासनांतराणांतद्वयस्यालम् ॥ ९४ ॥ ९५ ॥ ९६ ॥

॥ ९७ ॥ शृण्वितिसार्धश्लोकद्वयंवाक्यम् ॥ प्राणसमाधानंप्राणगत्यनुसंधानमित्यर्थः ॥ ९८ ॥ ९९ ॥ १०० ॥ शीतेतिश्लोकत्रयं वाक्यम् ॥ शीतोष्णवपुषोः शीतवपुरपानःउष्णवपुःप्राणः । हृदाकाशार्कशशिनोः प्राणोऽर्कःअपानःशशी ॥ १ ॥ २ ॥ ३ ॥ सहस्रे ति ॥ सहस्रविनिकृत्तांगात् सहस्रंविनिकृत्तान्यंगानियस्यतस्मात् । सहस्रधाछिन्नादित्यर्थः बिसतंतुलवादपि तयोःप्राणापानयोर्ग



सर्वसंशयविच्छेदिन्नत्यंतचिरजिवित ॥ यथार्थंब्रूहिमेसाधोप्राणचिंताकिमुच्यते ॥ ९७ ॥ भुशुंडउवाच ॥ शृणुप्राणसमाधानंवक्ष्यमाणमिदंमया ॥ यस्येदंभगवन्सर्वंदेहगेहंमनोरमम् ॥ ९८ ॥ तत्रोर्ध्वाधोद्विसंकेतौप्रसृतावनिलौमुने ॥ देहस्यमध्येहृत्पद्मंतत्रैतौसमवस्थितौ ॥ ९९ ॥ प्राणापानावितिख्यातौ प्रकटौतौवरानिलौ ॥ तयोरनुसरन्नित्यंमुनेगतिरहंस्थितः ॥ १०० ॥ शीतोष्णवपुषोर्नित्यंनित्यमंबरपांथयोः ॥ कलेवरमहायंत्रवाहयोःश्रमहीनयोः ॥ १ ॥ हृदाकाशार्कशशिनोरग्नीषोमस्वरूपयोः ॥ तयोर्ममानुसरतःप्राणापानाभिधानयोः ॥ २ ॥ गतिःशरीरमरुतोःसशरीरमरुद्धयोः ॥ जाग्रत्स्वप्नसुषुप्तेषुसदैवसमरूपयोः ॥ सुषुप्तसंस्थितस्येवब्रह्मवांछंतिवासनाः ॥ ३ ॥ सहस्रविनिकृत्तांगाद्बिसतंतुलवादपि ॥ दुर्लक्ष्याविद्यमानापिगतिःसूक्ष्मतरानयोः ॥ ४ ॥ प्राणोऽयमनिशंब्रह्मन्स्पंदशक्तिः सदागतिः ॥ सबाह्याभ्यंतरेदेहेप्राणोऽयमूर्ध्वगःस्थितः ॥ ५ ॥



तिःसूक्ष्मतरादुर्लक्ष्याच ॥ ४ ॥ प्राणइति ॥ अयंप्राणःअनिशंस्पंदशक्तिःस्पंदरूपाचलनात्मिकाशक्तिर्यस्य सदागतिर्यस्यतादृशस्तिष्ठ ति । अयंचप्राणऊर्ध्वगःसन्सबाह्याभ्यंतरेद्वादशांगुलपर्यंतंबहिर्निःसरणात् बाह्यनिःसरणात्बाह्यसहितंदेहेयदभ्यंतरंतत्रउर्ध्वगःस्थितःपूर्वो

त्तरार्धयोर्भिन्नत्वात्प्राणशब्दस्यापौनरुक्त्यम् ॥ ५ ॥ अपानइति ॥ अयमपानस्तुअवाक् अधोगमनस्वभावःस्थितइत्ययमेवविशेषः । अन्यत्तुप्राणवदेवेत्यर्थः ॥ ६ ॥ जाग्रतइति ॥ योऽयमुत्तमःप्राणायामोऽभिज्ञस्यप्राणापानगतिज्ञस्यजाग्रतःस्वपतश्चैवप्रवर्तते तंप्राणायामं तावच्छ्रेयसेशृणु ॥ ७ ॥ ८ ॥ द्वादशेति ॥ द्वादशांगुलपर्यंतंबाह्यप्रदेशमाक्रमतांप्राणानांप्राणवृत्तीनां ततोविस्तृतोयोंऽगसंस्पर्शःप्राणावयवानांपरस्परसंश्लेषःसपूरकोबाह्यरूपउच्यते । शरीरापेक्षयाबाह्यस्यद्वादशांगुलपरिमितस्यप्रदेशस्यपूरणात् । स्वतइतिपाठेस्वतएवबाह्य

अपानोऽप्ययनिशंब्रह्मन्स्पंदशक्तिःसदागतिः ॥ सबाह्याभ्यतंरेदेहेत्वपानोऽयमवाक्स्थितः ॥ ६ ॥ जाग्रतः स्वपतश्चैवप्राणायामोऽयमुत्तमः ॥ प्रवर्ततेयोऽभिज्ञस्यतंतावच्छ्रेयसेशृणु ॥ ७ ॥ बाह्योन्मुखत्वंप्राणानांयद्धृदंबुजकोटरात् ॥ स्वरसेनास्तयत्नानामंतस्थंरेचकंविदुः ॥ ८ ॥ द्वादशांगुलपर्यंतंबाह्यमाक्रमतांततः ॥ प्राणानामंगसंस्पर्शोयःसपूरकउच्यते ॥ ९ ॥ बाह्यात्परापतत्यंतरपानेयत्नवर्जितः ॥ योंऽगप्रपूरणस्पर्शोंविदुस्तमपिपूरकम् ॥ १० ॥ अपानेऽस्तंगतेप्राणोयावन्नाभ्युदितोहृदि ॥ तावत्सा कुंभकावस्थायोगिभिर्यानुभूयते ॥ ११ ॥ रेचकःपूरकश्चैवकुंभकश्चत्रिधास्थितः ॥ मृदंतरस्थानिष्पन्नघटवद्यास्थितिर्बहिः ॥ १२ ॥

माक्रमतामित्यन्वयः ॥ ९ ॥ बाह्यादिति ॥ अपानेवायौबाह्यात्प्रदेशादंतःपरापततिसति शरीराभ्यंतरंप्रविशतिसति यत्नवर्जितःअयत्नसिद्धःअंगप्रपूरणःशरीरप्रपूरणोयःस्पर्शस्तमपिपूरकंविदुः अंतःपूरकंविदुरित्यर्थः । शरीरांतःपूरणात् ॥ १० ॥ अपानइति ॥ अपानवायावस्तंगतेसति हृदिप्राणोयावन्नाभ्युदितःतावत्सावायोर्निश्चलारतिःकुंभकावस्थोच्यते । यायोगिभिरनुभूयतेअयमवस्थाविशेषोंऽतःकुंभकइत्यर्थःशरीरस्यांतरेचवायोःकुंभितत्वात् ॥ ११ ॥ १२ ॥

॥ १३ ॥ बाह्येति ॥ बाह्योन्मुखस्यप्राणवायोः यानासिकाग्रावधिर्गतिरस्ति तंगतिविशेषंआद्यंबाह्यपूरकंविदुः अपरस्यापिबाह्यपूरकस्य वक्ष्यमाणत्वादाद्यव्यपदेशः । नासिकाग्रलक्षणबाह्यदेशस्यपूरणाद्बाह्यपूरकत्वम् ॥ १४ ॥ नासेति ॥ नासाग्रादपिनिर्गत्यवायोर्याद्वाद शांतावधिर्गतिरस्ति तंगतिविशेषमपरंबाह्यपूरकंविदुः ॥ १५ ॥ बहिरिति ॥ प्राणेबहिरस्तंगतेसति यावदपानोवायुरंतराकर्षणशीलोनो

द्वादशांगुलपर्यंतेनासाग्रसमसंमुखे ॥ व्योम्निनित्यमपानस्यतंविदुःकुंभकंबुधाः ॥ १३ ॥ बा ह्योन्मुखस्यवायोर्यानासिकाग्रावधिर्गतिः ॥ तंबाह्यपूरकंत्वाद्यंविदुर्योगविदोजनाः ॥ १४ ॥ ना साग्रादपिनिर्गत्यद्वादशांतावधिर्गतिः ॥ यावायोस्तंविदुर्धीराअपरंबाह्यपूरकम् ॥ १५ ॥ बहिर स्तंगतेप्राणेयावन्नापानउद्गतः ॥ तावत्पूर्णसमावस्थंबहिष्ठंकुंभकंविदुः ॥ १६ ॥ अंतर्मुखत्वंवा योर्यदपानोदयरूपकम् ॥ तंबाह्यरेचकंविद्याच्चिंत्यमानंविमुक्तिदम् ॥ १७ ॥ द्वादशांतात्समु त्थायरूपपीवरतापरा ॥ अपानस्यबहिष्ठंतमपरंपूरकंविदुः ॥ १८ ॥ बाह्यानाभ्यंतरांश्चैवकुंभ कादीननारतम् ॥ प्राणापानस्वभावांस्तान्बुध्वाभूयोनजायते ॥ १९ ॥ अष्टावेतेमहाबुद्धेरा त्रिंदिवमनुस्मृताः ॥ स्वभावादेहवायूनांकथितामुक्तिदामया ॥ २० ॥

॥ १६ ॥ अंतरिति ॥ वायोरपानोद द्गतःतावत्पूर्णसमावस्थंपूर्णकुंभतुल्यमवस्थाविशेषंबहिष्ठंकुंभकंविदुःशरीराद्बहिरेववायोःकुंभितत्वात् ॥ १७ ॥ १८ ॥ १९ ॥ अष्टाविति ॥ बाह्याःपूरका यरूपकंयदंतर्मुखत्वंतंबाह्यरेचकंविद्यात् । बहिःकुंभितस्यवायोःअंतर्मुखतयारेचनात् ॥ १७ ॥ १८ ॥ १९ ॥ अष्टाविति ॥ बाह्याःपूरका द्यास्त्रयः आंतराश्चत्रयःअतिरिक्तौतौद्वौबाह्यपूरकावित्यष्टविधत्वं तत्राद्यश्लोकद्वयेनस्थूलांप्राणापानगतिमाश्रित्यभेदद्वयमुक्तम् । अनंतर

श्लोकषट्केनसूक्ष्मांगतिमाश्रित्यषड्भेदानिरूपिताइतिविवेकः ॥ २० ॥ २१ ॥ एतदिति ॥ श्वदृतौशुनकचर्मनिर्मितायांभस्त्रिकायाम् ॥२२॥ ॥ २३ ॥ २४ ॥ प्राणस्येति ॥ हृदिस्थितात्पद्मयंत्रात्प्राणस्याभ्युदयउद्गमनं अयंप्राणोबहिर्द्वादशांगुलपर्यंतेअस्तंयाति ॥ २५ ॥ अपानस्येति ॥ यत्रप्राणस्यलयःतस्माद्द्वादशांतात्अपानस्योदयः । यतश्चप्राणस्योदयःतत्रहृत्पद्मेऽपानस्यलयइत्यर्थः ॥ २६ ॥ अपानइति ॥ अपानश्चंद्ररूपत्वाद्देहंद्वादशांतररूपाद्बाह्यतआगत्योत्थापयति । आप्याययतिपुष्णाति । प्राणस्तुसूर्याग्निरूपत्वादिदंवपुःपाकयुक्तंकरोति

अव्यग्रमस्मिन्व्यापारेबाह्यंपरिजहन्मनः ॥ दिनैःकतिपयैरेवपदमाप्नोतिकेवलम् ॥ २१ ॥ एतदभ्यसतःपुंसोबहिर्विषयवृत्तिषु ॥ नबध्नातिरतिंचेतःश्वदृतौब्राह्मणोयथा ॥ २२ ॥ एतांदृष्टिमवष्टभ्ययेस्थिताःस्थिरबुद्धयः ॥ प्राप्तंप्राप्तव्यमखिलंतैरखिन्नास्तएवहि ॥ २३ ॥ तिष्ठतागच्छतानित्यंजाग्रतास्वपताथवा ॥ एषाचेत्क्रियतेदृष्टिस्तन्नबंधनमाप्यते ॥ २४ ॥ प्राणस्याभ्युदयोब्रह्मन्पद्मयंत्राद्धृदिस्थितात् ॥ द्वादशांगुलपर्यंतेप्राणोऽस्तंयात्ययंबहिः ॥ २५ ॥ अपानस्योदयोबाह्याद्द्वादशांतान्महामुने ॥ अस्तंगतिरथांभोजमध्येहृदयसंस्थिते ॥ २६ ॥ अपानश्चंद्रमादेहमाप्याययतिबाह्यतः ॥ प्राणःसूर्योऽग्निरथवापचत्यंतरिदंवपुः ॥ २७ ॥ अपानशशिनोऽतःस्थाकलाप्राणविवस्वता ॥ यत्रग्रस्तातदासाद्यनभूयोजन्मभाङ्नरः ॥ २८ ॥

॥ २७ ॥ इत्थंप्राणापानगतेःप्राणायामरूपेणानुसंधानप्रकारमभिधायेदानींप्राणगत्यनुसंधानमुखेनात्मानुसंधानप्रकारमाह ॥ अपानेति ॥ अपानशशिनः अपानरूपस्यचंद्रस्यअंतःस्थाशरीरांतर्गता कलाएकदेशः प्राणविवस्वताप्राणाख्येनसूर्येणयत्रयस्मिन्नात्मतत्त्वेग्रस्ता यस्यआत्मनःप्रयत्नेनसंगता तत्पदंतदात्मतत्त्वमासाद्यानुसंधाय भूयःपुनर्नशोच्यते ॥ २८ ॥

प्राणेति ॥ पूर्ववद्व्याख्येयं प्राणापानयोः परस्परोपरोधोयत्प्रयत्नवशाद्भवति तदेवात्मतत्त्वमनुसंधायमुच्यतइत्यर्थः । प्राणार्कस्यअंतःस्था क लेतिसंबंधः ॥ २९ ॥ प्राणेति ॥ इत्थमपानेप्राणभक्षोन्मुखेसति प्राणेअपानभक्षकेसति यत्तत्त्वमुभयोःप्राणापानयोरंतरालस्थंमध्यस्थंसा क्षितयाप्रवर्तते तत्पदंतदात्मतत्त्वमासाद्य नरोभूयोनजायतइत्यनुवृत्त्यासंबंधः ॥ ३० ॥ प्राणेति ॥ खलुचिद्रूपआत्मा प्राणक्षयसमीपस्थः प्राणस्यद्वादशांतरेक्षयेसति स्वयंसमीपेतिष्ठतिसाक्षितयासंनिधत्तेनतुस्वयंक्षीयते । अपानोदयेचकोटिगःसमीपगःसाक्षीनतुस्वयमुदेति । इ त्थमपानप्राणयोर्मध्यंसाक्षिणंचिदात्मानमुपास्महे अनुसंदध्महे ॥ ३१ ॥ एतदेवविवृणोति ॥ अपानइति ॥ कलाकलंकरहितंअविद्यासं

प्राणार्कस्यतथांतस्थायत्रापानसितांशुना ॥ ग्रस्तातत्पदमासाद्यनभूयोजन्मभाङ्नरः ॥ प्राणोगताग तीकुर्वन्संधत्तेसूर्यचंद्रताम् ॥ २९ ॥ प्राणभक्षोन्मुखेऽपानेप्राणेवाऽपानभक्षके ॥ उभयोरंतरालस्थंनभू योजायतेनरः ॥ ३० ॥ प्राणक्षयसमीपस्थअपानोदयकोटिगः ॥ अपानप्राणयोर्मध्यंचिदात्मानमुपा स्महे ॥ ३१ ॥ अपानोऽस्तंगतोयत्रप्राणोनाभ्युदितःक्षणम् ॥ कलाकलंकरहितंतच्चित्तत्त्वमुपास्महे ॥ ३२ ॥ नापानोऽभ्युदितोयत्रप्राणश्चास्तमुपागतः ॥ नासाग्रगगनावर्तंतच्चित्तत्त्वमुपास्महे ॥ ३३ ॥ यदखिल कलनाकलंकहीनंपरिकलितंचसदाकलागणेन ॥ अनुभवविभवंपदंतदग्र्यंसकलसुरप्रणतंपरंप्रपद्ये ॥ ३४ ॥

बंधरहितम् ॥ ३२ ॥ नापानइति ॥ यत्रचित्तत्त्वेप्राणोऽस्तमुपागतः अपानश्चनाभ्युदितः नासाग्रगगनावर्तं नासिकायाअग्रभागेयद्ग गनंद्वादशांतरूपंतत्रावर्तमानंप्राणापानप्रवर्तकतयागमनागमनेकुर्वाणं तत्तादृशचित्तत्त्वमुपास्महे ॥ ३३ ॥ यदिति ॥ तत्पदंअखिलक लनाकलंकहीनं परमात्मस्वरूपत्वात् कलागणेनअविद्याव्यूहेनपरिकलितंचपरितोव्याप्तंच जीवरूपत्वात् । अनुभवविभवं स्वानुभवैकप्र माणं तदग्र्यंपरंपदंप्रपद्ये ॥ ३४ ॥

एषेति ॥ अनेनपूर्वोक्तेन क्रमेणएषाचिति चिद्रूपेआत्मनि विश्रांतिर्मयाप्राप्तेतिसंबंधः ॥ ३५ ॥ नेति ॥ भूतंभविष्यच्चनचिंतयामि वर्तमानामेवदृष्टिमालंब्यात्मनास्वरूपेणैवतिष्ठामि ॥ ३६ ॥ चिरंजीवित्वहेतुमात्मनःचित्तवृत्तिप्रकारमेवप्रपंचयितुमाहनवभिःश्लोकैः ॥ इदमिति ॥ सुंदरंअभिनवंवस्तु ॥ ३७ ॥ ३८ ॥ ३९ ॥ परममिति ॥ परमंत्यागं त्यज्यतेऽनेनेतित्यागोवैराग्यं प्रकृष्टवैराग्यमित्यर्थः ॥४०॥

भुशुंडउवाच ॥ एषाहिचितिविश्रांतिर्मयाप्राणसमाधिना ॥ क्रमेणानेनसंप्राप्तास्वयमात्मनिनिर्मले ॥ ३५ ॥ नभूतंनभविष्यच्चचिंतयामिकदाचन ॥ दृष्टिमालंब्यतिष्ठामिवर्तमानामिहात्मना ॥ ३६ ॥ इदमद्यमयालब्धमिदंप्राप्स्यामिसुंदरम् ॥ इतिचिंतानमेतेनचिरंजीवाम्यनामयः ॥ ३७ ॥ नस्तौमिनचानिंदामिकाचित्किंचित्कदाचन ॥ आत्मनोऽन्यस्यवासाधोतेनजीवाम्यनामयः ॥ ३८ ॥ नतुष्यतिशुभप्राप्तौनाशुभेष्वपिखिद्यते ॥ मनोममसमंनित्यंतेनजीवाम्यनामयः ॥ ३९ ॥ परमंत्यागमालंब्यसर्वमेवसदैवहि ॥ जीवितादिमयात्यक्तंतेनजीवाम्यनामयः ॥ ४० ॥ प्रशांतचालनंवीतशोकमस्तसमीहितम् ॥ मनोममसुनेशांतंतेनजीवाम्यनामयः ॥ ४१ ॥ अयंबंधुःपरश्चायंममायमयमन्यथा ॥ इतिब्रह्मन्नजानामितेनास्मिचिरजीवितः ॥ ४२ ॥ आशापाशविनुन्नायाश्चित्तवृत्तेःसमाहितः ॥ संस्पर्शंनददाम्यंतस्तेनजीवाम्यनामयः ॥ ४३ ॥

प्रशांतेति ॥ तत्रचालनंनामवर्तमानेष्टवस्तुदर्शनकौतूहलम् । तदुक्तम् । कुतूहलंरम्यदृष्टौचालनंपरिकीर्तितमिति । शोकोनष्टेष्टवस्तुविषयः । समीहितंभविष्यदिष्टवस्तुवांछितम् ॥ ४१ ॥ ४२ ॥ आशेति ॥ आशापाशपरवशायाःचित्तवृत्तेरंतःसंस्पर्शं यन्नददामि समाहितत्वात्

तेनजीवामि ॥ ४३ ॥ ४४ ॥ आपदीति ॥ आपदिआपत्प्राप्तिसमयेअचलवद्धीरोऽस्मि संपत्प्राप्तौजगतःसर्वस्यमित्रंच सर्वदाजगतःस र्वस्योपकारणात् भावाभावेषुनैवास्मि एतेभावाभावरूपाइतिपदार्थगतंभेदंनानुसंदधामीत्यर्थः ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥ अन्वि



सुखितोऽस्मिसुखापन्नेदुःखितोदुःखितेजने ॥ सर्वस्यप्रियमित्रंचतेनजीवाम्यनामयः ॥ ४४ ॥ आप द्यचलधीरोऽस्मिजगन्मित्रंचसंपदि ॥ भावाभावेषुनैवास्मितेनजीवाम्यनामयः ॥ ४५ ॥ एतत्तेकथि तंब्रह्मन्यथास्मिचिरजीवितः ॥ त्वदाज्ञामात्रसिद्ध्यर्थंधाष्ट्र्येनज्ञानपारग ॥ ४६ ॥ वसिष्ठउवाच ॥ अहोनुचित्रंभवताकथितंभूषणंश्रुतेः ॥ आत्मोदंतःप्रकथितःपरंविस्मयकारणम् ॥ ४७ ॥ तदस्तु तवकल्याणंप्रविशात्मगुहांशुभाम् ॥ मध्याह्नसमयोऽयंमेव्रजामिसुरमंदिरम् ॥ ४८ ॥ अनुव्रज्याकदर्थे नखगेंद्रालमितिब्रुवन् ॥ विष्टरादहमुत्थायनभःखगवदाप्लुतः ॥ ४९ ॥ व्योम्नियोजनमात्रेतुमदनुव्रज्य योगतः ॥ मयानिवारितःकृच्छ्राद्दुस्त्यजासंगतिःसताम् ॥ ५० ॥ यातेकृतयुगस्यादौपुनस्तेनास्मि संगतः ॥ संगतोऽहंभुशुंडेनमेरोःशृंगद्रुमेऽभवम् ॥ ५१ ॥ अथरामकृतेक्षीणेत्रेतासंप्रतिवर्तते ॥ मध्ये त्रेतायुगस्यास्यजातस्त्वंरिपुसूदन ॥ ५२ ॥ पुनरप्यष्टमेवर्षेतत्रैवोपरिभूभृतः ॥ मिलितोभूद्भुशुंडोमे तथैवाजररूपवान् ॥ ५३ ॥ इतिसंकथितंचित्रंभुशुंडोदंतमुत्तमम् ॥ श्रुत्वाविचार्यचैवांतर्यद्युक्तं तत्समाचर ॥ ५४ ॥



ति ॥ अनुव्रज्याकदर्थेन अनुव्रजनक्लेशेन अलमनुव्रज्यांमाकुर्वित्यर्थः ॥ ४९ ॥ ५० ॥ ५१ ॥ ५२ ॥ ५३ ॥ इतीति ॥ यदुक्तंतत्स

माचार पूर्वोक्ताख्यानेषुभुशुंडवृत्तांतेच यद्युक्तंयथाप्रतीयतेतत्समाचरेत्यर्थः ॥ ५४ ॥ इतिश्रीवासिष्ठविवरणेनिर्वाणप्रकरणेभुशुंडोपाख्या
नंनामएकोनत्रिंशःसर्गः ॥ २९ ॥ पूर्वंप्राणवृत्त्यनुसंधानाच्चित्तविश्रांत्यानिर्वाणमुक्तम् । इदानींतद्वद्देवदेवपूजयापिचित्तविश्रांतिलक्षणं
निर्वाणंभवतीत्युच्यते । तत्रतावद्देहाभिमानस्यसर्वनिर्वाणोपायप्रतिबंधकत्वात्तन्निवृत्तयेहितंकिंचिदुपदिशति ॥ आभासमात्रमिति ॥
इदंशरीरंवस्तुतआभासमात्रं प्रतीतिमात्रसिद्धमपिसंप्रतिअविचारदशायामित्थं अयमित्यहमितिचात्मनोभेदेनाभेदेनचाभिमानविषयत
यांतरंतःकरणेभासते । विचार्यमाणंपुनरसदेवमिथ्यैव कल्पितत्वात् ॥ १ ॥ मांसेति ॥ मांसास्थिमयंनिर्माणंयस्यताद्दशोदेहोऽहमिति

इतिश्रीवाल्मीकीयेमोक्षोपायेनिर्वाणप्रकरणेभुशुंडोपाख्यानंनामएकोनत्रिंशःसर्गः ॥ २९ ॥
श्रीवसिष्ठउवाच ॥ आभासमात्रमेवेदमित्थंसंप्रतिभासते ॥ अयंनामाहमित्यंतरसदेवशरीरक
म् ॥ १ ॥ मांसास्थिमयनिर्माणदेहोऽहमितिविभ्रमम् ॥ त्यजसंकल्पनिर्माणदेहाःसंतिसहस्रशः
॥ २ ॥ सुखतल्पगतोयेनस्वप्नदेहेनदिक्तटान् ॥ परिभ्रमसिहेरामसदेहस्तेक्कसंस्थितः ॥ ३ ॥
जागरायांमनोराज्येयेनस्वर्गपुरांतरम् ॥ परिभ्रमसिमेरुंवासदेहस्तेक्कसंस्थितः ॥ ४ ॥ दीर्घ
स्वप्नमिमंविद्धिदीर्घंवाचित्तविभ्रमम् ॥ दीर्घंवापिमनोराज्यंसंसाररघुनंदन ॥ ५ ॥

योविभ्रमस्तंत्यज । एवंविधानांसंकल्पकल्पितानांदेहानांसहस्रशोविद्यमानत्वादित्यर्थः ॥ २ ॥ देहासत्यत्वमेवाह ॥ सुखेति ॥ सुखतल्प
गतस्यतेदिक्तटभ्रमणहेतवोयेस्वप्नदेहास्तेषामसत्यत्वंत्वयाभ्युपगतमेवेत्यर्थः ॥ ३ ॥ जागरायामिति ॥ जाग्रद्दशायामपिमनोरथपथेनप्रवह
तश्चित्तस्य देहविस्मरणपर्यवसितंयत्पारवश्यंतन्मनोराज्यम् । तत्रापिमिथ्यादेहेनैवदेशांतरभ्रमणमित्यर्थः ॥ ४ ॥ दीर्घेति ॥ दीर्घंवाचित्त
विभ्रमं नीलंनभइतिवत्चिरकालानुवृत्तांभ्रांतिम् ॥ ५ ॥

अभ्यासमात्रमिति ॥ जगत्त्रयंसन्न बाध्यत्वात् । असन्न प्रतीयमानत्वात् । अतःआभासमात्रंप्रतिभासमात्रमेवनवास्तवमित्यन्यकलना
त्यागमेवसम्यगालोकनंविदुः ॥ ६ ॥ अवश्यमिति ॥ मरणस्यजननेनैवआवश्यकत्वनिश्चयात्तत्प्राप्तौपरितापोऽव्यर्थइत्यर्थः ॥ ७ ॥ अव
श्यमिति ॥ जातेनजीवतापुरुषेणसुविभवादिकंकिंचिच्छ्रेयःप्राप्तव्यमितिनिश्चयादर्थलाभेषुमदोऽपिनोचितइत्यर्थः ॥ ८ ॥ प्रविभागमि
ति ॥ पदार्थपटलव्रजे पदार्थवर्गसमुदायात्मकेप्रपंचे प्रविभागंभेदबुद्धिंपरित्यज्य इदमाभासमात्रमेवसामान्यंसर्वानुवृत्तंसच्चिन्मात्रमेवालो

आभासमात्रमेवेदंनसन्नासज्जगत्त्रयम् ॥ इत्यन्यकलनात्यागंसम्यगालोकनंविदुः ॥ ६ ॥ अव
अवश्यमेवहिमयामर्तव्यमितिनिश्चयः ॥ इत्यात्ममरणप्राप्तौकिंमुधापरितप्यते ॥ ७ ॥ अव
श्यमेवजातेनकिंचित्सुविभवादिकम् ॥ प्राप्तव्यंपुरुषेणेतिलाभेष्वर्थेषुकोमदः ॥ ८ ॥ प्रवि
भागंपरित्यज्यपदार्थपटलव्रजे ॥ आभासमात्रेसामान्यमिदमालोकयानघ ॥ ९ ॥ आभास
मात्रमखिलंचित्तामर्शकलंकितम् ॥ ततस्तदपिसंत्यज्यनिराभासोभवोत्तम ॥ १० ॥ रागोद्वेष
श्चसर्पौद्वौनविलीनौमनोबिले ॥ यस्यकल्पतरोस्तस्मात्किंनामांगनलभ्यते ॥ ११ ॥ येप्रज्ञाग
र्वमापन्नाविदग्धाःशास्त्रशालिनः ॥ रागद्वेषमयामान्यगर्दभास्तेधिगस्तुतान् ॥ १२ ॥

कयअनुसंधत्स्व ॥ ९ ॥ आभासेति ॥ यतःकारणादाभासमात्रमपि चित्तामर्शकलंकितं चित्तसंबंधदूषितंततःकारणादपिआभासमात्र
मपिसंत्यज्यनिराभासोभवनिर्विकल्पोभव ॥ १० ॥ रागइति ॥ रागद्वेषाख्यौद्वौसर्पौमनोबिलेनविलीनौनतावास्थितौ किंतु निर्गतौस
एवकल्पतरुः सर्वपुरुषार्थसाधकत्वात् । तस्माद्रागादिरहितात्पुंसःसकाशाल्लोकेकिंनामश्रेयोनलभ्यते सर्वमपिश्रेयोलभ्यतइत्यर्थः ॥ ११ ॥
यइति ॥ येपुनःशास्त्रशालिनोविदग्धाःलौकिकवैदिकव्यवहारनिपुणाअपि प्रज्ञागर्वंप्रज्ञावंतोवयमेवेत्यहंकारमापन्नाःसंतो रागद्वेषमयाः

रागद्वेषभूयिष्ठाभवंति तेमान्यगर्दभाःदूरभारवहनक्षमत्वात् बहुमूल्यायेगर्दभास्तत्तुल्याःतान्धिगस्तु तेनस्प्रष्टव्याइत्यर्थः ॥ १२ ॥ इदमिति ॥ संसारोजननमरणादिप्रवाहः सएवचक्रं भ्रमणशीलत्वात् तस्यसंकल्पात्मकंचित्तमेवनाभिः प्रवर्तकत्वात् । अतश्चित्तनिरोधेसंसारोनिरुध्यते ॥ १३ ॥ क्षोभितायामिति ॥ मनसिक्षोभितेसंसारःप्रवहत्येव नतुप्रकारांतरेणरोद्धुंशक्यते ॥ १४ ॥ १५ ॥ प्रज्ञेति ॥ प्रज्ञाप्रतिभा सौजन्यंशमादिसंपत् शास्त्रंअध्यात्मविद्या पौरुषंपुरुषस्यकर्म ॥ १६ ॥ भयेति ॥ मनोविकारेपरित्यक्तेस्वरूपमेवावशिष्यतइ

इदंसंसारचक्रंहिनाभौसंकल्पमात्रकम् ॥ संरोधितायांवहनाद्रघुनंदनरुध्यते ॥ १३ ॥ क्षोभितायां मनोनाभ्यामिदंसंसारचक्रकम् ॥ प्रयत्नाद्रोधितमपिप्रवहत्येववेगतः ॥ १४ ॥ परंपौरुषमाश्रित्य बलंप्रज्ञांचयुक्तितः ॥ नाभिंसंसारचक्रस्यचित्तमेवनिरोधयेत् ॥ १५ ॥ प्रज्ञासौजन्ययुक्तेनशास्त्रसंवलितेनच ॥ पौरुषेणनयत्प्राप्तंनतत्क्वचनलभ्यते ॥ १६ ॥ भयप्रदमकल्याणंधैर्यसर्वस्वहारिणम् ॥ मनःपिशाचमुत्सृज्ययोऽसिसोऽसिस्थिरोभव ॥ १७ ॥ चित्तयक्षदृढक्रांतंनशास्त्राणिनबांधवाः ॥ शक्नुवंतिपरित्रातुंगुरवोनचमानवम् ॥ १८ ॥ संशांतचित्तवेतालंगुरुशास्त्रार्थबांधवाः ॥ शक्नुवंतिसमुद्धर्तुंस्वल्पपंकान्मृगंयथा ॥ १९ ॥ भोगाभोगाबहिष्कार्याआर्यस्यानुसरेत्पदम् ॥ प्रविचार्यमहार्थंस्वमेकमात्मानमाश्रयेत् ॥ २० ॥

त्यर्थः ॥ १७ ॥ चित्तेति ॥ मनःपिशाचपरवशस्तु केनापिपरित्रातुंनशक्यतइत्यर्थः ॥ १८ ॥ १९ ॥ भोगेति ॥ भोगाभोगाविषयविस्ताराः आर्यस्यजीवन्मुक्तस्यमहार्थंपरमार्थसिद्धमात्मानमेकमाश्रयेत् । अहार्यत्वमितिपाठेस्वात्मनएवमहार्यत्वंप्रविचार्य तमेवात्मानमाश्रयेदित्यर्थः ॥ २० ॥

अत्रेति ॥ अपरांदृष्टिंअन्यंआत्मज्ञानोपायम् ॥ २१ ॥ अस्तीति ॥ दिवःस्वर्गादपिपरमउत्कृष्टः ॥ २२ ॥ २३ ॥ कदाचिदितिश्लोकद्वयंवाक्यम् ॥ २४ ॥ स्यूतपुटिकः पुटिकापूजापुष्पनिक्षेपयोग्यापुटिकासास्यूताप्रोतायेनसतथा । पुस्तकव्यूहसंग्रही ज्ञानशास्त्रविषयाणांपुस्तकानांयःसमूहस्तत्संग्रहशीलः ॥ २५ ॥ २६ ॥ अथेतिश्लोकचतुष्टयंवाक्यम् ॥ कदाचित्तुबहुलस्यश्रावणपक्षस्य गतेअतीतेअष्टमेदिनेरात्रेरग्रभागेक्षयमागतेसति सएकोऽहंसमाधितनुतांनीत्वाबाह्यमग्नदृक्स्थितः सन् ॥ २७ ॥ २८ ॥ २९ ॥ काननेझगित्येवसमुत्थितंशुभ्राभ्रशतसंकाशं । चंचदिंदुगणोपमंतेजोऽपश्यमित्यन्वयः । झटित्यर्थेझगितीतिशाकटायनःपपाठ ॥ ३० ॥

अत्रेमामपरांदृष्टिंमहामोहविनाशिनीम् ॥ शृणुयाकथितापूर्वंममकैलासकंदरे ॥ संसारदुःखशांत्यर्थंदेवेनार्धेंदुमौलिना ॥ २१ ॥ अस्तींदुकरसंभारभासुरःपरमोदिवः ॥ कैलासोनामशैलेंद्रोगौरीरमणमंदिरम् ॥ २२ ॥ तत्रास्तेभगवान्देवोहरश्चंद्रकलाधरः ॥ तंपूजयन्महादेवंतस्मिन्नेवगिरौपुरा ॥ २३ ॥ कदाचिदवसंगंगातटेविरचिताश्रमः ॥ तपोऽर्थंतापसाचारोरचिरायरचितास्थितिः ॥ २४ ॥ सिद्धसंघातवलितःकृतशास्त्रार्थसंग्रहः ॥ पुष्पार्थंस्यूतपुटिकःपुस्तकव्यूहसंग्रही ॥ २५ ॥ एवंगुणविशिष्टस्यकैलासवनकुंजके ॥ तपःप्रचरतोराममममकालोऽस्त्यवर्तत ॥ २६ ॥ अथैकःसकदाचित्तुबहुलस्याष्टमेदिने ॥ गतेश्रावणपक्षस्यरात्र्यग्रेक्षयमागते ॥ २७॥ दिक्षुसंशांतरूपासुकाष्ठमौनस्थितास्विव ॥ खड्गच्छेद्यांधकारेषुकुंजेषुगहनेषुच ॥ २८ ॥ एतस्मिन्समयेतत्रयामार्धेप्रथमेगते ॥ समाधितनुतांनीत्वास्थितोऽहंबाह्यमग्नदृक् ॥ २९ ॥ अपश्यंकाननेतेजोझगित्येवसमुत्थितम् ॥ शुभ्राभ्रशतसंकाशंचंचदिंदुगणोपमम् ॥३०॥

॥ ३१ ॥ ३२ ॥ शिष्यानिति ॥ शिष्यानुद्बोध्यसमाधेर्व्युत्थाप्य तस्यपरमेश्वरस्यदृष्टिपूतंपुरोभागमगमम् ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ मंदारेति ॥ नानाविधैस्तत्रनमस्काराणांअष्टांगपंचांगादिभेदेनस्तोत्राणांच लौकिकवैदिकभेदेनभिन्नत्वान्नानाविधत्वम् ॥ ३७ ॥ तत

प्रकटीकृतदिक्कुंजंतदालोक्यमयास्मयात् ॥ अंतःप्रकाशशालिन्याबुद्धिदृष्ट्याविलोकितम् ॥ ३१ ॥ यावत्पश्यामितंसानुंप्राप्तश्चंद्रकलाधरः ॥ गौरीकरार्पितकरोनंदिप्रोत्सारिताग्रगः ॥ ३२ ॥ शिष्यानुद्बोध्यतत्रस्थान्गृहीत्वार्घ्यंसुसंयतः ॥ अगमंसुमनास्तस्यदृष्टिपूतमहंपुरः ॥ ३३ ॥ तत्रपुष्पांजलिंदत्वादूरादेवत्रिलोचनः ॥ दत्वार्घ्येणमयादेवःसंप्रणम्याभिवंदितः ॥ ३४ ॥ ततश्चंद्रप्रभासख्याऋद्ध्याशीतलयातया ॥ दृशासर्वार्तिहारिण्याचिरमस्म्यास्पदीकृतः ॥ ३५ ॥ पुष्पसानूपविष्टायतस्मैत्रैलोक्यसाक्षिणे ॥ अर्घंपुष्पंतथापाद्यमभ्युपेत्यार्पितंमया ॥ ३६ ॥ मंदारपुष्पांजलयोविकीर्णाबहवःपुनः ॥ नानाविधैर्नमस्कारैस्तोत्रैश्चाभ्यर्चितःशिवः ॥ ३७ ॥ ततोभगवतीगौरीतादृश्यैवसपर्यया ॥ संपूजितासखीयुक्तागणमंडलिकातथा ॥ ३८ ॥ पूजांतेपूर्णशीतांशुरश्मिशीतलयागिरा ॥ तत्रोपविष्टंप्रोवाचमामर्धेंदुकलाधरः ॥ ३९ ॥ ब्रह्मन्प्रशमशालिन्यःप्राप्तविश्रांतयःपरे ॥ कच्चित्कल्याणकारिण्यःसंविदस्तेस्थिराःपदे ॥ ४० ॥

इति ॥ तादृश्यैव यादृशीशिवस्यविहितातादृश्येव गणमंडलिकाप्रमथसमूहः ॥ ३८ ॥ ३९ ॥ ब्रह्मन्निति ॥ परेपदेप्राप्तविश्रांतयःतेसंविदः स्थिराःकच्चित् योगांतरायानसंतिकच्चिदित्यर्थः ॥ ४० ॥

॥ ४१ ॥ ४२ ॥ ४३ ॥ त्वदिति ॥ त्वदनुस्मरणजनितानंदेनपरिपूरितचेतसांत्वद्भक्तानां पुरःपुरोभागेयेनप्रणमंतितेजगत्कोशेनसंति ॥ ४४ ॥ तेदेशाइति ॥ देशाःअंगवंगकलिंगादयः जनपदाग्रामाः । त्वद्भक्तनिवासाएवदेशादयःश्लाघ्याइत्यर्थः ॥ ४५ ॥ फलमिति ॥



कच्चित्तपस्तेनिर्विघ्नंकल्याणमनुवर्तते ॥ कच्चित्प्राप्यंमनःप्राप्तंकच्चिच्छाम्यंतिभीतयः ॥ ४१ ॥ एवंवादिनिदेवेशेसर्वलोकैककारणे ॥ गिरानुनयशालिन्यामयोक्तंरघुनंदन ॥ ४२ ॥ त्वदनुस्मृतकल्याणवतामिहमहेश्वर ॥ नचकिंचनदुष्प्रापंनचकाश्चनभीतयः ॥ ४३ ॥ त्वदनुस्मरणानंदपरिपूरितचेतसाम् ॥ नतेसंतिजगत्कोशेप्रणमंतिनयेपुरः ॥ ४४ ॥ तेदेशास्तेजनपदास्तादिशस्तेचपर्वताः ॥ त्वदनुस्मरणैकांतधियोयत्रस्थिताजनाः ॥ ४५ ॥ फलंभूतस्यपुण्यस्यवर्तमानस्यसेचनम् ॥ तनोतिचैष्यतोबीजंत्वदनुस्मरणंविभो ॥ ४६ ॥ ज्ञानामृतैककलशोधृतिज्योत्स्नानिशाकरः ॥ अपवर्गपुरद्वारंत्वदनुस्मरणंप्रभो ॥ ४७ ॥ त्वदनुस्मरणोदारचिंतामाणिमतामया ॥ सर्वासामापदांमूर्ध्निदत्तंभूतपतेपदम् ॥ ४८ ॥ इत्युक्त्वासुप्रसन्नंतंभगवंतंमहेश्वरम् ॥ अवोचंप्रणतोभूत्वायद्रामतदिदंशृणु ॥ ४९ ॥ भगवंस्त्वत्प्रसादेनपूर्णामेसकलादिशः ॥ किंतुपृच्छामिदेवेशसंदेहंतत्रनिर्णयम् ॥ ५० ॥ ब्रूहिप्रसन्नयाबुद्ध्यात्यक्तोद्वेगमनामयम् ॥ सर्वपापक्षयकरंसर्वकल्याणवर्धनम् ॥ ५१ ॥



त्वदनुस्मरणं भूतस्यपुण्यस्य पुराकृतस्यसुकृतस्यफलं अपुण्यस्यासंभवात् । वर्तमानस्यपुण्यस्यसेचनंतनोति पुण्यंसंवर्धयतीत्यर्थः । ईश्वरानुस्मरणेनपुण्यस्यसाद्गुण्यात् एष्यतोभविष्यतःपुण्यस्यबीजं ईश्वरस्मरणपूतचेतसःपुण्यकरणेच्छाप्रवृत्तेः ॥४६॥४७॥४८॥४९॥५०॥५१॥

॥ ५२ ॥ नेति ॥ सार्धत्रयंवाक्यम् । साकारस्यवस्तुनःपरिच्छिन्नत्वात् नश्वरत्वाच्चाकृत्रिममनाद्यंतंदेवनं चिन्मात्रमेवदेवशब्दार्थः ॥ ५३ ॥ आकारेति ॥ आकारादिभिःपरिच्छिन्नेमितेवस्तुनि देवत्वेनाभ्युपगम्यमानत्वेसति तदकृत्रिमत्वादिदेवलक्षणंकुतःसंभवेत् । तस्मादकृत्रिमत्वादिलक्षणंदेवनमेवचिच्छिवं चिद्रूपंशिवंविदुः ॥ ५४ ॥ ५५ ॥ अज्ञातेति ॥ अज्ञातशिवतत्त्वानां ईदृशंचिच्छिवमजानताम् ॥ ५६ ॥ चिदिति ॥ पारावारविवर्जितं उत्तरपूर्वावधिरहितं असंभवच्चेत्यंदृश्यासंस्पृष्टंयद्वस्तुकल्पांतेषुचशिष्यतेतदेवचिद्व्योमसर्वत्रास्ति ॥ ५७ ॥ बोधइति ॥ बोधस्तत्त्वज्ञानं साम्यंतस्यपूर्णतादृष्टिः शमोनिर्विकारचित्ततेति । तस्याचिच्छिवस्यअग्र्याणिश्रेष्ठानिपुष्पाणितैःशिवंपूज्यंविदुः ॥ ५८ ॥ ५९ ॥

देवार्चनविधानंतत्कीदृशंभवतिप्रभो ॥ महेश्वरउवाच ॥ शृणुब्रह्मविदांश्रेष्ठदेवार्चनमनुत्तमम् ॥ ५२ ॥ नदेवःपुंडरीकाक्षोनचदेवस्त्रिलोचनः ॥ नदेवोदेहरूपोहिनदेवश्चित्तरूपकः ॥ अकृत्रिममनाद्यंतंदेवनंदेवउच्यते ॥ ५३ ॥ आकारादिपरिच्छिन्नेमितेवस्तुनितत्कुतः ॥ अकृत्रिममनाद्यंतंदेवनंचिच्छिवंविदुः ॥ ५४ ॥ देवःकःस्यादितित्वेतत्प्रथमंतावदुच्यते ॥ तदेवदेवशब्देनकथ्यतेतत्प्रपूजयेत् ॥ ५५ ॥ अज्ञातशिवतत्त्वानामाकाराद्यर्चनंकृतम् ॥ योजनाध्वन्यशक्तस्यक्रोशाध्वापरिकथ्यते ॥ ५६ ॥ चिद्व्योमैवकिलास्तीहपारावारविवर्जितम् ॥ सर्वत्रासंभवच्चेत्यंकल्पांतेषुचशिष्यते ॥ ५७ ॥ बोधःसाम्यंशमश्चेतिपुष्पाण्यग्र्याणितस्यतैः ॥ शिवंचिन्मात्रममलंपूज्यंपूजाविदोविदुः ॥ ५८ ॥ शमबोधादिभिःपुष्पैर्देवआत्मायदर्च्यते ॥ तत्तुदेवार्चनंविद्धिनाकारार्चनमर्चनम् ॥ ५९ ॥

अकृत्रिममिति ॥ अबहिःसाधनासाध्यं बहिःसाधनादिभिर्बाह्यप्रयत्नैःअसाध्यंकैवल्यंसुखंतस्मात्पूर्वोक्ताद्देवार्चनादवाप्यते ॥ ६० ॥ देवपूजायाबाह्याभ्यंतरभेदेनद्वैविध्यस्यवक्ष्यमाणत्वात् बाह्यपूजांवक्तुंतदुचितांदेवतामाह ॥ संविदिति ॥ सर्वकलातीता निवृत्तिप्रतिष्ठाविद्याशांतिशांत्यतीताख्यपंचकलातीता पंचभूतात्मप्रपंचातीतेत्यर्थः । यदुक्तमंबास्तवे । भूमौनिवृत्तिरुदितापयसिप्रतिष्ठाविद्यानलेमरुतिशांतिरतीतशांतिः । व्योम्नीतियःकिलकलाःकलयंतितत्त्वंतासांहिदूरतममंबपदंत्वदीयमिति ॥ सदसतोःकारणकार्ययोर्भावाभावयोर्वामध्ये सत्तासामान्यरूपिणीसंविन्महासत्तात्मतांप्राप्ता अंतर्बहिश्चसर्वत्रपरिपूर्णतयामहासत्ताशब्दवाच्यासती देवशब्देनकथ्यते ॥ ६१ ॥ विकल्पे

अकृत्रिममनाद्यंतमद्वितीयमखंडितम् ॥ अबहिःसाधनासाध्यंसुखंतस्मादवाप्यते ॥ ६० ॥ संवित्सर्वकलातीतासर्वभावांतरस्थिता ॥ नित्यंसदसतोर्मध्येसत्तासामान्यरूपिणी ॥ महासत्तात्मतांप्राप्तादेवशब्देनकथ्यते ॥ ६१ ॥ विकल्पकलितासैवचित्स्वरूपपरिच्युता ॥ जाड्यंक्रमाद्भावयंतीप्रयातिकलनास्पदम् ॥ ६२ ॥ देशकालादिशक्तीनामुल्लासैर्वलिताक्रमात् ॥ जीवोभूत्वाभवत्याशुबुद्धिःपश्चादहंमनः ॥ ६३ ॥ मनस्त्वंसमुपायातासंसारमवलंबते ॥ चंडालोऽस्मीतिमननाच्चंडालत्वमिवद्विजः ॥ ६४ ॥ इयमस्मीतिबोधेनदेहस्थापरिपातिनी ॥ मग्नामोहमहापंकेदुःखाद्दुःखंव्रजत्यसौ ॥ ६५ ॥

ति ॥ सैवसंविद्विकल्पकलिताजाड्यंभावयंतीक्रमाच्चित्स्वरूपात्परिच्युतासती कलनापदंदृश्यभावंप्रयाति ॥ ६२ ॥ एतदेवविवृणोति ॥ देशेति ॥ देशकालादिशक्तीनामुल्लासैःप्रभावैर्वलिताक्षुभितासती क्रमाज्जीवोभूत्वाआशुबुद्धिर्भवति पश्चादहंकारोभवति पश्चान्मनोभवति ॥ ॥ ६३ ॥ मनस्त्वमिति ॥ संसारमवलंबते मनोमूलत्वात्तस्य । यथाहिकश्चिद्द्विजोबाल्यएवदेशांतरेनीतोऽपिविमोहाच्चंडालैःसहचिरमुषित्वा तदीयान्नपानदूषितब्राह्मण्यः पश्चात्कथंचित्प्रबुध्यापिचंडालोऽस्मिममतंतत्संबंधादितिमन्यमानश्चंडालत्वमवलंबतेतद्वदित्यर्थः ॥ ६४ ॥ इयमिति ॥

असौसंविदियमहमस्मीतिपरिच्छिन्नभावेनदेहस्थासतीपरिपातिनीदेहाभिमानेनतदपायवतीदुःखाद्दुःखंव्रजति ॥ ६५॥ पुष्टमिति ॥ इदंसं सारदुःखंयस्मात्कारणात्संकल्पमात्रेणैवागतंतेनैवपुष्टंसंवर्धितंच ततस्मात्कारणात् असंकल्पनमात्रेण संकल्पाभावेनैव क्षयिक्षीयते । अतोऽत्रसंसारेकाकदर्थिता नकाचिदित्यर्थः ॥ ६६ ॥ ६७ ॥ ६८ ॥ ६९ ॥ सर्वेति ॥ आत्मासर्वशक्तिमयत्वाच्छक्तिमंडलस्यतांडवैरुल्लासैः संसारंतन्निवृत्तिंचसर्वमासादयति ॥ ७० ॥ शक्तयःकाइत्याशंक्याह ॥ इच्छेतिश्लोकद्वयंवाक्यम् ॥ इच्छादीनांसत्ताहेतुत्वात् अभेदोप

पुष्टंसंकल्पमात्रेणयदिदंदुःखमागतम् ॥ तदसंकल्पमात्रेणक्षयिकात्रकदर्थिता ॥ ६६ ॥ यत्किंचिदपि संकल्प्यनरोदुःखेनिमज्जति ॥ नाकिंचिदपिसंकल्प्यसुखमव्ययमश्नुते ॥ ६७ ॥ स्वविवेकानिलैःकृत्वा संकल्पजलदक्षयम् ॥ परांनिर्मलतामेहिशरदीवनभोंतरम् ॥ ६८ ॥ स्वसंकल्पनकालुष्यंविनिवार्या त्मनात्मनः ॥ परंप्रसादमासाद्यपरमानंदवान्भव ॥ ६९ ॥ सर्वशक्तिमयोह्यात्माशक्तिमंडलतांडवैः ॥ संसारंतन्निवृत्तिंचसर्वमासादयत्यलम् ॥ समचिन्मात्ररूपस्यसर्वस्यानाकृतेरपि ॥ ७० ॥ इच्छास त्ताव्योमसत्ताकालसत्तातथैवच ॥ तथानियतिसत्ताचमहासत्ताचसुव्रत ॥ ७१ ॥ ज्ञानशक्तिःक्रियाश क्तिःकर्तृताऽकर्तृतापिच ॥ इत्यादिकानांशक्तीनामंतोनास्तिपरात्मनः ॥ ७२ ॥

चारेणेच्छैवसत्तेत्येवंसामानाधिकरण्यनिर्देशः । तथाहि कस्यचिद्वस्तुनःइच्छामात्रेणैवसत्तासंपद्यते यथासुखादेः । कस्यचित्तुव्योम्नायथाश ब्दादेः । कस्यचित्तुकालेनयथापल्लवकुसुमादेः । कस्यचिन्नियत्यायथाद्वीपांतरएव । केषांचिद्वस्तूनांमहासत्तापुनःसर्वत्रास्तिप्रत्ययहेतुःआ त्मनःस्वरूपसत्ता ॥ ७१ ॥ ज्ञानशक्तिः ज्ञानहेतुःशक्तिरित्थंक्रियाशक्तिःकर्तृताक्रियासमवायहेतुःसत्ताशक्तिःअकर्तृतातद्विपरीता इत्या दीनांपरात्मशक्तीनामंतोनास्ति ॥ ७२ ॥

उल्लासेति ॥ संसारोज्जृंभणहेतुःउल्लासशक्तिःतन्निवृत्तिहेतुःनिरोधशक्तिरित्यर्थः ॥ ७३ ॥ ७४ ॥ ७५ ॥ तस्मादितिश्लोकपंचकंवा क्यम् ॥ यस्मादस्यदेवस्यध्यानमेवपूजनं तस्मादित्थंत्रिभुवनाधारंदेवंध्यानेननित्यंपूजयेदित्यन्वयः । समस्ताभासभासनंसर्वेषांप्रकाश कानांसूर्यादीनामपिप्रकाशकं अंतस्थचित्प्रकाशंशरीरांतःस्फुरच्चित्प्रकाशरूपं स्वंसर्वेषांस्वरूपभूतं आशयेहृदयेयाअहंताअहंभावःतस्यां सारं चिदचिदात्मकेऽहंकारेचिद्रूपस्यैवसारभूतत्वात्।तदुक्तंप्रेक्षणके। अहमित्यग्रिमबोधेचिदचिद्रूपेयदस्तिचिद्रूपम् । यत्तत्साक्षादपरोक्षंसूक्ष्मं



उल्लासशक्त्यासंसारःसर्वतःसंप्रवर्तते ॥ निरोधशक्त्यानिःशेषमयमायातिसंक्षयम् ॥ ७३ ॥ पूजाक्रमेषुसर्वेषुदेहदाहेपवित्रकम् ॥ त्याज्यदेहावबोधात्मग्राह्यंयत्नात्पवित्रकम् ॥ ७४ ॥ एषदेवःसपरमःपूज्यएषसदासताम् ॥ पूजनंध्यानमेवांतर्नान्यदस्त्यस्यपूजनम् ॥ ७५ ॥ तस्मात्त्रिभुवनाधारंनित्यंध्यानेनपूजयेत् ॥ चिद्रूपंसूर्यलक्षाभंसमस्ताभासभासनम् ॥ ७६ ॥ अंतस्थचित्प्रकाशंस्वंमहतांसारमाशये ॥ अपारपरमाकाशविपुलाभोगकंधरम् ॥ ७७ ॥ अनंताधस्तनाकाशकोशपादसरोरुहम् ॥ अनंतादिक्तटाभोगभुजमंडलमंडितम् ॥ ७८ ॥ नानाविधमहालोकगृहीतपरमायुधम् ॥ हृत्कोशकोणविश्रांतब्रह्मांडौघपरंपरम् ॥ ७९ ॥ प्रकाशपरमाकाशपारगापारविग्रहम् ॥ अधऊर्ध्वंचतुर्दिक्षुविदिक्षुचनिरंतरम् ॥ ८० ॥

ब्रह्मास्तितत्सूक्ष्मदृग्वेद्यमिति । अपारस्यपरमाकाशस्ययोविपुलआभोगोविस्तारःसएवकंधराकंठदेशोयस्य । अनंतस्याधस्तनाकाशस्य यः कोशोऽभ्यंतरविस्तारःसएवपादसरोरुहंयस्य ॥ ७६ ॥ ७७ ॥ ७८ ॥ नानाविधायेमहांतोलोकाभूरादयः तएवगृहीतानिस्वहस्तस्वीकृ तानिपरमान्यायुधानियस्य हृत्कोशकोणविश्रांतब्रह्मांडौघपरंपरमिति सिसृक्षितभाविब्रह्मांडाभिप्रायेणेतिवेदितव्यम् ॥ ७९ ॥ प्रकाशस्य

परमाकाशस्यपारगःस्वयमपारश्चविग्रहोयस्येति ॥ ८० ॥ ब्रह्मेति ॥ भूतपरंपरातस्यदेवस्यरोमालिरित्यर्थः ॥ ८१ ॥ विविधेति ॥ त्रिजगदेवयंत्रकल्पितंसंस्थानंपराधीनक्रियंद्रव्यंतस्यरज्जवःप्रवृत्तिहेतवः । इत्थंभूताइच्छाद्याःपूर्वोक्ताःशक्तयःतस्यशरीरगाश्रितनीयाः ॥ ८२ ॥ ॥ ८३ ॥ अनंतइति ॥ अनंतःनिरवधिकः पराधारःपरमात्मनःशक्तिरूपत्वात्तदाश्रयः सत्तामात्रैकविग्रहःतद्रूपत्वात् विवर्तितजगज्जालः विविधंप्रवर्तितंजगज्जालंयेन कानिचिज्जगंतिबहिर्निःसारयति । कानिचित्त्वंतःप्रवेशयति । कानिचित्तुतथैवस्थापयतीतिकृत्वा सोऽयंप्रसि

ब्रह्मेंद्रहरिरुद्रेशप्रमुखामरमंडितम् ॥ इमांभूतश्रियंतस्यरोमालिंप्रविचिंतयेत् ॥ ८१ ॥ विविधारंभकारिण्यस्त्रिजगद्यंत्ररज्जवः ॥ इच्छाद्याःशक्तयस्तस्यचिंतनीयाःशरीरगाः ॥ ८२ ॥ एषदेवःसपरमःपूज्यएवसदासताम् ॥ चिन्मात्रोह्यनुभूतात्मासर्वगःसर्वसंश्रयः ॥ ८३ ॥ अनंतःसपराधारःसत्तामात्रैकविग्रहः ॥ विवर्तितजगज्जालःकालोऽस्यद्वारपालकः ॥ ८४ ॥ सर्वत्रेक्षणशक्त्याढ्यंसर्वतोघ्राणशक्तिकम् ॥ सर्वतःस्पर्शनमयंसर्वतोरसनान्वितम् ॥ ८५ ॥ सर्वत्रश्रवणाकीर्णंसर्वत्रमननान्वितम् ॥ सर्वतोमननातीतंसर्वत्रपरमंशिवम् ॥ इतिसंचिंत्यदेवेशमर्चयेद्विधिवत्ततः ॥८६॥ स्वसंविदात्मादेवोऽयंनोपहारेणपूज्यते॥नित्यमक्लेशलभ्येनशीतलेनाविनाशिना ॥ एकेनैवामृतेनैषबोधेनस्वेनपूज्यते॥८७॥

द्धः कालोऽस्यदेवस्यद्वारपालकःद्वाःस्थइवईश्वरेच्छानुसारेणजगतांप्रवर्तनात् ॥ ८४ ॥ सर्वत्रेतिसार्धश्लोकद्वयंवाक्यम् ॥ विश्वतश्चक्षुरित्यादिश्रुतेः । सर्वत्रसर्वेंद्रियशक्तियुक्तं सर्वतोमननातीतंमनोव्यापारागम्यं सर्वत्रपरमशिवरूपं देवेशमेवंपूर्वोक्तप्रकारेणसंचिंत्यविधिवदर्चयेत् ॥ ८५ ॥ ८६ ॥ पूजाविधौविशेषंदर्शयितुमाह ॥ स्वसंविदितिसार्धश्लोकत्रयंवाक्यम् ॥ अयंस्वसंविदात्मादेवोबाह्योपहारेणनपूज्यतेकिंत्वक्लेशलभ्येनशीतलेनचिंतासंतापरहितेनअविनाशिनाएकेनैवबोधामृतेनपूज्यते ॥ ८७ ॥

नकेवलंबोधामृतमुपहारएव अपितुपूजापितदेवेत्याह ॥ एतदिति ॥ अनारतमविच्छिन्नंअंतःस्थस्यशुद्धस्यचिन्मात्रस्यवेदनमनुसंधानंय दस्तिएतदेवध्यानंएषैवपरमापूजा ॥ ८८ ॥ अनारतानुसंधानप्रकारमेवाह ॥ पश्यन्निति ॥ स्वसंनिधानमात्रेणसूर्यवत्सर्वेंद्रियव्यापारा न्प्रवर्तयन्यःसर्वस्यसाक्षीसविशुद्धसंविन्मात्ररूपोऽहमिति सर्वदानुसंदध्यादित्यर्थः। तदुक्तंहस्तामलके । निमित्तंमनश्चक्षुरादिप्रवृत्तौनि





एतदेवपरंध्यानंपूजैषैवपरास्मृता ॥ यदनारतमंतःस्थशुद्धचिन्मात्रवेदनम् ॥ ८८ ॥ पश्यन्शृण्वन्स्पृ शन्जिघ्रन्नश्नन्गच्छन्स्वपन्श्वसन् ॥ प्रलपन्विसृजन्गृह्णन्शुद्धसंविन्मयोभवेत् ॥८९॥ ध्यानोपहारए वात्माध्यानमस्यमहार्चनम् ॥ विनातेनेतरेणायमात्मालभ्यतएवनो ॥ ९० ॥ ध्यानेनानेनसुमतेनि मेषांस्तुत्रयोदश ॥ मूढोऽपिपूजयित्वेशंगोप्रदानफलंलभेत ॥ ९१ ॥ पूजयित्वानिमेषाणांशतमेकमि तिप्रभुम् ॥ अश्वमेधस्ययज्ञस्यफलंप्राप्नोतिमानवः ॥ ९२ ॥ पूजयित्वास्वमात्मानंघटिकार्धंत्वितिप्र भुम् ॥ अश्वमेधसहस्रस्यफलंप्राप्नोतिमानवः ॥ ९३ ॥ ध्यानबल्युपहारेणस्वयमात्मानमात्मना ॥ घ टिकांपूजयेद्यस्तुराजसूयंलभेतसः ॥ ९४ ॥ मध्याह्नपूजनादित्थंराजसूयैकलक्षभाक् ॥ दिवसंपूजयित्वै वंपरेधाम्निवसेन्नरः ॥ ९५ ॥ एषोऽसौपरमोयोगइयंसापरमाक्रिया ॥ बाह्यसंपूजनंप्रोक्तमेतदुत्तममात्म नः ॥ इदानींसंप्रवक्ष्येऽहमंतःपूजनमात्मनः ॥ ९६ ॥



रस्ताखिलोपाधिराकाशकल्पः । रविर्लोकचेष्टानिमित्तंयथायःसनित्योपलब्धिस्वरूपोऽहमात्मेति ॥ ८९ ॥ ९० ॥ ९१ ॥ ९२ ॥ ॥ ९३ ॥ ९४ ॥ ९५ ॥ ध्यानकालातिशयेनफलातिशयंनिरूप्यबाह्यपूजामुपसंहरन् आभ्यंतरपूजामुपचक्रमते ॥ एषइति ॥ सार्धत्रयं

वाक्यम् ॥ परमाक्रियापरमंतपः ॥ ९६ ॥ नित्यमितिश्लोकद्वयंवाक्यम् ॥ शरीरस्थंदेहाभिमानिनंजाग्रदाद्यवस्थासुबहुधाव्यापृतमिम मेवजीवंपरंशिवंध्यायेदित्यन्वयः ॥ ९७ ॥ ९८ ॥ प्रवाहेतिश्लोकद्वयंवाक्यम् ॥ प्रवाहपतितार्थस्थस्वबोधस्नानशुद्धिमान् प्रवाहोऽत्रब हिर्मुखश्चित्तवृत्तिप्रवाहः तत्पतितस्तद्विषयोऽर्थोघटादिः तत्स्थंतत्रप्रतिफलितंतच्चतत्स्थंचस्वरूपचैतन्यंचघटाद्याकारायांचित्तवृत्तौप्रतिबिंबित मात्मचैतन्यमित्यर्थः । तस्यबोधोऽनुसंधानम् । तदेवस्नानंहिप्रवाहपतितार्थस्थितस्यस्वरूपस्यावबोधः तेनशुद्धिमान्शुद्धःसन्मनोमनन शक्तिस्थंमनसोयामननशक्तिःतत्स्थंतत्प्रवर्तकं प्राणापानयोरंतरेउदितंतयोःप्रवर्तकत्वात् । तदुक्तंसांबेन । प्राणापानौवहतिचसमौयोमि

नित्यमेवशरीरस्थमिमंध्यायेत्परंशिवम् ॥ शयानमुत्थितंचैवव्रजंतमथवास्थितम् ॥ ९७ ॥
स्पृशंतमभितःस्पृश्यंत्यजंतमथवाभितः ॥ भुंजानंसंत्यजंतंचभोगानाभोगपीवरान् ॥ ९८ ॥
प्रवाहपतितार्थस्थस्वबोधस्नानशुद्धिमान् ॥ नित्यावबोधार्हणयाबोधलिंगंप्रपूजयेत् ॥ ९९ ॥
मनोमननशक्तिस्थंप्राणापानांतरोदितम् ॥ हृत्कंठतालुमध्यस्थंभ्रूनासापुटपीठगम् ॥ षट्त्रिं शत्पदकोटिस्थमुन्मन्यंतदशातिगम् ॥ १०० ॥ सहस्रपादावयवःसकेशनखदंतकः ॥ स्वदेहे संविदाभासोदेवोऽयमितिभावयेत् ॥ १ ॥

थोग्रासससक्तौदेहस्थंतंसपदिपरमादित्यमाद्यंप्रपद्येइति । हृत्कंठतालुमध्यस्थं हृन्मध्येकंठमध्येतालुमध्येचस्थितं हृदादीनांमर्मस्थानतयात त्रविशेषेणाभिव्यक्तं भ्रूनासापुटपीठगंभ्रूमध्येनासाग्रेचोपास्यं इत्थंभूतंबोधरूपंलिंगं नित्यावबोधार्हणयानिरंतरानुसंधानरूपयापूजयाप्रपूज येत् । लिंगंहिशक्त्यायुक्तंहिपिंडिकांतरेउदितंमध्यस्थंपीठगंचभवतितद्वदिदमितिभावः ॥ ९९ ॥ १०० ॥ सहस्रेतिश्लोकपंचकंवाक्य म् ॥ हस्तपादादिसर्वावयवप्राप्तचैतन्यः स्वदेहेवर्तमानोयश्चिदाभासःअहंकारप्रतिबिंबितचैतन्यरूपोजीवःअहमितिप्रतीयते अयमेवदेवः

बिंबप्रतिबिंबयोरभेदात् ॥ १ ॥ मनोदृशांबाह्येंद्रियाणां मनसोबाह्यार्थग्रहणसाधनत्वात् मनएवदृग्येषामिति बहुव्रीहिर्वा । मनोविनाबाह्येंद्रियाणांस्वस्वविषयग्रहणासामर्थ्यात् तेषांमनोदृशांनानाचाराःपृथग्भूतव्यापारा अतएवविचित्राबह्वयःशक्तयोरूपादिग्रहणसामर्थ्यरूपाः पत्न्यः कांतंस्ववल्लभमिवमांसर्वेंद्रियशक्तिप्राणप्रदंजीवात्मरूपंदेवमनिशमुपासते ॥ २ ॥ इत्थंभूतस्यदेवस्यमे निवेदितजगत्त्रयं विज्ञापितविश्ववृत्तांतंमनएवद्वारपालः इत्थंबाह्यार्थविषयाचिंतैवमेद्वारस्थाशुद्धरूपिणीविश्वसनीयाप्रतीहारीअंतःपुरस्था ॥ ३ ॥ विचित्राणिविविधवस्तुविषयाणिज्ञानानिचमेअंगानिअवयवगतानिभूषणानि स्वरूपशोभाहेतुत्वात् । कर्मेंद्रियाणिवागादीनिबुद्धींद्रियगणैः

विचित्राःशक्तयोबह्वयोनानाचारामनोदृशाम् ॥ उपासतेमामनिशंपत्न्यःकांतमिवोत्तमम् ॥ २ ॥
मनोमेद्वारपालोऽयंनिवेदितजगत्त्रयम् ॥ चिंतेयंमेप्रतीहारीद्वारस्थाशुद्धरूपिणी ॥ ३ ॥ ज्ञानानि
चविचित्राणिभूषणान्यंगगानिमे ॥ कर्मेंद्रियाणिद्वाराणिबुद्धींद्रियगणैःसह ॥ ४ ॥ अयंसोऽह
मनंतात्माव्यवच्छेदोज्झिताकृतिः ॥ तिष्ठामिभरितैकात्मापूर्णःसर्वावपूरकः ॥ ५ ॥ समःसमर
साचारःसमाभासःसमाकृतिः ॥ सौम्यतामलमायातिपूजयित्वैवमव्ययम् ॥ ६ ॥

सहमेद्वाराणि बहिर्विहारहेतुत्वात् । अत्रचबुद्धींद्रियाण्येवगणाःविचित्ररूपत्वाच्चिच्छिवोपासकत्वाच्च ॥ ४ ॥ अयमपरोक्षतयाप्रतीयमानः सोऽहंशिवरूपोऽहं व्यवच्छेदोज्झिताकृतिःपरिच्छेदरहितस्वरूपत्वादनंतात्मानिरवधिकात्मा पूर्णःसर्वैःपूरितः मयिसमस्तवस्तुसंभवात् । सर्वावपूरकःअंतर्यामितयासर्ववस्तुपूरणात् । इत्थंभरितैकात्माअखंडाद्वितीयरूपस्तिष्ठामिइत्येवंभावयेदित्यन्वयः ॥ ५ ॥ समइति ॥ समःपूर्णत्वात्समरसाचारःरागद्वेषरहितत्वादेकप्रकारव्यवहारः समाभासःसर्वप्राणिनांचित्तेषुममैवायंप्रियइत्येकरूपतयावभासमानः समाकृतिःसर्वदानिर्विकारत्वादित्थंभूतःसन् अव्ययमात्मानमेवंपूर्वोक्तेनप्रकारेणपूजयित्वाअलंसम्यक्सौम्यतांजीवन्मुक्ततामायाति ॥ ६ ॥

समयेति ॥ देववित्पूर्वोक्तदेवस्वरूपज्ञःचिन्मात्रंपरंदेवं समयारागादिरहितयासर्वयासर्वेंद्रियजन्ययाबुद्ध्या यथाप्राप्तक्रमोत्थेनसमुचितव्यापा रसिद्धेनसर्वार्थेनचसमर्चयेत् ॥ ७ ॥ मनागिति ॥ अत्रपूजाविधौमनागपिईषदपि अपूर्ववस्तुनिदुर्लभवस्तुनि लाभाययत्नोनकर्तव्यः । किंतर्हिकामसंवेदनेनइष्टवस्तुनिवेदनेन चेतनरूपंशिवंपूजयेत् ॥ ८ ॥ ९ ॥ एतदेवविवृणोति ॥ कांतान्नपानसंभोगसंभारादिविलासिना । कांतैर्मनोहरैरन्नैः पानैःसंभोगसंभारैःस्रक्चंदनादिभिरादिशब्दग्राह्यैरन्यैश्चसुखसाधनैर्विलासिनासर्वरूपेणसर्वप्रकारेण सुखेनात्मानंसंबुध्यस

समयासर्वयाबुद्ध्याचिन्मात्रंदेववित्परम् ॥ यथाप्राप्तक्रमोत्थेनसर्वार्थेनसमर्चयेत् ॥ ७ ॥ मनागपिनकर्तव्योयत्नोऽत्रापूर्ववस्तुनि ॥ कामसंवेदनेनाथपूजयेच्चेतनंशिवम् ॥ ८ ॥ भक्ष्यभोज्यान्नपानेननानाविभवशालिना ॥ शयनासनयानेनयथाप्राप्तेनचार्चयेत् ॥ ९ ॥ कांतान्नपानसंभोगसंभारादिविलासिना ॥ सुखेनसर्वरूपेणसंबुध्यात्मानमर्चयेत् ॥ १० ॥ आधिव्याधिपरीतेनमोहसंरंभशालिना ॥ सर्वोपद्रवदुःखेनप्राप्तेनात्मानमर्चयेत् ॥ ११ ॥ दारिद्र्येणाथराज्येनप्रवाहपतितात्मना ॥ विचित्रचेष्टापुष्पेणशुद्धात्मानंप्रपूजयेत् ॥ १२ ॥ भोगानामनिषिद्धानांनिषिद्धानांचसर्वदा ॥ त्यागेनचाथरागेणस्वात्मानंबुद्धमर्चयेत् ॥ १३ ॥

म्यक्शिवरूपंबुद्ध्वार्चयेत् ॥ १० ॥ आधीति ॥ अत्रदुःखस्यपापरूपकालुष्यनिर्वर्तकत्वादुद्वर्तनादिकल्कद्रव्यवत्आत्मोपयोगित्वात्पूजासाधनत्वंद्रष्टव्यम् ॥ ११ ॥ दारिद्र्येणेति ॥ प्रवाहपतितात्मनावासनाप्रवाहादागतेन विचित्रचेष्टापुष्पेण हितेनविचित्रचेष्टाबुद्धिहेतुना दारिद्र्येणराज्येनवा शुद्धात्मानंदेहादिव्यतिरिक्तमात्मानंसमर्चयेत् ॥ १२ ॥ भोगानामिति ॥ अनिषिद्धानांरागेणनिषिद्धानांत्यागे नचेत्यन्वयः ॥ १३ ॥

नष्टमिति ॥ एतन्नष्टोपेक्षणंप्राप्तोपादानंचेत्यर्थः । निर्विकारतयाहर्षविषादादिविकारनिवृत्तिहेतुतया ॥ १४ ॥ आपातेति ॥ आपातरम णीयंप्राथमिकदृष्टावुपादेयमिवप्रतीयमानंसुखंतत्साधनंवायदस्ति तथाआपातसुदुःसहंप्रतिकूलतयाप्रतीयमानंदुःखंतत्साधनंचयत् एतदु भयमपिनित्यात्मार्चापरोनरःआत्ममयंआत्मसमर्पणेनतद्रूपंकुर्यात् ॥ १५ ॥ सर्वदेति ॥ सर्वदासर्वस्मिन्काले सर्वरूपेणनानारूपेण स र्वत्रअंतर्बहिर्दिक्षुचयद्वस्तुस्थितंतत्सर्वंब्रह्मैवेतिनिश्चित्यनित्यात्मार्चाव्रतंचरेत् । प्रतीतस्यसर्वस्यात्मार्पणेनब्रह्मभावनिश्चयएवात्मार्चनव्रत मित्यर्थः ॥ १६ ॥ नेति ॥ ज्ञेनज्ञानिना अप्राप्तंअवांछताप्राप्तंचनत्यजतास्वभावतःप्राप्ताभोगभूतयःसागरेणसरितइवभोक्तव्याः । तदु

नष्टंनष्टमुपेक्षेतप्राप्तंप्राप्तमुपाहरेत् ॥ निर्विकारतयैतद्धिपरमार्चनमात्मनः ॥ १४ ॥ आपातरम णीयंयत्तथापातसुदुःसहम् ॥ सर्वमात्ममयंकुर्यान्नित्यात्मार्चापरोनरः ॥१५॥ सर्वदासर्वरूपेणय त्सर्वत्रस्थितंहितम् ॥ सर्वंब्रह्मेतिनिश्चित्यनित्यात्मार्चाव्रतंचरेत् ॥ १६ ॥ नवांछतानत्यजताज्ञे नप्राप्ताःस्वभावतः ॥ सरितःसागरेणेवभोक्तव्याभोगभूतयः ॥ १७ ॥ उद्वेगोनानुगंतव्यस्तुच्छा तुच्छासुदृष्टिषु ॥ व्योम्नाचित्रपदार्थैषुपतितापतितेष्विव ॥ १८ ॥ देशकालक्रियायोगाद्यदुपैति शुभाशुभम् ॥ अविकारगृहीतेनतेनैवात्मानमर्चयेत् ॥ १९ ॥

क्तंगीतासु । आपूर्यमाणमचलप्रतिष्ठंसमुद्रमापःप्रविशंतियद्वत् । तद्वत्कामायंप्रविशंतिसर्वेसशांतिमाप्नोतिनकामकामीति ॥ १७ ॥ उद्वेग इति ॥ तुच्छातुच्छासुदृष्टिषुशून्याशून्यरूपासुपदार्थप्रतिपत्तिषु तेनउद्वेगश्चित्तविकारोनानुगंतव्यः । चित्रेषुनानारूपेषुपक्षिमृगादिषुपदार्थे षु पतितेषुअपतितेषुवा व्योम्नायथा उद्वेगःविकृतिर्नानुगम्यतेतद्वत् ॥ १८ ॥ देशेति ॥ देशकालकर्मवशात् शुभमशुभंवायद्वस्तुसमुपै ति अविकारगृहीतेननिर्विकारस्वीकृतेनतेनैवशुभाशुभरूपेणवस्तुनाआत्मानमर्चयेत् ॥ १९ ॥

निर्विकारचित्ततारूपंशमंप्रशंसन्नाह ॥ आत्मेतिश्लोकद्वयंवाक्यम् ॥ अस्मिन्नात्मार्चनविधाने याःशुभाशुभरूपाद्रव्यश्रियःपदार्थसंपदःप्रोक्ताः ताश्चित्रैरसैर्दिग्धाःउपचिताअपिएकेनैवशमेनरसेनभाविताःवासिताःसत्यो रसांतरंअम्लकटुतिक्तकषायादिकंपरित्यज्यमधुराएवभवंतिकिल माधुर्यमिहरम्यता ॥२०॥२१॥ समतेति ॥ समतारूपामधुरत्वात् रस्यास्वादनीयायारसक्तिः रसरूपाशक्तिरस्तितयारसशक्त्याभावितंयच्चेत्यंदृश्यं तत्सर्वंक्षणादेवामृतंमधुरमेवभवेत् ॥२२॥ समतेति ॥ इंदोश्च्युतममृतमिवपरंमाधुर्यमायातीत्यन्वयः ॥२३॥ पूर्णेति ॥ ज्ञेनज्ञा

आत्मार्चनविधानेऽस्मिन्प्रोक्ताद्रव्यश्रियस्तुयाः ॥ एकेनैवसमेनैतारसेनपरिभाविताः ॥ २० ॥
नाम्लानकट्व्योनोतिक्तानकषायाश्चकाश्चन ॥ चित्रैरपिरसैर्दिग्धामधुराएवताःकिल ॥ २१ ॥
समतामधुरारस्यारसशक्तिरतींद्रिया ॥ तयायद्भावितंचेत्थममृतंतत्क्षणाद्भवेत् ॥ २२ ॥ सम
तामृतरूपेणयद्यन्नामविभाव्यते ॥ तत्तदायातिमाधुर्यंपरमिंदोरिवच्युतम् ॥ २३ ॥ पूर्णेंदुनेवपू
र्णेनभाव्यंसमसमत्विषा ॥ स्वच्छेनचिद्घनैकेनज्ञेनाप्युपलरूपिणा ॥ २४ ॥ देशकालकरणक्रमो
दितैःसर्ववस्तुसुखदुःखविभ्रमैः ॥ नित्यमर्चितशरीरनायकस्तिष्ठशांतसकलेच्छयाधिया ॥ २५॥
ईश्वरउवाच॥अविद्यांश्रेष्ठयाश्रेष्ठःक्षालयन्नेवतिष्ठति॥मलंमलेनापहरन्युक्तिज्ञोरजकोयथा ॥२६॥

निनासमेनसमत्विषाएकरूपचित्तवृत्तिनाअतश्चपूर्णेंदुनेवपूर्णेनस्वच्छेनचिद्घनैकेनब्रह्मणासहएकीभूतेन उपलरूपिणापाषाणवन्निर्विकाररूपेणभाव्यम् ॥ २४ ॥ देशेति ॥ देशकालौप्रसिद्धौ करणंपुरुषव्यापारः तेषांक्रमेणपरिपाट्योदितैः सर्वेषांवस्तूनांसुखदुःखरूपैर्विभ्रमैर्विलासैर्नित्यमर्चितः शरीरनायकआत्मायेनसताादृशःसन्शांतसकलेच्छयाधियोपलक्षितस्तिष्ठ ॥ २५ ॥ आत्मार्चनेऽत्रज्ञानस्यापेक्षितत्वात्तत्सिद्धयेअविद्यामलक्षालनोपायमाह ॥ अविद्यामिति ॥ श्रेष्ठः पापःपुमान् श्रेष्ठयाशुद्धसत्त्वजन्यत्वादुत्कृष्टयाविमलवासनारूपयाअवि

द्यैवअविद्यांमलवासनारूपांक्षालयन्नेवतिष्ठति । यथाहि युक्तिज्ञउपायवित्रजकोवस्त्राणामलंऊषरादिनामलेनैवापहरतितद्वत् ॥ २६ ॥ अ
हेतवइति ॥ वस्तुतःअहेतवोऽपिगुरूपदेशाद्याः श्रेष्ठाः अविद्यांशाः क्रमात्कुतश्चिदुपायादात्मज्ञानस्यसिद्धयेकारणतांगताः ॥ २७ ॥ एत
देवस्पष्टीकर्तुमाह ॥ क्रमइति ॥ गुरूपदेशानांक्रमेशिष्यस्यबोधनेप्रवृत्तेसति अनिर्देश्योगुरुणाशब्दैःप्रतिपादयितुमशक्योऽपि विशेषेणचि
त्तवृत्त्याअदृश्योऽपि साक्षात्कर्तुमशक्योऽपि आत्मास्वयमेवप्रसीदतिप्रकाशते । तदुक्तंसूतसंहितायाम् । स्वच्छवृत्तिमनुप्राप्यवृत्तेःसाक्षित

अहेतवोऽप्यविद्यांशाःश्रेष्ठाःकारणतांगताः ॥ क्रमाद्गुरूपदेशाद्याआत्मज्ञानस्यसिद्धये ॥ २७ ॥
क्रमेगुरूपदेशानांप्रवृत्तेशिष्यबोधनम् ॥ अनिर्देश्योऽप्यदृश्योऽपिस्वयमात्माप्रसीदति ॥ २८ ॥
शास्त्रार्थैर्बुध्यतेनात्मागुरोर्वचनतोनच ॥ बुध्यतेस्वयमेवैषस्वबोधवशतःस्वतः ॥ २९ ॥ गुरूपदे
शशास्त्रार्थैर्विनाचात्मानबुध्यते ॥ एतत्संयोगसत्त्वैवस्वात्मज्ञानप्रकाशिनी ॥ ३० ॥ गुरुशास्त्रा
र्थशिष्याणाचिरसंयोगसत्तया ॥ अहनीवजनाचारआत्मज्ञानंप्रवर्तते ॥ ३१ ॥ एवंदेवार्चनंनि
त्यंज्ञःकुर्वन्मुनिनायक ॥ यत्रास्मदादयोभृत्यास्तत्प्रयातिपरंपदम् ॥ ३२ ॥

यास्थितः ॥ वृत्त्यानिवर्त्यमज्ञानंग्रसतेस्वेनतेजसेति ॥ २८ ॥ आत्माशास्त्रैर्गुरुवाक्यैश्चइदंतयानावबुध्यते किंतर्हिस्वबोधवशतः स्वरू
पानुसंधानमहिम्नास्वतएवबुध्यते ॥ २९ ॥ यदिस्वतएवात्माबुध्यतेतर्हिगुरुशास्त्रादिभिःकिमित्याशंक्यतदुपयोगिप्रकारमाह ॥ गुरूपदे
शेति ॥ एतत्संयोगसत्त्वैव तेषांगुरुशास्त्रार्थशिष्याणांसंनिधिसत्त्वैव स्वात्मज्ञानप्रकाशिनी ॥ ३० ॥ गुर्विति ॥ अहनिसूर्यसंनिधौजना
चारोलोकव्यवहारइव ॥ ३१ ॥ एवमिति ॥ अस्मदादयोहरिहरादयोऽपियत्रयस्मिन्परब्रह्मपदेभृत्याः भृत्यवन्निकृष्टावर्ततइत्यर्थः ॥ ३२ ॥

आत्माचंनसर्वंब्रह्मेतिनिश्चित्यनित्यात्मार्चाव्रतंचरेदित्युक्तंतत्रजगतश्चिन्मयत्वेनब्रह्मभावंप्रतिपादयितुंचिद्विवर्तप्रक्रियांप्रस्तौति ॥ अविद्यमा नमिति ॥ आभासमात्रंचिन्मात्रमेव ॥ ३३ ॥ यइति ॥ यः प्रसिद्धः असौपरोक्षतयाप्रतीयमानोब्रह्मादिशब्दार्थः ब्रह्मपरमात्मापरंज्यो तिरित्यादिशब्दानामर्थः प्रतिपाद्यंवस्त्वस्ति तांकेवलांविशुद्धांचितिंविद्धि । सैवचिद्वेद्यंगच्छंतीवसतीनामयोग्यतांयाति ॥ ३४ ॥ क्षणा दिति ॥ सैवचिद्भावितवेद्यत्वाद्भावितंवेद्यंदृश्यंययातस्याभावःतत्त्वंतस्माद्वेद्यतादात्म्यभावनाद्धेतोरहंतामहंकाररूपतामनुगच्छति । पु मान्स्वप्नेवारणभावनयावारणतामिव ॥ ३५ ॥ अस्याइति ॥ अहंतारूपायाअहंकाररूपंप्राप्तायाः अस्याश्चितोनानारूपास्ताएवशक्तयोदे

अविद्यमानमेवेदंविद्यमानमिवस्थितम् ॥ आभासमात्रंत्रिजगन्नान्यदस्तिमुनीश्वर ॥ ३३ ॥ यो ऽसौब्रह्मादिशब्दार्थःसंविदंविद्धिकेवलाम् ॥ सावेद्यमिवगच्छंतीयातिचिन्नामयोग्यताम् ॥ ३४ ॥ क्षणाद्भावितवेद्यत्वादहंतामनुगच्छति ॥ पुमान्भावनयास्वप्नेवनवारणतामिव ॥ ३५ ॥ अस्या अहंतारूपायादेशतांकालतांगताः । संपद्यंतेस्वयंशून्यरूपिण्यःसख्यएवताः ॥ ३६ ॥ ताभिःसं वलितासैवसत्ताजीवाभिधानिका ॥ भूत्वाबुद्धित्वमायातिनित्यमज्ञपदेस्थिता ॥ ३७ ॥ जीव शक्तिस्तथाभूतानिश्चयैकविलासिनी ॥ शब्दशक्त्याक्रियाशक्त्याज्ञानशक्त्यानुगम्यते ॥ ३८ ॥

शकालतांदेशकालादिरूपतांगताःसत्यःस्वयमेवसख्यःसंपद्यंते । सहायभावंप्रतिपद्यंतइत्यर्थः ॥ ३६ ॥ ताभिरिति ॥ सैवचिन्मयीसत्ताता भिर्देशकालादिभिःशक्तिभिःसंवलितावेष्टितासती जीवाभिधानिकाजीवरूपाभूत्वाअज्ञपदेस्थितासती बुद्धित्वंबुद्धिरूपतामायाति ॥ ३७॥ जीवेति ॥ जीवशक्तिः जीवरूपाचिच्छक्तिः तथाभूताबुद्धित्वंप्राप्ता अतश्चनिश्चयैकविलासिनीबुद्धेर्निश्चयात्मकत्वान्निश्चयेनैकेनैवविलसंती शब्दशक्त्यादिभिरनुगम्यते । तत्रशब्दव्यवहारहेतुः शब्दशक्तिः । एवंज्ञानव्यवहारस्यक्रियाव्यवहारस्यचहेतूज्ञानक्रियाशक्ती ॥ ३८ ॥

मिलित्वेति ॥ एषगणः पूर्वोक्तोऽहंकारादिसमूहः शब्दशक्त्याद्यनुगतः स्मृतिंस्मरणशक्तिंसमनुकल्पयन्संकल्पशाखिनोबीजभूतंशुद्धात्म स्वच्छंमनोभवति । शून्यात्मेतिपाठेमायाकल्पिताकारमित्यर्थः ॥ ३९ ॥ आतिवाहिकेतिसार्धेन ॥ तदेवमनः आतिवाहिकदेहोक्तिभाजनं आतिवाहिकदेहइत्युक्तेरपिविषयंविदुः मनएवआतिवाहिकदेह इत्यर्थः । तदेवमनः सृष्टिप्रकरणोक्तप्रकारेणव्योमादिरूपतामेत्य नानारूपंसज्जगत्तयाविभाति ॥ ४० ॥ शून्यइति ॥ यथाहिवेतालः कल्पितत्वात् शून्यएवनपरमार्थः इत्थमनेनैवप्रकारेणचित्तवासनैवजग

मिलित्वैषगणःक्षिप्रंस्मृतिंसमनुकल्पयन् ॥ मनोभवतिशुद्धात्मबीजंसंकल्पशाखिनः ॥ ३९ ॥
आतिवाहिकदेहोक्तिभाजनंतद्विदुर्बुधाः ॥ परामर्शैकरूपिण्योह्यनंतास्तस्यशक्तयः ॥ व्योमादि
रूपतामेत्यजगन्नानाविभातितत् ॥ ४० ॥ शून्यएवहिवेतालइवेत्थंचित्तवासना ॥ उदितेयंज
गन्नाम्नीतच्छांतौशांतिरक्षता ॥४१॥ अहंतायांजगतिचमृगतृष्णाजलेचयः ॥ सास्थस्तंधिग्घत
नरंनोपदेश्यस्त्वसाविह ॥ ४२ ॥ जीवंविवेकिनामिहोपदिशंतितज्ज्ञानोबालमुद्भ्रमसन्मयमार्य
मुक्तम्॥अज्ञंप्रशास्तिकिलयःकनकावदातांसस्वप्नदृष्टपुरुषायसुतांददाति ॥४३॥ ईश्वरउवाच ॥
यथापृष्टंमुनेप्रोक्तंत्वयिकल्याणमस्तुते ॥ देशंप्रयामोऽभिमतमागच्छोत्तिष्ठपार्वति ॥ ४४ ॥

न्नाम्नीजगद्रूपाउदिता अतस्तस्याश्चित्तवासनायाःशांतौसत्यांअक्षताजगतःशांतिः कैवल्यमित्यर्थः ॥ ४१ ॥ अहंतायामिति ॥ यो नरः अहंतादिषुसास्थः परमार्थबुद्धियुक्तः तंहतनरंधिक् । असाविहब्रह्मविद्यायांनोपदेशार्हः ॥ ४२ ॥ जीवमिति ॥ इहतज्ज्ञाः ब्रह्मविदः विवेकिनमधिकारिणमेवमुपदिशंतिबोधयंति । उद्भ्रमंउद्भूतविपरीतज्ञानम् । अतएवार्यैः सभ्यैः अन्यैर्मुक्तंपरित्यक्तंअसन्मयंअविद्यमानक ल्पंबालंमूर्खंनोपदिशंति । यस्माद्धेतोरयोग्यमीदृशंप्रशास्तिमूढः स्वप्नदृष्टपुरुषायकन्यकाप्रदानमिवव्यर्थमित्यर्थः ॥ ४३ ॥ ४४ ॥

॥ ४५ ॥ ४६ ॥ अनेनेति ॥ इमाः संसारवासनाः अखिन्नेनेव विक्षेपरहितेनेव । मयाअतिवाह्यंतेनीयंते ॥ ४७ ॥ यथेति ॥ यथा प्राप्तक्रियाणामाचारानुष्ठानानि तैरेवकुसुमैरात्मार्चनंविच्छिन्नमपि लौकिकदृष्ट्याविच्छिन्नतयाप्रतीयमानमपि । मेनिरंतरानुसंधानवतः अहर्निशंकदाचिदपिनव्युच्छिन्नंभवति ॥ ४८ ॥ नन्वेतादृशमेवात्मार्चनंसर्वसुलभमेवेत्याशंक्ययोगिनोविशेषमाह ॥ ग्राह्येति ॥ सर्वेषामपि देहिनांग्राह्यग्राहकसंबंधः सामान्यएव तथापिपामराबहिर्मुखतयाबुभुक्षापिपासादिभिः पीडिताविचित्रमन्नपानादिकंभोक्ष्यामहेपास्याम

वसिष्ठउवाच ॥ इत्युक्त्वानीलकंठोऽसौत्यक्तपुष्पांजलौमयि ॥ ततारपरिवारेणसममंबरकोटरम् ॥ ४५ ॥ ततःप्रभृतितेनैवक्रमेणार्चनमात्मनः ॥ अद्ययावद्गतव्यग्रःकुर्वन्नहमवस्थितः ॥ ४६ ॥ अनेनार्चाविधानेनमयेमारामवासनाः ॥ अखिन्नेनेववाह्यंतेव्यवहारपराअपि ॥ ४७ ॥ यथाप्राप्तक्रियाचारकुसुमैरात्मनोऽर्चनम् ॥ व्युच्छिन्नमव्युच्छिन्नंमेनकदाचिदहर्निशम् ॥ ४८ ॥ ग्राह्यग्राहकसंबंधःसामान्यःसर्वजंतुषु ॥ योगिनःसावधानत्वंयत्तदर्चनमात्मनः ॥ ४९ ॥ दृष्ट्यानयारघुपतेसंगमुक्तेनचेतसा ॥ संसारविरलारण्येविहरास्मिन्नखिद्यसे ॥ ५० ॥ श्रीरामउवाच ॥ इदानींसंशयोब्रह्मन्विनिवृत्तोविशेषतः ॥ ज्ञातंज्ञातव्यमखिलंजातातृप्तिरकृत्रिमा ॥ ५१ ॥ परामभेद्यामपरैर्दलिताशामतंगजाम् । संसारसमरेसम्यग्धीरतामागतंमनः ॥ ५२ ॥

इतिव्याकुलाभवंति । योगीतुपूर्वोक्तप्रकारेणात्मैवदेवताइयंचविचित्राभोगसंपदस्यैवपूजेतिसावधानोवर्ततइतिविशेषः । तस्मादनुसंधानमेवपूर्वोक्तमात्मार्चनमित्यर्थः ॥ ४९ ॥ ५० ॥ ५१ ॥ परामिति ॥ दलिताशामतंगजांविदलितदिग्गजांनिवर्तितमनोरूपमतंगजामितिच ॥ ५२ ॥

परीति ॥ मेमनः विकल्परहितंगलितवांछं । अदीनंदैन्यरहितंअतएवसारसत्वंउत्कृष्टज्ञानं । प्रसन्नरूपंप्रमुदितंचसदनुत्तमंसर्वोत्तमंव र्ततइत्यन्वयः ॥ ५३ ॥ इतिश्रीमदल्लालसूरिसूनुनापदवाक्यप्रमाणपारावारपारदृश्वनाश्रीमुम्मडिदेवविद्वदाचार्येणविरचितेसंसारतरणिना म्निवासिष्ठविवरणेनिर्वाणप्रकरणेदेवपूजोपाख्यानंनामत्रिंशःसर्गः ॥ ३० ॥ पूर्वमपूर्वेणदेवपूजाविधानेनचित्तस्यांतर्मुखतयानिर्वाणमि त्युक्तम् । इदानीमद्वितीयंब्रह्मैवांतर्भावितसर्वार्थंव्याप्यस्थितमित्यत्र बिल्वफलंनिदर्शयन्नाख्यानांतमरभते ॥ तत्रचित्तसमाधयेप्रका



परिगलितविकल्पनामुपेतंप्रशमितवांछमदीनसारसत्वम् ॥ त्रिजगतियदतिप्रसन्नरूपंप्रमुदितमंतरनुत्तमंमनोमे ॥ ५३ ॥ इतिश्रीयोगवासिष्ठसारेमोक्षोपायेनिर्वाणप्रकरणेदेवपूजोपाख्यानं नामत्रिंशःसर्गः ॥३०॥ श्रीरामउवाच ॥ तववाक्यसुधासेकैर्नतृप्तिरुपजायते ॥ भूयःकथयमेब्रह्मन्कांचित्तत्त्वमयींकथाम् ॥ १ ॥ वसिष्ठउवाच ॥ यथाप्राप्तिक्षणेवस्तुप्रथमंतुष्टयेतथा ॥ नप्राप्त्येकक्षणादूर्ध्वमितिकोनानुभूतवान् ॥ २ ॥ वांछाकालेयथावस्तुतुष्टयेनान्यदातदा ॥ तस्मात्क्षणसुखेसक्तिंबालोबध्नातिनेतरः ॥ ३ ॥ वांछाक्षणेतुयातुष्टिस्तत्रवांछैवकारणम् ॥ तुष्टिस्त्वतुष्टिपर्यंतातस्माद्वांछांपरित्यज ॥ ४ ॥

रांतरेणबोधयितुमुपक्रमते ॥ १ ॥ यथेति ॥ वांछितंवस्तुप्रथमंप्राप्तिक्षणेयथातुष्टयेभवतितथाप्राप्त्येकक्षणात्प्राप्तिसंबंधिनएकस्मात्क्षणा दूर्ध्वंतुष्टयेनभवतीतिकोनानुभूतवान् । अयमर्थःसर्वैरेवानुभूयतइत्यर्थः ॥ २ ॥ तस्मादस्मिन्क्षणसुखेबालएवासक्तिंबध्नातिनेतरः प्रेक्षा वान् ॥ ३ ॥ तदपिक्षणसुखंकल्पितमेवनवास्तवमित्याह ॥ वांछेति ॥ वांछाक्षणेतुयातुष्टिरुत्पद्यते तत्रतस्यांतुष्टौवांछैवकारणम् । वांछा न्वयव्यतिरेकानुविधायित्वात्तुष्टेः साकल्पितापितुष्टिरतुष्टिपर्यंताअतुष्टौपर्यवस्यति । तस्मादनर्थपर्यवसितांक्षणसुखहेतुंवांछांपरित्यज ॥ ४ ॥

आशेति ॥ अतश्चअसंगेनविषयेष्वनास्थयाजीवतोव्यवहारवतस्तवआशा भविष्यदिष्टवस्तुवांछा निराशत्वंनिरुद्यमत्वंयातु । भाव नाविषयवासनाचअभावंयातु । मनश्चनिर्वासनंसत्अमनस्त्वंनिर्विकल्पतांयातु ॥ ५ ॥ वासनेति ॥ अतश्चत्वंवासनारहितैरिंद्रियैश्चक्षुरादिभिः क्रियामाहरन्अनुतिष्ठन्नप्यंतरंतःकरणेविकारंनाप्नोषि । क्षोभशतैर्वातवर्षादिभिःविक्षोभशतैरपि खमाकाशंयथाविकारंनावाप्नोति तद्वत् ॥ ६ ॥ चित्तेति ॥ चित्तस्योन्मेषनिमेषाभ्यामाविर्भावतिरोभावाभ्यामेवसंसारप्रलयोदयौभवतः । तस्मात्तदेवमनोवासनासंरोधात्प्राणसंरोधाद्वापूर्वोक्तादनिमेषंविलीनंकुरु ॥ ७ ॥ प्राणेति ॥ प्राणस्पंदस्यापिचित्तस्फुरणहेतुत्वात्संसृतिहेतुत्वमतस्तमपिप्राणमभ्यासप्र

आशायातुनिराशत्वमभावंयातुभावना ॥ अमनस्त्वंमनोयातुतवासंगेनजीवतः ॥ ५ ॥ वासनारहितैरंतरिंद्रियैराहरन्क्रियाम् ॥ नविक्रियामवाप्नोषिखवत्क्षोभशतैरपि ॥ ६ ॥ चित्तोन्मेषनिमेषाभ्यांसंसारप्रलयोदयौ ॥ वासनाप्राणसंरोधादनिमेषंमनःकुरु ॥ ७ ॥ प्राणोन्मेषनिमेषाभ्यांसंसृतेःप्रलयोदयौ ॥ तमभ्यासप्रयोगाभ्यामुन्मेषरहितंकुरु ॥ ८ ॥ मौर्ख्योन्मेषनिमेषाभ्यांकर्मणांप्रलयोदयौ ॥ तद्विलीनंकुरुबलाद्गुरुशास्त्रार्थसंयमैः ॥ ९ ॥ असंवित्स्पंदमात्रेणयाति चित्तमचित्तताम् ॥ प्राणानांवानिरोधेनतदेवपरमंपदम् ॥ १० ॥

योगाभ्यां पवननिरोधाभ्यासात्प्रकृष्टोद्योगात्मनोनिरोधाद्वाऽनिमेषमस्पंदंकुरु । मनश्चबध्यतेयेनपवनस्तेनबध्यतइतिमनोनिरोधस्यापिप्राणनिरोधहेतुत्वात् ॥ ८ ॥ मौर्ख्येति ॥ मौर्ख्यमज्ञानंतदपिकर्मद्वारासंसारहेतुः । तथाहि । अज्ञानादन्यथाज्ञानंतस्माद्रागद्वेषौताभ्यांपुण्यापुण्यरूपाप्रवृत्तिः । ततोजन्मादिदुःखमयः संसार इति । तन्मौर्ख्यंगुरुशास्त्रार्थसंयमैः । गुरूपदेशातशास्त्रार्थानुसंधानात्संयमाच्चबलात्पुरुषप्रयत्नाद्विलीनंप्रनष्टंकुरु ॥ ९ ॥ असंविदिति ॥ चित्तंकर्तृअसंवित्स्पंदमात्रेण संविदः स्पंदोबहिर्मुखतयास्फूर्तिस्तदभावोऽसंवि

त्स्पंदः तन्मात्रेणवा । प्राणनिरोधेनवाअचित्ततांनिर्विकल्पत्वंयातितदेवोचितत्वमेवपरंपदंमुक्तिः ॥ १० ॥ दृश्येति ॥ दृश्यदर्शनसंबंधे अभिमतविषयाणांइंद्रियैः संबंधेसति यत्पारमार्थिकंपरमार्थभूतंस्वात्मनिसंभूतंसुखमाविर्भवति तदंतैकांतसंवित्त्या । अंतशब्दः स्वरूपवाची तस्यपारमार्थिकसुखस्यांतःस्वरूपं तस्यैवएकांतसंवित्त्या निरंतरानुसंधानेन । ब्रह्मसंवित्त्यास्वरूपसुखसंवित्तिरेवब्रह्मदृष्टिरित्यर्थः । अयमात्माब्रह्मेतिश्रुतेः । तथा ब्रह्मदृष्ट्यामनसःक्षयोलयः स्यात् ॥ ११ ॥ चित्तलयेसतितदेवस्वरूपसुखंकैवल्यसुखंसंपद्यतइत्याह ॥ यत्रेति ॥ यत्रयस्मिन्सुखेचित्तंनाभ्युदितंचित्तवृत्तयः संकल्पविकल्पादयोनोद्यंति तदेवाकृत्रिमंसुखंनिजानंदः । कैवल्यसुखमितियावत् । तच्चक्षयातिशयनिर्मुक्तंनित्यंनिरतिशयंचेतिकृत्वा नोदेतिनचशाम्यति ॥ १२ ॥ ननुज्ञानिनश्चित्तलयाभावात्कथंजीवतोमुक्तिरित्य

दृश्यदर्शनसंबंधेयत्सुखंपारमार्थिकम् ॥ तदंतैकांतसंवित्त्याब्रह्मदृष्ट्यामनःक्षयः ॥ ११ ॥ यत्र
नाभ्युदितंचित्तंतद्वैसुखमनुत्तमम् ॥ क्षयातिशयनिर्मुक्तंनोदेतिनचशाम्यति ॥ १२ ॥ ज्ञस्यचि
त्तंनचित्ताख्यंज्ञचित्तंसत्यमुच्यते ॥ नानार्थान्यत्वभाक्चित्तंबोधात्ताम्रंसुवर्णवत् ॥ १३ ॥ चित्तं
चित्तत्वमायातिकिंचित्कालंजगत्स्थितौ ॥ विहृत्यतुर्यावस्थायांतुर्यातीतंभवत्युत ॥ १४ ॥

त्राह ॥ ज्ञस्येति ॥ ज्ञस्यचित्तंनचित्ताख्यं चित्तमितिनाख्यायते । किंतर्हितु ज्ञचित्तंसत्यमुच्यतेब्रह्मैवेत्यर्थः । यस्मात्कारणान्नानार्थान्यत्वभाक् नानारूपैःकामसंकल्पादिभिरर्थैरन्यत्वभाक् ब्रह्मणःसकाशाद्भेदभागेवचित्तंचित्तशब्दार्थः । ज्ञस्यतुचित्तंबोधात्परिपूर्णब्रह्मबोधात् तदभिन्नंसत्संपद्यते । यथाताम्रंयुक्तिवशात्सुवर्णभावमापद्यतेतद्वत् ॥ १३ ॥ चित्तमित्ति ॥ चित्तंकर्तृ जगत्स्थितौकिंचित्कालंविहृत्य तुर्यावस्थायांश्रवणमननादिक्रमात्समाध्यवस्थायां सिद्धायां चित्तत्वंचित्स्वरूपमायाति । अतःपरं तुर्यातीतंभवति जाग्रदादित्रयेसतितदपेक्षयासमाध्यवस्थायांतुर्यत्वंसर्वदासमाधौजाग्रदाद्यभावात्तुर्यत्वमपिनास्तीत्यर्थः ॥ १४ ॥

ब्रह्मेति ॥ सर्वात्मकंब्रह्मैकमेवभूरिभुवनभ्रमविभ्रमोच्चैर्भूरिभुवनभ्रांतिविलासपरंपराभिः । इत्थंवियदादिप्रकारेणानेकतयासमंयुगपदेव स्थितम् । इतरच्चित्तादिकंकिंचिदत्रनास्ति । संनिवेशः संस्थानंचव्योमादीनांप्रतीयमानंनास्ति । ननुप्रतीतस्यमिथ्यात्वंक्वदृष्टमित्यत्राह । हृदीवेति । यथास्वप्नदशायांहृदिचित्तेप्रतीयमानंवस्तुतत्संनिवेशश्चनास्तितद्वत् ॥१५॥१६॥ योजनानामितिश्लोकत्रयंवाक्यम् ॥ चिद्घनमंत र्गतसर्वार्थंचब्रह्मैवापूर्वबिल्वफलत्वेननिरूप्यते । अजरद्रूपंब्रह्मणोजरादिविकाररहितत्वात् ॥ १७ ॥ पुराणमपिबालेंदुशकलवन्मार्दवेनसुं

ब्रह्मैवभूरिभुवनभ्रमविभ्रमोच्चैरित्थंस्थितंसममनेकतयैकमेव ॥ सर्वात्मकंभवतिनेतरदंगकिंचिच्चित्ता दिकंचनहृदीवहिसंनिवेशः ॥ १५ ॥ वसिष्ठउवाच ॥ अत्रेमामवबोधायविस्मयोल्लासशालिनीम् ॥ अपूर्वांचैवसंक्षेपाद्रामरम्यांकथांशृणु ॥ १६ ॥ योजनानांसहस्राणिविपुलंविमलंस्फुटम् ॥ युगैरप्य जरद्रूपमस्तिबिल्वफलंमहत् ॥ १७ ॥ पुराणमपिबालेंदुदलमार्दवसुंदरम् ॥ महाकल्पांतवात्यायाअपि वेगैरचालितम् ॥ १८ ॥ योजनायुतकोटीनांकोटिलक्षशतैरपि ॥ वैपुल्येनापरिच्छेद्यंमूलमाद्यंजगत्स्थि तेः ॥ १९ तस्यबिल्वफलस्योच्चैर्ब्रह्मांडानिसमीपतः ॥ हरंतिलीलांशैलाधोराजिकाकणपद्धतेः ॥ २० ॥ नकदाचनपाकेनपातांतेनसमेतितत् ॥ सदैवपक्वमप्यंगजरसायनबाध्यते ॥ २१ ॥

दरंआनंदमयत्वात् । अचालितंनिष्कर्मत्वात् ॥ १८ ॥ वैपुल्येनापरिच्छेद्यंअनंतत्वात् । जगत्स्थितेराद्यंमूलं उपादानत्वात् इत्थंभूतंमह द्बिल्वफलमस्ति ॥ १९ ॥ तस्येति ॥ तस्यबिल्वफलस्यसमीपतः उच्चैर्ब्रह्मांडान्यपिशैलाधः स्थितानांराजिकाकणानांपद्धतेर्लीलांहरंति किंवर्ण्यतेतन्महत्त्वमित्यर्थः । राजिकाकृष्णसर्षपः ॥ २० ॥ नेति ॥ तत्फलंकदाचनपातपर्यंतेनपाकेननसमेतिनसंयुज्यते नित्यत्वात् ॥ २१ ॥

समस्तेति ॥ समस्तफलसारस्यपरमपुरुषार्थरूपत्वात् । अस्यप्रकृतस्यसंविच्छक्तिचमत्कृतिः चिच्छक्तिस्फूर्तिरेव अंतर्मज्जत्वंअंतःस्थितसारत्वमायाति ब्रह्मणःसंवित्सारत्वात् ॥ २२ ॥ संविदिति ॥ ततः बिल्वफलस्यानंततयातरलरूपया बहुविधपरिणामतयास्फुरद्रूपया संविच्छत्त्यासमेनिजएवरूपे । इत्थंवक्ष्यमाणप्रकारेणदृक्सिसृक्षापूर्विकादृष्टिः संप्रसारिताप्रवर्तिता ॥ २३ ॥ तमेवप्रकारमाह ॥ इदमितिद्वाभ्यां ॥ उद्युक्ता जगंतिनियंतुमुद्यता नियतिरियं स्पंदरूपिणीचलनस्वभावाक्रियारूपाशक्तिरियम् । निजमज्जाचमत्कृतिः निजा

मसस्तफलसारस्यफलस्यास्यमहाकृतेः ॥ अंतर्मज्जत्वमायातिसंविच्छक्तिचमत्कृतिः ॥ २२ ॥ संविच्छत्त्यातयातत्रततस्तरलरूपया ॥ निजएवसमेरूपेदृगित्थंसंप्रसारिता ॥ २३ ॥ इदंव्योममहानंतमियंकालमयीकला ॥ इयंनियतिरुद्युक्ताक्रियेयंस्पंदरूपिणी ॥ २४ ॥ ब्रह्माडमंडपमिदमिमाआशाःक्रमोह्ययम् ॥ इतिसातस्यबिल्वस्यनिजमज्जाचमत्कृतिः ॥ २५ ॥ श्रीरामउवाच ॥ भगवन्सर्वसारज्ञत्वयैषाबिल्वरूपिणी ॥ महाचिद्घनसत्तेहकथितेतिमतिर्मम ॥ २६ ॥ चिन्मज्जारूपमखिलमहंतादीदमाततम् ॥ नमनागपिभेदोऽस्तिद्वैतैक्यकलनात्मकः ॥ २७ ॥ यथाब्रह्मांडकूष्मांडमज्जामेर्वादिसंस्थितिः ॥ तथाचिद्बिल्वमज्जेयंब्रह्मांडादिजगत्स्थितिः ॥ २८ ॥

इतिश्रीनिर्वाणप्रकरणेबिल्वोपाख्यानंनामैकत्रिंशःसर्गः ॥ ३१ ॥

याः संविच्छक्तेः स्फूर्तिः । सर्वस्यापिप्रपंचस्यसंविद्विलासरूपत्वात् ॥२४॥२५॥ भगवन्निति ॥ महाचिद्घनसत्ता महतीचिद्घनस्यब्रह्मणः सत्ता ॥२६॥ चिदिति ॥ अहंतादि अहंकारप्रकृतिमहदादिभिराततंविस्तीर्णमिदमखिलंजगच्चिन्मज्जारूपम् । अतश्चमनागपितद्वैतैक्यकलनात्मकोभेदाभेदविचाररूपोभेदोभेदद्दृष्टिर्नास्ति ॥२७॥२८॥ इतिश्रीवासिष्ठविवरणेनिर्वाणप्रकरणेबिल्वोपाख्यानंनामैकत्रिंशःसर्गः ॥ ३१ ॥

पूर्वमंतर्भावितसर्वार्थमद्वितीयमेवचैतन्यंबिल्वफलत्वेननिरूपितम् । इदानींतुविचित्रजगच्चित्रतापिअखंडैकरसानिर्विकल्पाघनीभूतासैवा न्महाशिलात्वेननिरूप्यते ॥ अथेत्यादिना ॥ चित्रामश्रुतपूर्वां अतश्चविस्मयकारिणीम् ॥ १ ॥ स्निग्धेति ॥ स्निग्धाचित्तप्रेमास्पदत्वात् । स्पष्टास्वयमेवप्रकाशमानत्वात् । मृदुस्पर्शासुखहेतुत्वात् । महाविस्तारशालिनीनिरवधित्वात् । निबिडासंततत्वात् । नित्यनीरंध्राविजा तीयवस्त्वमिश्रितत्वात् । इत्थंभूतामहाशिलाक्वचिदस्ति । स्वव्यतिरिक्तस्याधारस्यनिरूपयितुमशक्यत्वात् क्वचिदित्युक्तम् । सभगवान्क स्मिन्प्रतिष्ठितइति । स्वेमहिम्नीतिश्रुतेः ॥ २ ॥ तस्यामिति सार्धश्लोकद्वयंवाक्यम् । अत्रपद्मानीत्यनेनभुवनादिविवक्षितानिसंकोच

वसिष्ठउवाच॥अथेमामिंदुवदनचित्रांविस्मयकारिणीम् ॥वर्ण्यमानांमयारम्यामन्यामाख्यायिकांशृणु ॥ १ ॥ स्निग्धास्पष्टामृदुस्पर्शामहाविस्तारशालिनी ॥ निबिडानित्यनीरंध्राक्वचिदस्तिमहाशिला ॥ २ ॥ तस्यामंतःप्रफुल्लानिपद्मानिसुबहून्यपि ॥ सरस्यामिवरम्याणिसंत्यनंतानिराघव ॥ ३ ॥ अन्योन्यप्रो तपत्राणिमिथोविघटितानिच ॥ मिथश्चोपरिरूढानिगूढानिप्रकटानिच ॥ ऊर्ध्वमूलान्यधोमूलान्यमूला नीतराणिच ॥४॥ तेषांचनिकटेसंतिशंखाःशतसहस्रशः ॥ चक्रौघाश्चमहाकाराःपद्मवत्संनिवेशिनः ॥५॥

विकासयोगित्वात् । जीवभ्रमराश्रयत्वाच्च ॥ ३ ॥ तानिकानिचिदन्योन्यप्रोतपत्राणि । परस्परसंबंधवंति । कानिचित्तुमिथोविघटिता निसंबंधरहितानि । तेषांचमध्येकानिचिदूर्ध्वमूलानि । अमरादिभुवनानामुपरिस्थितध्रुवमंडलाश्रयत्वात् । कानिचिदधोमूलानि । पाता लानांभूलोकस्यबाह्यस्थितकूर्माश्रयत्वात् । कानिचिदमूलानि । शिवविष्णुलोकादीनांनित्यत्वात् । इतराणिचेत्यनेनतिर्यङ्मूलान्युच्यंते । तिर्यग्गमनस्वभावेनवायुनैवकेषांचिद्भुवनानामवष्टब्धत्वात् । इत्थंभूतानिपद्मानितस्यांशिलायामंतः संतीत्यन्वयः ॥ ४ ॥ तेषामिति ॥ तेषांचपद्मानांनिकटेशतसहस्रशः शंखाः संति । शंखशब्देननक्षत्रग्रहताराररूपाणिज्योतिर्मंडलान्युच्यंते । समुद्रवन्नीलेनभसिशंखसंघव

द्भासमानत्वात् । चक्रशब्देनमंडलाकाराणिद्वीपानि । तेषांचक्रधारावदाभासमानैः समुद्रैरुपलक्षितत्वात् ॥ ५ ॥ ६ ॥ चिदिति ॥ घन
त्वैकात्मकत्वादिवशात् घनत्वंनिबिडत्वम् । एकात्मकत्वमेकरूपत्वम् । आदिशब्दाद्विभुत्वादीनि । तद्वशात्तत्सामर्थ्यादेषाचित्तशिलेव त
त्सदृशत्वात् ॥ ७ ॥ अपीति ॥ घनायानीरंध्रायाअपितस्याः शिलायाअंतः जगद्वृंदंविद्यते । जगद्वृंदस्यतदभिन्नत्वेनघनत्वनीरंध्रत्वयो
र्विरोधाभावात् ॥ ८ ॥ द्यौरिति ॥ साचमनागपिसुषिरासरंध्रानभवति । द्युप्रभृतीनांतदभिन्नत्वात् ॥ ९ ॥ शंखेति ॥ शंखपद्मादिलेखने

श्रीरामउवाच ॥ सत्यमेतन्मयादृष्टातादृशीसामहाशिला ॥ शालग्रामेहरेर्मूर्धिविद्यतेतादृशीशिला
॥ ६ ॥ वसिष्ठउवाच ॥ चिच्छिलैषामयोक्तातेयस्यामंतर्जगत्स्थितिः ॥ घनत्वैकात्मकत्वादिवशादे
षाशिलैवचित् ॥ ७ ॥ अप्यत्यंतघनांगायाःसुनीरंध्राकृतेरपि ॥ विद्यतेऽतर्जगद्वृंदंव्योम्नीवविपुलोऽनि
लः ॥ ८ ॥ द्यौःक्ष्मावायुराकाशपर्वताःसरितोदिशः ॥ संतितस्यांशिलासाचसुषिरानमनागपि ॥ ९ ॥
शंखपद्मादिकंलोकंपाषाणेलिप्यतेतथा ॥ भूतंभवद्भविष्यच्चचिच्छिलाशालभंजिका ॥ १० ॥ उपलोंऽतः
संनिवेशोनानात्माप्येकपिंडताम् ॥ तथाचिद्विश्वगर्भाऽपिनमुंचत्येकपिंडताम् ॥ ११ ॥ यथापद्मःशि
लाकोशादभिन्नस्तद्वपुर्मयः ॥ तथासर्गाश्चितोरूपादभिन्नःसर्वदैवहि ॥ १२ ॥

ऽपिपाषाणः यथानकिंचिद्भिद्यते । तथाभूतभवद्भविष्यद्रूपापिचिच्छिलामयीशालभंजिका । बहुविधचित्रविचित्रिताप्रकृतिरेवनभिद्यतइत्यर्थः
॥ १० ॥ उपलइति ॥ यथाअंतः संनिवेशः अंतःस्थितः शंखपद्मादिसंनिवेशउपलो नानात्मकतयाप्रतीयमानोऽपि वस्तुतः एकपिंडक
स्तथा चिद्विश्वगर्भापिजगद्गर्भगतापिएकपिंडतांनमुंचति ॥ ११ ॥ यथेति ॥ शिलायांकल्पितः पद्मः तद्वपुर्मयः शिलामयत्वाच्छिलाको
शाद्यथाअभिन्नः । तथाचितिकल्पितः सर्गोऽपिचिद्रूपादभिन्नः ॥ १२ ॥



 

शिलेति ॥ शिलायांकल्पितापद्मलेखाली । मरीचांतश्चमत्कृतिर्मरीचस्यांतः स्थिताचमत्कारहेतुः कटुरसस्फूर्तिश्चयथानोदेति स्वाभाविक त्वात् । नास्तमायाति यावद्द्रव्यमविनाशात् । तथाचितौसर्गस्थितिः ॥ १३ ॥ यथेति ॥ पुरंध्र्यांगुर्विण्यांमर्त्योगर्भरूपोयथांतर्वर्तते । मज्जासारभूतोंऽशोयथाबिल्वगाबिल्वफलांतर्गतावर्तते । तथैवअनंतविकाराढ्याब्रह्मांडमंडलीचितावंतर्वर्तते ॥ १४ ॥ सुषुप्तेति ॥ चक्रपद्मरूरूपालेखाः शिलोदरेयथा सुषुप्तावस्थयासुषुप्तवन्निश्चलावस्थयास्थिताः ॥ १५ ॥ यथेति ॥ सर्वात्मकंब्रह्मयत्रयस्मिन्देशेयदाकारंयद्रूपंय

**शिलांतःपद्मलेखालीमरीचांतश्चमत्कृतिः ॥ नोदेतिनास्तमायातियथासर्गस्तथाचितौ ॥ १३ ॥**
**यथापुरंन्ध्र्यांमर्त्योऽन्तर्मज्जावाबिल्वगायथा ॥ तथानंतविकाराढ्याचितौब्रह्मांडमंडली ॥ १४ ॥**
**सुषुप्तावस्थयाचक्रपद्मलेखाःशिलोदरे ॥ यथास्थिताश्चितेरंतःस्थितेयंजगदावली ॥ १५ ॥ यथा**
**यत्रयदाकारंतथातत्रतदेवहि ॥ ब्रह्मसर्वात्मकंसर्वंसुषुप्तस्थमिवस्थितम् ॥ १६ ॥ भूरिभावविका**
**राढ्योयोऽयंजगदुरुभ्रमः ॥ सुषुप्तमेवतद्विद्धिशिलांतःपंकजादिवत् ॥ १७ ॥ नित्यंसुषुप्तपदमेव**
**जगद्विलासःसम्यक्प्रशांतसमचिद्घनआत्मनीदृक् ॥ पद्मंशिलांतइवसर्गदशास्त्वसाराद्दृष्टान**
**देहमुपयातिकदाचिदेव ॥ १८ ॥**

त्यथाप्रवर्तते । तत्रतदेववस्तुतथातेनैवप्रकारेणोपलक्षितंभवति । अतः सर्वंब्रह्मैवसुषुप्तस्थमिवसुषुप्तावस्थापन्नमिवनिर्विकारंस्थितम् । ब्रह्मणः सर्वात्मकत्वात्सत्यसंकल्पत्वाच्च । स्वसंकल्पानुसारेणनानारूपतयावस्थानंयुक्तमितिभावः ॥ १६ ॥ भूरीति ॥ भूरिभिर्भावविकारैः जन्मादिभिराढ्योयोऽयंजगद्रूपः उरुभ्रमस्तच्छिलांतः पंकजादिवत्सुषुप्तंब्रह्मैवविद्धि ॥ १७ ॥ नित्यमिति ॥ प्रशांतेसमेचिद्घनेचात्मनि ईदृक्प्रतीयमानोजगद्विलासः शिलांतःपद्ममिवसुषुप्तपदमिवब्रह्मणः सुषुप्तावस्थयावस्थानमेव । दृष्टास्तुसर्गदशाः सर्गाद्यवस्थाः अ

सारानिःश्रमाणाः अतः कदाचिदेवदेहंवास्तवंस्वरूपंनोपयांति ॥ १८ ॥ इतिश्रीवासिष्ठविवरणेशिलोपाख्यानंनामद्वात्रिंशः सर्गः ॥ ३२ ॥ पूर्वंविचित्राप्यखंडैकरसाचिच्छिलात्वेननिरूपिता । इदानींतुसर्वंब्रह्मेतिविवेकिनोयुद्धादिरपिचित्तविश्रांतिबाधकोनभवतीतिदर्शयितुंअर्जुनाख्यायिकावर्ण्यते ॥ १ ॥ जगदिति ॥ जगतांसहस्रस्यनिर्माणंमहिमायस्यतस्यदर्पणवन्निर्मलस्यपुर्यष्टकस्यरूपंकीदृशंतत्कथय ॥ २ ॥ अनाद्यंतमिति श्लोकत्रयंवाक्यम् ॥ जगद्बीजंब्रह्मैवकलनायुक्तमविद्यायुक्तंसत्जीवइतिस्मृतः ॥ ३ ॥ नुर्जीवस्यवस्तुतः कलामायातस्याः

इतिश्रीयोगवासिष्ठसारेनिर्वाणप्रकरणेशिलोपाख्यानंनामद्वात्रिंशःसर्गः ॥३२॥ श्रीरामउवाच ॥ ज्ञातंज्ञातव्यमखिलंदृष्टंद्रष्टव्यमक्षतम् ॥ लीलयेदंतुपृच्छामिभूयोबोधाभिवृद्धये ॥ १ ॥ जगत्सहस्रनिर्माणमहिम्नोदर्पणस्यतु ॥ पुर्यष्टकस्यभगवन्रूपंकथयकीदृशम् ॥ २ ॥ वसिष्ठउवाच ॥ अनाद्यंतंजगद्बीजंयद्ब्रह्मास्तिनिरामयम् ॥ तदेवकलनायुक्तमत्रजीवइतिस्मृतः ॥ ३ ॥ नृरूपंशुद्धचिन्मात्रंकलाकलनवर्जितम् ॥ कलनोन्मुखतांयातमत्रजीवइतिस्मृतः ॥ ४ ॥ सजीवःखलुदेहेऽस्मिंश्चिनोतिस्पंदतेस्फुटम् ॥ अहंभावादहंकारोमननान्मनउच्यते ॥ ५ ॥ बोधनिश्चयतोबुद्धिरिंद्रदृष्टेस्तथेंद्रियम् ॥ देहभावनयादेहोघटभावनयाघटः ॥ एषएवस्वभावात्माजनैःपुर्यष्टकंस्मृतः ॥ ६ ॥

कलनंग्रासः तेनवर्जितम् । यदास्वयमेवाऽविद्योन्मुखतांयातंगतं अत्रचिन्मात्रात्मस्वरूपविस्मरणेज्ञातेअहंभावादह मित्यभिमानादहंकारः स्मृतः । मननात्संकल्पादिरूपान्मनउच्यते ॥ ४ ॥ ५ ॥ बोधस्यनिश्चयरूपाद्व्यापाराद्बुद्धिरुच्यते । तथाइंद्रदृष्टेः इंद्रआत्मातेनदृष्टत्वात्तत्त्वकर्मोपार्जितत्वादिंद्रियमुच्यते । इंद्रियमिंद्रलिंगमिंद्रदृष्टमित्यादिनासूत्रेणेंद्रियशब्दस्यइंद्रदृष्टमित्यर्थेनिपातितत्वात् । देहरूपभावनयादेहो

भवति । घटाकारभावनयाघटोभवति । एवंस्वभावात्माएवंप्रकारस्वभावस्वरूपएषएवात्मातज्ज्ञैर्जनैःपुर्यष्टकमितिस्मृतः । तल्लक्षणंतु । अहंकारकलायुक्तंबुद्धिजीवसमन्वितम् । तत्पुर्यष्टकमित्युक्तंभूतह्रत्पद्मषट्पदइतिपूर्वमुक्तम् ॥ ६ ॥ इदानींप्रकारांतरेणलक्षणमाह ॥ ज्ञत्वे ति ॥ ज्ञत्वकर्तृत्वभोक्तृत्वसाक्षित्वाद्यभिपातिनी ज्ञोऽहंकर्ताहंभोक्ताहंसाक्ष्यहंइत्याद्यभिमानवती यासंविज्जीवइत्युक्ता तदेवसंवित्स्व रूपंपुर्यष्टकंविदुः अंतःकरणमणिप्रतिबिंबिताकर्तृत्वभोक्तृत्वाद्यभिमानवतीसंविदेवजीवःपुर्यष्टकंचेत्यर्थः ॥ ७ ॥ पुर्यष्टकेति ॥ यथाज

ज्ञत्वकर्तृत्वभोक्तृत्वसाक्षित्वाद्यभिपातिनी ॥ यासंविज्जीवइत्युक्तातद्धिपुर्यष्टकंविदुः ॥ ७ ॥ पुर्यष्टकवशेनैवस्वप्नात्स्वप्नांतरंयथा ॥ असत्यमेवपश्यंतिजनास्तद्वदिदंजगत् ॥ ८ ॥ वसिष्ठउ वाच ॥ पुंडरीकाक्षनिर्दिष्टामसंसक्तिमतिंशुभाम् ॥ यामालिंग्यमहाबाहोजीवन्मुक्तमनामु निः ॥ ९ ॥ पांडोःसुतोऽर्जुनोनामसुखंजीवितमात्मनः ॥ क्षपयिष्यतिनिर्दुःखंतथाक्षपयजीवि तम् ॥ १० ॥ श्रीरामउवाच ॥ भविष्यतिकदाब्रह्मन्सोऽर्जुनःपांडुनंदनः ॥ कीदृशींचहरिस्तस्यक थयिष्यत्यसक्तताम् ॥ ११ ॥ वसिष्ठउवाच ॥ यमःकदाचिद्भगवान्गतेप्रतिचतुर्युगे ॥ तपःप्रकुरुते भूतदलनात्पापशंकया ॥ १२ ॥ कदाचिदष्टौवर्षाणिदशद्वादशवापिच ॥ कदाचित्पंचसप्तापि कदाचित्षोडशापिवा ॥ १३ ॥

नाःपुर्यष्टकवशेनैवस्वप्नात्स्वप्नांतरमसत्यमेवपश्यंति तद्वदिदंजगदपिपश्यंति ॥ ८ ॥ इत्थंस्वप्नवत्प्रपंचस्यमिथ्यात्वंविनिश्चित्यार्जुनवत्संगे नव्यवहर्तव्यमितितत्कथांप्रस्तौति ॥ पुंडरीकाक्षेत्यादिना ॥ ९ ॥ १० ॥ ११ ॥ यमइतिश्लोकद्वयंवाक्यम् ॥ भगवान्यमः किलगतेषु चतुर्युगेषुकदाचिद्भूतद्रोहात्पापमाशंकमानस्तन्निवृत्तयेतपश्चरन् ॥ १२ ॥ कदाचिदष्टौवर्षाणितपःकुरुतेकिल कदाचिद्दश कदाचिद्द्वा

दश कदाचित्पंच कदाचित्सप्त कदाचित्षोडशवर्षाणिइत्येवंचबहुधातपः कुरुते ॥ १३ ॥ १४ ॥ तेनेति ॥ तेनमृत्योर्हिंसायामप्रवृत्त्या हेतुनाप्रावृषिमदवशात्स्वेदीकुंजरोमशकैरिवभूतलंनीरंध्रभूतौघंसत् निःसंचारंसंचरितुमशक्यंभवति ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ वैव



॥ ३३ ॥

उदासीनवदासीनेतस्मिन्नियमसंस्थिते ॥ नहिनस्तिजगज्जालेमृत्युर्भूतानिकानिचित् ॥ १४ ॥ तेननीरंध्रभूतौघंनिःसंचारंमहीतलम् ॥ भवतिप्रावृषिस्वेदीकुंजरोमशकैरिव ॥ १५ ॥ अथतानि विचित्राणिभूतानिबहुयुक्तिभिः ॥ क्षपयंतिसुराराममुवोभारनिवृत्तये ॥ १६ ॥ एवंयुगसहस्राणि व्यवहारशतानिच ॥ समतीतान्यनंतानिभूतानिचजगंतिच ॥ १७ ॥ वैवस्वतोनामयमोयएषपि तृनायकः ॥ अनेनत्वधुनासाधोपरिक्षीणेषुकेषुचित् ॥ १८ ॥ युगेष्वघविघातायवर्षाणिद्वाद शात्मनि ॥ व्रतचर्येहकर्तव्याद्दूरास्तजनकर्षणा ॥ १९ ॥ तेनेयमुर्वीनीरंध्राभूतैर्मर्त्यैरमृत्युभिः ॥ दीनाप्रघनगुल्मैवभारभूतैर्भविष्यति ॥ २० ॥ भूभारपरिभूतांगीहरिंशरणमेष्यति ॥ हरिर्देहद्व येनाथमहीमवतरिष्यति ॥ २१ ॥ वसुदेवसुतस्त्वेकोवासुदेवइतिश्रुतः ॥ देहोभविष्यतिहरेर्द्वितीयः पांडुनंदनः ॥ २२ ॥ धृतराष्ट्रसुतैःसार्धंसंग्रामेऽत्यंतदारुणे ॥ उपप्ष्यंत्यर्जुनेनैतेयोद्धुंतद्वांधवोऽखिलाः ॥ २३ ॥

॥ ३३ ॥

स्वतइतिश्लोकद्वयंवाक्यम् ॥ विवस्वतः सूर्यस्यपुत्रेणापियमेनतथैवाघविघातायतथैवद्वादशवर्षाणिदूरास्तजनकर्षणा दूरपरिहृतजनमारणाव्रतचर्यातपश्चर्याकर्तव्या ॥ १९ ॥ तेनेति ॥ प्रघनगुल्मा प्रघनानिरंतरागुल्माःस्तंबायस्यांसातथा ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥

॥ २४ ॥ तमिति ॥ बुद्धेनदेहेनबोधवताकृष्णावताररूपेण ॥ २५ ॥ अनंतमिति ॥ राजसिंहेति शोकवैक्लव्यनिरासायसंबोधनम् । देहादि व्यतिरिक्तमनंतादिलक्षणमात्मानमेवालोकयविचारय । यतस्त्वमजोऽसि अतएवनित्योऽसिनिरामयोऽसि तत्रसंविद्वपुःस्फारमित्येकंपदम् । संविद्रूपेणवपुषास्फारमभिवृद्धं व्याप्तमित्यर्थः ॥ २६ ॥ नेति ॥ अयंदेहादिव्यतिरिक्तआत्माकदाचिदपिनजायतेनम्रियतेवा । जननमरण योर्देहधर्मत्वात् । अयमात्माभूत्वाभवनक्रियामनुभूय भूयःपुनर्नभविता भवनक्रियारहितोनभवति । अयमात्मानभूत्वाभवनरहितः पुनर्भवितावानभवतीत्युभयथावापियोजनीयम् यतोऽयंभूत्वापुनर्घटादिवन्नभविता । अतोनम्रियते यतश्चपूर्वंनभूत्वापुनःकालांतरेभविता

अर्जुनःस्वजनान्दृष्ट्वातान्सर्वान्मरणोन्मुखान् ॥ विषादमेष्यत्युद्योगंयुद्धायनकरिष्यति ॥ २४ ॥ तमर्जुनाभिधंदेहंप्राप्तकार्यैकसिद्धये ॥ हरिर्बुद्धेनदेहेनबोधयिष्यतियुक्तिभिः ॥ २५ ॥ अनंतमव्यक्तमनादिमध्यमात्मानमालोकयराजसिंह ॥ संविद्वपुःस्फारमलब्धदोषमजोऽसिनित्योऽसि निरामयोऽसि ॥ २६ ॥ नजायतेम्रियतेवाकदाचिन्नायंभूत्वाभवितावानभूयः ॥ अजोनित्यःशाश्वतोऽयंपुराणोनहन्यतेहन्यमानेशरीरे ॥ २७ ॥ योगस्थःकुरुकर्माणिसंगंत्यक्त्वाधनंजय ॥ ब्रह्मार्पितसमाचारोब्रह्मैवभवसिक्षणात् ॥ २८ ॥

वानभवति । अजोनजायतइत्युक्तार्थोपपादनम् । इत्थमजोनित्यश्चनित्यशब्देनकादाचित्कसत्तारूपोऽपिविकारोनिरस्यते । शाश्वतः अपक्षयरहितः पुराणः वृद्धिरहितः नूतनंहिवस्तुवर्धते । अयमात्माशरीरेहन्यमानेऽपिस्वयंनहन्यते नविपरिणम्यतइतिषड्भावविकाराराहित्यमुक्तम् ॥ २७ ॥ योगस्थइति ॥ सिद्ध्यसिद्ध्योः समत्वंयोगः तन्निष्ठःसन्संगंईश्वरोमेतुष्यत्वित्यपिफलाकांक्षांत्यक्त्वाकर्माणिईश्वराराधनार्थंकुरु इत्थंब्रह्मार्पितसमाचारः ब्रह्मार्पितसत्कर्मात्वंब्रह्मैवभवसि ॥ २८ ॥

ईश्वरार्पितसर्वार्थःईश्वरार्पिताःसर्वेअर्थाःशुभाशुभरूपायेनतादृशः सन्नीश्वरात्माईश्वरेआर्पितआत्मायेनतथाभूतश्चनिरामयःसर्वभूतात्माभूषि तभूतलईश्वरोभव ॥ २९ ॥ संन्यस्तेति ॥ संन्यासयोगयुक्तात्मा । कर्मफलत्यागःसंन्यासयोगः ॥ ३० ॥ ३१ ॥ ३२ ॥ सर्वेति ॥ सर्वेषांसं कल्पानांसंशांतौसत्यां प्रशांतघनवासनंनिर्वासनमतश्चनकिंचिद्भावनाकारंनविद्यते किंचिदपिभावनायोग्यंरूपंयस्यतादृशंविशुद्धंचिन्मात्रं

ईश्वरार्पितसर्वार्थईश्वरात्मानिरामयः ॥ ईश्वरःसर्वभूतात्माभवभूषितभूतलः ॥ २९ ॥ संन्यस्त सर्वसंकल्पःसमःशांतमनामुनिः ॥ संन्यासयोगयुक्तात्माकुर्वन्मुक्तमतिर्भव ॥ ३० ॥ अर्जुनउवा च ॥ संगत्यागस्यभगवंस्तथाब्रह्मार्पणस्यच ॥ ईश्वरार्पणरूपस्यसंन्यासस्यचसर्वशः ॥ ३१ ॥ त थाज्ञानस्ययोगस्यविभागःकीदृशःप्रभो ॥ क्रमेणकथयैतन्मेमहामोहनिवृत्तये ॥ ३२ ॥ श्रीभ गवानुवाच ॥ सर्वसंकल्पसंशांतौप्रशांतघनवासनम् ॥ नकिंचिद्भावनाकारंतद्ब्रह्मपरमंवि दुः ॥ ३३ ॥ तदुद्योगंविदुर्ज्ञानंयोगंचकृतबुद्धयः ॥ ब्रह्मसर्वंजगदहंचेतिब्रह्मार्पणंविदुः ॥ ३४ ॥ क र्मणांयःफलत्यागस्तंसंन्यासंविदुर्बुधाः ॥ त्यागःसंकल्पजालानामसंगइतिकथ्यते ॥ ३५ ॥ सम स्तकलनाजालस्येश्वरैकत्वभावनम् ॥ गलितद्वैतनिर्भासमेतदेवेश्वरार्पणम् ॥ ३६ ॥ मन्मनाभ वमद्भक्तोमद्याजीमांनमस्कुरु ॥ मामेवैष्यासियुक्त्वैवमात्मानंमत्परायणः ॥ ३७ ॥

यदस्तितदेवपरंब्रह्मविदुः ॥ ३३ ॥ तदिति ॥ तदर्थमुद्योगस्तदुद्योगस्तम् ॥ ३४ ॥ ३५ ॥ समस्तेति ॥ समस्तकलनाजालस्यसर्व स्यापिसंकल्पविकल्पजालस्यगलितद्वैतनिर्भासंभेदावभासरहितंयथातथाईश्वरैकत्वभावनं ईश्वरएवसर्वांतर्यामीतथाप्रवर्तयति तद्विलासो ऽयंसर्वोव्यवहारइति यत्तन्मयत्वभावनं एतदेवसर्वव्यवहारस्यतन्निवेदनमेवईश्वरार्पणम् ॥ ३६ ॥ मन्मनाइति ॥ एवमनेनप्रकारेणआत्मा

नंचित्तंयुक्त्वामयिसंयोज्यमत्परायणःमत्परःसन्मामेवैष्यसि ॥ ३७ ॥ समान्यमितिश्लोकचतुष्टयंवाक्यम् ॥ साकारंनिराकारंचमेद्वेरूपे तत्रा प्रबुद्धदशायांशंखचक्रगदापद्मधराकारंरूपंउपास्यं तदुपासनयाचक्रमाच्चित्तवृत्तिद्वाराचपरंब्रह्मरूपंद्वितीयरूपंज्ञातंकैवल्यपर्यवसितंसिद्धय तीत्यर्थः ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥ निर्मानेति ॥ निर्मानमोहाःमानोऽभिमानोऽहंकारइतियावत् मोहस्तन्निमित्तमज्ञानंताभ्यांनि ष्क्रांता जितोसंगदोषोयैस्ते अध्यात्मनित्याआत्मानुसंधाननिरताःअतश्च विनिवृत्तकामाःसुखदुःखसंज्ञैर्द्वंद्वैर्विमुक्ताअमूढाः विद्वांसः तत्पदं

सामान्यंपरमंचेतिद्वेरूपेविद्धिमेऽनघ ॥ पाण्यादियुक्तंसामान्यंशंखचक्रगदाधरम् ॥ ३८ ॥ परं रूपमनाद्यंतंयन्ममैकमनामयम् ॥ ब्रह्मात्मपरमात्मादिशब्देनैतदुदीर्यते ॥ ३९ ॥ यावदप्रतिबुद्ध स्त्वमनात्मज्ञतयास्थितः ॥ तावच्चतुर्भुजाकारदेवपूजापरोभव ॥ ४० ॥ तत्क्रमात्संप्रबुद्धस्त्वंत तोज्ञास्यसितत्परम् ॥ ममरूपमनाद्यंतंयेनभूयोनजायसे ॥ ४१ ॥ निर्मानमोहाजितसंगदोषाअ ध्यात्मनित्याविनिवृत्तकामाः ॥ द्वंद्वैर्विमुक्ताःसुखदुःखसंज्ञैर्गच्छंत्यमूढाःपदमव्ययंतत् ॥ ४२ ॥ यस्यसर्वेसमारंभाःकामसंकल्पवर्जिताः॥ज्ञानाग्निदग्धकर्माणंतमाहुःपंडितंबुधाः ॥ ४३ ॥ निर्द्वंद्वो नित्यसत्वस्थोनिर्योगक्षेमआत्मवान् ॥ यथाप्राप्तानुवर्तीचभवभूषितभूतलः ॥४४॥ अपिस्फुट तिविंध्याद्रौवातिवाप्रलयानिले ॥ गुरुशास्त्रानुगोमार्गःपरित्याज्योनधीमता ॥ ४५ ॥

गच्छंति द्वंद्वानुसंधानरहिताः ॥ ४२ ॥ ४३ ॥ नित्यंस्वगुणनिष्ठोनिर्योगक्षेमः इष्टानिष्टप्राप्तिपरिहारयोरुदासीनः आत्मवानप्रमत्तचित्त श्चत्वंयथाप्राप्तमनुवर्तमानोभूषितभूतलोभव भूषितभूतलःभूयाः ॥ ४४ ॥ अपीति ॥ महत्यामप्यापदिगुरूपदिष्टःशास्त्रमार्गोधीमता नपरित्याज्यः ॥ ४५ ॥

॥ ४६ ॥ इतीति ॥ वचनमुपेष्यतिवक्ष्यतीत्यर्थः ॥ ४७ ॥ परीति ॥ दिनपतिनाअब्जिनीवत्रिलोकभर्तुस्तववचनेनपरिबोधितामममतिः परिगलितसमस्तशोकभारासतीपरमुदयंप्रकाशंगता ॥ ४८ ॥ इतिश्रीवासिष्ठविवरणेनिर्वाणप्रकरणेऽर्जुनोपाख्यानंनामत्रयस्त्रिंशःसर्गः ॥ ३३ ॥ पूर्वंविवेकिनोयुद्धादिरपिचित्तविश्रांतिबाधकोनेतिदर्शयितुमर्जुनाख्यायिकावर्णिता । इदानीमेषाजन्मपरंपरास्वसंकल्परूपभ्रांति





अज्ञानादात्मनःसाधोसत्तामायातिवासना ॥ आत्मज्ञानेमहाबोधाद्विलयंयातिवासना ॥ ४६ ॥ इतिगदितवतित्रिलोकनाथेक्षणमिवमौनमुपस्थितेपुरस्तात् ॥ अथमधुपइवासिताब्जखंडेवचनमुपेष्यतितत्रपांडुपुत्रः ॥४७ ॥ अर्जुनउवाच ॥ परिगलितसमस्तशोकभारापरमुदयंभगवन्मतिर्गतेयम् ॥ ममतववचनेनलोकभर्तुर्दिनपतिनापरिबोधिताब्जिनीव ॥ ४८ ॥ इतिश्रीनिर्वाणप्रकरणेअर्ज्जुनोपाख्यानंनामत्रयस्त्रिंशःसर्गः ॥ ३३ ॥ श्रीवसिष्ठउवाच ॥ अथराघववक्ष्येऽहमितिहासमिमंशृणु ॥ यद्वृत्तंकस्यचिद्भिक्षोःकिंचिन्मननशालिनः ॥ १ ॥ आसीत्कश्चिन्महाभिक्षुःसमाध्यभ्यासतत्परः ॥ नित्यंस्वव्यवहारेणक्षपयत्यखिलंदिनम् ॥ २ ॥ समाध्यभ्यासशुद्धंतत्तस्यचित्तंक्षणेनयत् ॥ चिंतयत्याशुयद्भावंगच्छत्यंबुविववीचिताम् ॥ ३ ॥ कदाचिच्चसमाधानविरतोऽतिष्ठदेकधीः ॥ कंचित्संचिंतयामासस्वासनस्थःक्रियाक्रमम् ॥ ४ ॥



परंपरामात्रसिद्धेतिदर्शयितुंदृष्टांततयाशतरुद्राख्यायिकानिरूप्यते ॥ १ ॥ असीदिति ॥ महाभिक्षुःमहान्परिव्राट्व्यवहारेणसमाध्यभ्यासप्रभृतिना ॥ २ ॥ समाधीति ॥ समाध्यभ्यासेनशुद्धंनिर्मलंतस्यभिक्षोश्चित्तंयच्चिंतयतिभावयतिआशुतस्यवस्तुनोभावंस्वरूपंगच्छति तद्रूपंभवति अंबुवीचितामिव ॥ ३ ॥ कदाचिदिति ॥ समाधानविरतःसमाधेर्व्युत्थितः क्रियाक्रमंव्यवहारप्रकारम् ॥ ४ ॥

तस्येति ॥ चिंतयतस्तस्यलीलार्थंविनोदार्थं सामान्यजनवृत्तितां सामान्यजनःसाधारणजनःपामरजनइत्यर्थः। तद्वृत्तितांभावयामीतिस्वतए
वेयंप्रतिभाप्रतिज्ञाविशेषोजातः ॥५॥ इतीति ॥ इतिपूर्वोक्तप्रकारेणसंचिंत्यतस्यचेतस्तदाचिंतानुसारेणनरांतरंपुरुषांतरमभूत्। तथाहिचेत
श्चिंतावशात्स्पंदसंत्यागमात्रेणस्पंदश्चलनं संस्थानसंत्यागःपूर्वसंनिवेशत्यागः पूर्ववासनात्यागइत्यर्थः। तन्मात्रेणावर्ततेनरांतरंप्रतिपद्यते
अंब्विवयथाहिजलंवायुवशाच्चलितंसत्पूर्वसंस्थानत्यागेनतरंगादिरूपतामापद्यतेतद्वत् ॥ ६ ॥ तेनेति ॥ तेनचिंतानरेणचिंताकल्पितपुरुषे

तस्यचिंतयतोजाताप्रतिभेयमितिस्वतः॥ भावयाम्याशुलीलार्थंसामान्यजनवृत्तिताम् ॥ ५ ॥
इतिसंचिंत्यचेतोऽस्यस्थितंकिंचिन्नरांतरम्॥ स्पंदसंस्थानसंत्यागमात्रेणावर्ततेंऽब्विव ॥ ६ ॥ ते
नचिंतानरेणाथकृतंनामात्मवांछया॥ जीवटोऽस्मीतिसहसाकाकतालीयवांछितम् ॥ ७ ॥ जीव
टोविजहाराथसस्वप्नपुरुषश्चिरम् ॥ स्वप्ननिर्माणनगरेकस्मिंश्चित्पुरवीथिषु ॥ ८ ॥ तत्रपानंपपौ
मत्तोमदनिद्रामवापच ॥ स्वप्नेददर्शविप्रत्वंपाठानुष्ठानतुष्टिमत् ॥ ९ ॥ प्रतिभामात्रसंपन्नंचित्ते
देशांतराप्तिवत् ॥ कदाचित्सद्विजश्रेष्ठस्त्वहर्व्यापारनिष्ठया ॥ १० ॥ सुष्वापांतर्व्यवहतिर्बीजा
वस्थामिवद्रुमः ॥ द्विजोऽपश्यत्स्वयंस्वप्नेसामंतत्वमथात्मनि ॥ ११ ॥

णस्वयमेवास्मीति जीवटोऽस्मीति काकतालीयवांछितंयदृच्छयाभिमतंनपुनरभिजनविद्यावृत्तादिनाप्राप्तंनामकृतं स्वेनैवकाचिदुत्पन्नासं
ज्ञाकल्पितेत्यर्थः ॥७॥ जीवटइत्यादि ॥ इयमिहजीवटप्रभृतिरुद्रपर्यंताभिक्षोःस्वप्नपरंपरा ॥८॥ जीवटःस्वप्नेपाठानुष्ठानतुष्टिमत् वेदशास्त्रपाठे
नतदुक्ताचरणेनचतुष्टिमत्कृतकृत्यम् ॥ ९ ॥ प्रतिभासमात्रेणैवसंपन्नंविप्रत्वंददर्श चित्तेदेशांतराप्तिवत्। तथाहि चित्तेदेशाद्देशांतरमापद्यतेत
द्वत् सचद्विजश्रेष्ठःकदाचिदहर्व्यापारनिष्ठयादिवसव्यापारभरेणश्रांतिहेतुनाबीजरूपतांपादपइव ॥ १० ॥ ११ ॥

घननिद्रामागतः स्वप्ने आत्मनि पताकायुक्तहस्त्यश्वादिसेनयैव जलदमालया युक्तं सामंतत्वं मंडलेश्वरत्वमपश्यत् सच सामंतः स्वप्ने ककुब्वलयपालिनीं निखिलदिङ्मंडलपालनसमर्थां राजतां चक्रवर्तितामपश्यत् ॥ १२ ॥ सच नृपः सुरस्त्रीत्वम् ॥ १३ ॥ साच सुरस्त्री मृगीत्वम् ॥ १४ ॥ साच मृगी वल्लीत्वम् ॥ १५ ॥ ततस्तिर्यंचोऽपीत्यर्थांतरन्यासः यतो दृष्टानां श्रुतानां च चेतोऽक्षतमनुपहतं स्मरणं स्मृतिः ततो हेतोः संस्कारवशात्तिर्यंचोऽपि स्वप्नं पश्यंति ॥ १६ ॥ साच लता वनदेवीनां वनक्रीडासु लतागृहवद्विलसंती बभूव ॥ १७ ॥ साच लता बीजांतःस्थांकुराकारसमज्ञे



ससामंतः कृताहारः कदाचिद्घननिद्रया ॥ अपश्यद्राजतां स्वप्ने ककुब्वलयपालिनीम् ॥ १२ ॥ स कदाचिन्नृपः स्वस्थः सुष्वापास्तमिते ऽहितः ॥ अपश्यत्स्वात्मनि स्वप्ने सुरस्त्रीत्वमनिंदितम् ॥ १३ ॥
सासुरस्त्री रतिश्रांता निद्रां गाढामुपागता ॥ अपश्यदात्मनि स्वप्ने मृगीत्वमतिचंचलम् ॥ १४ ॥
सा मृगी लोलनयना कदाचिन्निद्रया युता ॥ स्वप्ने ददर्श वल्लीत्वं स्वाभ्यासाद्रूढमात्मनि ॥ १५ ॥
तिर्यंचोऽपि प्रपश्यंति स्वप्नं चित्ते स्वभावतः ॥ दृष्टानां च श्रुतानां च चेतः स्मरणमक्षतम् ॥ १६ ॥
साबभूव लता पुष्पफलपल्लवशालिनी ॥ वनदेवीवनक्रीडालतागृहविलासिनी ॥ १७ ॥ बीजांतःस्थांकुराकारसमज्ञेयाधिरूढया ॥ सापश्यदंतःसंवित्त्या स्फुटं लंबनमात्मनः ॥ १८ ॥ कंचित्कालं सुषुप्तस्थकलया जडतां घनाम् ॥ अनुभूय ददर्शाथ स्वात्मानं भ्रमरं स्थितम् ॥ १९ ॥

याधिरूढया बीजांतर्गतस्यांकुरस्य य आकारः तत्समेन निगूढेन ज्ञेयवस्तुना अधिरूढया आश्रितया अंतःसंवित्त्या आत्मनो लतादेहधारिणो लंबनेलताभावोचितं वृक्षादौ क्वचिल्लंबनमपश्यदिति लतायास्तादृग्दशा दर्शिता ॥ १८ ॥ अथ सैव लता सुषुप्तस्थकलया सुषुप्तस्थस्य यादृशी कला संवित्तिः तादृश्यैव कलया घनां जडतां निद्रारूपं जाड्यमनुभूय स्वप्ने स्वात्मानं भ्रमरं स्थितं ददर्श ॥ १९ ॥

सचभ्रमरः सरोजिन्यांव्यसनीआसक्तःसन्बिसनालगोबभूव तथाहि जडमतेरपिरसानभिज्ञस्यकृमिकीटादेरपिचेतः क्वचिदेवस्त्रीव्यक्तौरतिं याति ॥ २० ॥ २१ ॥ सचभ्रमरस्तयानलिन्यासार्धंगजेनचूर्ण्यमानस्तद्रूपालोकभावनया ॥ २२ ॥ आत्मानमामोदमत्तहस्तितयाआमोदेनगंधविशेषेणमत्तोयोहस्तीतद्भावेनोदितंददर्श । सचगजःकेनचिद्राज्ञाखातेगर्तेनिपात्य ॥ २३ ॥ बद्धःशिक्षितश्चराजवल्लभोभूत्वाक्वचि

सबभूवसरोजिन्यांव्यसनीबिसनालगः ॥ क्वचिदेवरतिंयातिचेतोजडमतेरपि ॥ २० ॥ तामाजगामनलिनींपरिलोलयितुंगजः ॥ रम्यवस्तुक्षयायैवमूढानांजृंभतेपदम् ॥ २१ ॥ नलिन्यासतयासार्धंतत्रचूर्णत्वमाययौ ॥ भ्रमरोवारणालोकाद्वारणालोकभावनात् ॥ २२ ॥ ददर्शात्मानमामोदमत्तहस्तितयोदितम् ॥ शुष्कसागरगंभीरेगजःखातेपपातह ॥२३॥ बभूववल्लभोराज्ञोबध्वातेनाशुशिक्षितः ॥ क्वचित्समरसंमर्देघातितोऽस्तमुपाययौ ॥ २४ ॥ गंडस्थभ्रमराभ्यासाद्गजोभूयोऽप्यभूदलिः ॥ पुनःकरिखुराक्रांत्यापद्मिन्याचूर्णतांययौ ॥ २५ ॥ पार्श्वस्थहंससंवित्त्याबभूवकलहंसकः ॥ कलहंसश्चिरतरंयोनिष्वन्यासुसंलुठन् ॥ २६ ॥ यदृच्छयाकदाचित्तुजातःपद्मजसारसः ॥ ब्रह्मसारसतांयातोविजहारससारसः ॥ २७ ॥ सकदाचिद्ददर्शाथरुद्रंरुद्रपुरेखगः ॥ तत्रबुद्धिरभूत्तस्यरुद्रोऽहमितिनिश्चिता ॥ २८ ॥

त्समरेहन्यमानः ॥ २४ ॥ गंडस्थलगतभ्रमरभावनयापुनर्भ्रमरोऽभूत् सचभ्रमरःकरिपदाक्रांत्याचूर्णितः ॥ २५ ॥ पार्श्वस्थहंससंवित्त्याकलहंसोबभूव सचकलहंसोयोन्यंतरेषुलुठन् ॥ २६ ॥ यदृच्छयापद्मजस्यब्रह्मणःसारसोहंसोजातः ॥ २७ ॥ सचखगोहंसःकदाचिच्चब्रह्मणोरु

द्रपुरागमनेरुद्रंदृष्ट्वातद्भावनयारुद्रोऽहमितिसंस्कारवशान्निश्चितबुद्धिरभूत् ॥ २८ ॥ रुद्रेति ॥ तत्ररुद्रपुरेवपुःरुद्राकारवपुरयंहंसोगणगोष्ठीविलासिभिः प्रमथपरिषत्संभूतैस्तैःप्रसिद्धैःशिवपुराचारैःरुद्रलोकव्यवहारैःशिवमाहात्म्यवर्णनादिभिःयथेच्छयाविजहार ॥ २९ ॥ रुद्रइति ॥ सरुद्रःअनुत्तमज्ञानविलासिन्यासर्वोत्तमज्ञानविस्तारयाधियाप्राक्तनंपूर्वजन्मसंभूतमशेषतस्तमुदंतंवृत्तांतमपश्यत् ॥३०॥ निरावरणेति ॥ निरावरणंजन्मांतरैरप्यावरणरहितंविज्ञानमेववपुर्यस्यसभगवान्हरः स्वस्वप्रशतविस्मितः स्वीयेनस्वप्रशतेनविस्मितः सन्नेकांतेस्वयमेवैवमुवाच



रुद्रभूतवपुस्तत्रविजहारयथेच्छया ॥ तैस्तैःशिवपुराचारैर्गणगोष्ठीविलासिभिः ॥ २९ ॥ रुद्रस्त्वनुत्तमज्ञानविलासिन्यातयाततः ॥ स्वमशेषमुदंतंतमपश्यत्प्राक्तनंधिया ॥ ३० ॥ निरावरणविज्ञानवपुःसभगवान्हरः ॥ उवाचस्वयमेकांतेस्वस्वप्रशतविस्मितः ॥ ३१ ॥ अहोविचित्रंमायेयंबतविश्वविमोहिनी ॥ असत्यैवापिसद्रूपासुदृढामरुवारिवत् ॥ ३२ ॥ एवमत्यंतचित्रासुसंसारारण्यभूमिषु ॥ बह्वीष्वहमितिभ्रांतस्त्वशून्यास्विवभूरिशः ॥ ३३ ॥ कस्मिंश्चिदभवंसर्गेत्वहंजीवटनामकः ॥ कस्मिंश्चिद्ब्राह्मणश्रेष्ठःकस्मिंश्चिद्वसुधाधिपः ॥ ३४ ॥ हंसःपद्मवनेभूत्वाविंध्यकक्षेचवारणः ॥ एवंयोनिशतंगच्छन्यातोऽहमितिरुद्रताम् ॥ ३५ ॥ अत्रवर्षसहस्राणिचतुर्युगशतानिच ॥ समतीतान्यनंतानिदिनानुचरितानिच ॥ ३६ ॥

॥ ३१ ॥ अहोइति ॥ इयंमायाअसत्यैवापिमिथ्याभूतापिमरुवारिवत्सुदृढासतीसद्रूपाविश्वंविमोहयति । बतेतिखेदे ॥ ३२ ॥ एवमितिश्लोकत्रयंवाक्यम् ॥ अत्यंतचित्रासुसंसारारण्यभूमिषुबह्वीषुभ्रांतोऽहंसुमनोमात्रकल्पनादनेकेषुमार्गेषुजीवटादिरूपेणयोनिशतंगच्छन्निति देहानांरुद्रतांयातः ॥ ३३ ॥ ३४ ॥ ३५ ॥ अत्रेतिश्लोकद्वयंवाक्यम् ॥ असौरुद्रःअत्रजन्मांतरेषुवर्षसहस्रादिभूयान्कालोगतः ॥ ३६ ॥

तस्मात्तांस्तान्नानारूपान्स्वसंसारानुत्थायगत्वा आलोकयामितेभ्यश्चसम्यगालोकदानेनसम्यग्ज्ञानप्रदानेनतान्मयासहएकीकरोमि ॥३७॥ इत्येवंसंचिंत्ययत्रसर्गेभिक्षुर्विहारस्थःमठेस्थितः। विहरंत्यस्मिन्भिक्षवइतिविहारोमठउच्यते। सुप्तःशववदास्तेतंसर्गंप्रजगाम ॥३८॥ बोधयित्वेति ॥ अथतंभिक्षुंबोधयित्वातंबोध्यचेतसाचित्तेनचेतनेनज्ञानेनचयोजयामास भिक्षुरप्यात्मनोभ्रमंसस्मार ॥ ३९ ॥ रुद्रमिति ॥ सभिक्षुरात्मानंरुद्रमालोक्यतथाजीवटादिमयंचात्मानमालोक्यबोधात्परमार्थावगमात् अविस्मयार्होऽपिमायामहिम्नाविस्मयंययौ ॥४०॥ अथेत्यादि

तांस्तान्सर्वान्स्वसंसारानुत्थायालोकयाम्यहम् ॥ सम्यगालोकदानेनतेभ्यएवकरोम्यहम् ॥ ॥ ३७ ॥ इतिसंचिंत्यरुद्रोऽसौतंसर्गंप्रजगामह ॥ यत्रभिक्षुर्विहारस्थःसुप्तःशवइवस्थितः ॥३८॥ बोधयित्वाथतंभिक्षुंचेतसाचेतनेनच ॥ द्योतयामाससस्माराभिक्षुरप्यात्मनोभ्रमम् ॥ ३९ ॥ रुद्रमात्मानमालोक्यजीवटादिमयंतथा ॥ बोधादिविस्मयार्होऽपिसभिक्षुर्विस्मयंययौ ॥ ४० ॥ अथरुद्रस्तथाभिक्षुर्द्वावेवोत्थायजग्मतुः ॥ क्वापिजीवटसंसारंचिदाकाशैककोणगम् ॥ ४१ ॥ तंप्रबोध्यानियोज्याशुचेतसाचेतनेनच ॥ बोधयंतस्त्रयोऽप्यासन्विस्मिताअप्यविस्मिताः ॥ ४२ ॥ एकरूपास्त्रिरूपास्तेरुद्रभिक्षुकजीवटाः ॥ जग्मुर्विप्रादिसंसारांस्तैश्चसंमिलितास्तथा ॥ ४३ ॥ दिव्यज्ञानाविरेजुस्तेरुद्रांशाःशतमुत्तमम् ॥ रुद्रेणप्रेषिताःसर्वेतेप्रतिस्वंस्वमालयम् ॥ ४४ ॥

ना ॥ अथरुद्रेणभिक्षुवज्जीवटादीनामपिप्रबोधनेसतितेसर्वेपिरुद्रवद्दिव्यज्ञानतयारुद्रांशाः संतोविरेजिरे ततोभिक्षोर्जन्मशतोपभोग्यंप्रारब्धशेषमनुसंधायपरमार्थंरुद्रेणप्रेषिताःसंतोजीवटादिसंक्रांतारुद्रांशाःस्वंस्वमालयंप्रापुः रुद्राणांतत्स्थानानांचबहुत्वात् । स्वंस्वमितिवीप्सयानिर्देशः । तेऽपिजीवटब्राह्मणादयःस्वंस्वमास्पदंप्राप्यस्वकलत्रादिभिःसहस्थित्वादेहांतेरुद्रमाप्नुवन्निति सार्धश्लोकषट्कार्थः ॥४१॥४२॥ ४३ ॥ ४४॥

॥ ४५ ॥ ४६ ॥ सर्वमिति ॥ चितःकोशेकोशवत्समस्तवस्तुनिधौस्वरूपेसर्वंवस्त्विति ॥ ४७ ॥ अतःसर्वात्मत्वादसौचित् यथा येनप्रकारेणतदात्मकंतद्रूपंतत्सर्वकालंविद्यते सर्वस्यापिसंविद्विवर्तत्वात् ॥ ४८ ॥ यदिविद्यतेतर्हितत्प्राप्यतइत्यत्राह ॥ संकल्पेति ॥ संकल्पस्वप्नगंसंकल्पगतंवस्तुययादशयाप्राप्यते सैवसिद्धदशाअभ्यासयोगाभ्यांवायुनिरोधेनचविनानलभ्यते ॥ ४९ ॥ येषामिति ॥



तेनरुद्रेणतांमायामवलोक्यतथोदिताम् ॥ स्वांशास्तामेवसंसारस्थितिंसंप्रेषिताःपुनः ॥ ४५ ॥ प्रययुःस्वास्पदंतेऽपिजीवटब्राह्मणादयः ॥ स्वकलत्रैःसमंदेहंक्षपयित्वाथकालतः ॥ रुद्रेणसहते सर्वेदेहांतेरुद्रमाप्नुवन् ॥ ४६ ॥ वसिष्ठउवाच ॥ सर्वमस्तिचितःकोशेयद्यथालोकयत्यसौ ॥ चित्तथातदवाप्नोतिसर्वात्मत्वादसंशयम् ॥ ४७ ॥ यत्स्वप्नेदृश्यतेयच्चसंकल्पैरवलोक्यते ॥ तत्तथा विद्यतेतत्रसर्वकालंतदात्मकम् ॥ ४८ ॥ संकल्पस्वप्नगंवस्तुययाचदशयाप्यते ॥ परमाभ्यासयोगाभ्यांविनात्वेतन्नलभ्यते ॥ ४९ ॥ येषांतुयोगविज्ञानदृष्टयःफलिताःस्थिताः ॥ सर्वंसर्वत्रपश्यंतितएतेशंकरादयः ॥ ५० ॥ सर्वंह्यभिमतंकार्यमेकनिष्ठस्यसिद्ध्यति ॥ दक्षिणांककुभंपश्यन्कःप्राप्नोत्युत्तरांदिशम् ॥ ५१ ॥

येषांतुसिद्धानांयोगविज्ञानदृष्टयः योगःसमाधिर्विज्ञानमध्यात्मशास्त्रज्ञानंतज्जन्यादृष्टयोदर्शनानिफलिताःफलवत्यःस्थिताः तएतेशंकरादयःस्वसंकल्पानुसारेणसर्वंवस्तुसर्वत्रदेशेकालेचपश्यंति ॥ ५० ॥ अभिमतंसर्वंकार्यमपिएकनिष्ठस्यतदेकनिष्ठस्यैवसिद्ध्यति । दक्षिणांककुभंपश्यन्कोनामोत्तरांदिशंप्राप्नोति ॥ ५१

संकल्पेति ॥ संकल्पार्थतत्परैरेवावगम्यते अग्रसंस्थितार्थः अग्रेष्वग्रगेषुसंस्थितोऽप्यर्थःअग्रस्थार्थपरैःपुरोवर्तिवस्तुतत्परैरेवावगम्यते ॥ ५२ ॥
अग्रस्थेइति ॥ योमूढःअग्रस्थेवस्तुनिबुद्धिसंस्थितेबुद्धौस्थितेसतिसंकल्पेसंकलिपतार्थंप्राप्तुमिच्छति तदाअविवेकीएकनिष्ठत्वाभावादेकत्र
तात्पर्याभावात् तद्वयंअग्रस्थंकल्पितंचोभयंनाश्रयेत् यद्बुद्धिस्थंनतुप्राप्तुमिच्छतिनतद्बुद्धिस्थमित्युभयोरप्यसिद्धेर्विनाशः ॥ ५३ ॥ इहेति ॥
अहंइहदेशेकालेसंकल्पार्थंचविद्याधरःस्यामितिवाअहमिहवैदिकःस्यामितिवा यदेकध्यानसाफल्यंएकवस्तुविषयस्यध्यानस्यफलसंबंधः स

संकल्पार्थपरैरेवसंकल्पार्थोऽवगम्यते ॥ अग्रस्थार्थपरैरेवअग्रस्थार्थोऽवगम्यते ॥ ५२ ॥ अ
ग्रस्थेबुद्धिसंस्थेयःसंकल्पंप्राप्तुमिच्छति ॥ तदासावेकनिष्ठत्वाभावात्तन्नाशयेद्द्वयम् ॥ ५३ ॥ इह
विद्याधरोऽहंस्यामहंस्यामिहवैदिकः ॥ इत्येकज्ञानसाफल्यंदृष्टांतस्त्वर्थसिद्धये ॥ ५४ ॥ तस्मा
देकार्थनिष्ठत्वाद्भिक्षुजीवेनरुद्रताम् ॥ प्राप्यरुद्रात्मनालब्धासंकल्पार्थस्यसत्यता ॥ ५५ ॥ भि
क्षुसंकल्पजीवास्तेप्रत्येकंतत्पृथग्जगत् ॥ पश्यंतिरुद्ररूपत्वात्प्राप्ताःसर्वेंचसत्यताम् ॥ ५६ ॥
एवंतेभिक्षुसंकल्पाज्जीवटब्राह्मणादयः ॥ रुद्रविज्ञानवशतःस्वसंकल्पपुरीर्गताः ॥ ५७ ॥ ततो
रुद्रेणसंगत्यविविशुस्तत्परंपदम् ॥ ५८ ॥

एवकार्यसिद्धयेदृष्टांतः ॥ ५४ ॥ तस्मादिति ॥ तस्मात्पूर्वोक्ताद्धेतोरेकार्थनिष्ठत्वात् संकल्पार्थैकनिष्ठत्वात् भिक्षुरूपेणजीवेनरुद्रतांप्राप्य
तेनरुद्रात्मनासंकल्पार्थस्यसत्यताप्राप्ता ॥ ५५ ॥ भिक्ष्विति ॥ तेभिक्षुसंकल्पसिद्धाजीवारुद्ररूपत्वात् संकल्पानांसत्यतांसाफल्यंप्राप्ता
स्ततः प्रत्येकंतज्जगत्पृथक्विलक्षणंपश्यंति स्वतंत्रत्वात्सत्यसंकल्पत्वाच्चेतिभावः ॥ ५६ ॥ एवमिति ॥ तेपूर्वोक्ताभिक्षुसंकल्पकल्पिताजी
वटब्राह्मणादयःरुद्रस्यमहिम्नास्वसंकल्पपुरीःस्वसंकल्पकल्पितानिस्थानानिगताःप्राप्ताः ॥ ५७ ॥ ५८ ॥

॥ ५९ ॥ ६० ॥ ६१ ॥ इतिश्रीवासिष्ठविवरणेनिर्वाणप्रकरणेशतरुद्रोपाख्यानंनामचतुस्त्रिंशःसर्गः ॥ ३४ ॥ पूर्वमेषाजन्मपरंपरास्वसंकल्परूपभ्रांतिसिद्धेतिनिदर्शयितुंशतरुद्राख्यानमुक्तं इदानींसौषुप्तमौनसंपादकंकर्कटीप्रश्नसंघवद्दुर्घटोवेतालप्रश्नसंघोनिरूप्यते ॥ सुषुप्तेति ॥ चित्तविलासितांसंकल्पादिरूपंचित्तविलासंत्यक्त्वाकलनामलनिर्मुक्तः वासनारूपमलरहितःसुषुप्तमौनवान् वक्ष्यमाणलक्षणसुषुप्तमौ



श्रीरामउवाच ॥ एवंतेभिक्षुसंकल्पाज्जीवटब्राह्मणादयः ॥ कथंसत्यत्वमायाताःसंकल्पार्थैकसत्यता ॥५९॥ वसिष्ठउवाच ॥ एकःसहस्रंभवतियथाचैषजनार्दनः ॥ अंशावतारलीलाभिःकुरुतेजागतींस्थितिम् ॥६०॥ एवंतेभिक्षुसंकल्पाज्जीवटब्राह्मणादयः ॥ संशुद्धसंविदेकांशाःसत्याइवकिलस्थिताः ॥६१॥ इतिश्रीयोगवासिष्ठसारेमोक्षोपायेनिर्वाणप्रकरणेशतरुद्रोपाख्यानंनामचतुस्त्रिंशःसर्गः ॥ ३४ ॥ वसिष्ठउवाच ॥ सुषुप्तमौनवान्भूत्वात्यक्त्वाचित्तविलासिताम् ॥ कलनामलनिर्मुक्तस्तिष्ठावष्टब्धतत्पदः ॥१॥ श्रीरामउवाच ॥ वाङ्मौनमक्षमौनंचकाष्ठमौनंचवेद्म्यहम् ॥ सुषुप्तमौनंमौनेशब्रह्मन्ब्रूहिकिमुच्यते ॥ २ ॥ वसिष्ठउवाच ॥ द्विविधःप्रोच्यतेराममुनिर्मुनिवरैरिह ॥ एकःकाष्ठतपस्वीस्याज्जीवन्मुक्तस्तथेतरः ॥ ३॥ अभावितायांशुष्कायांक्रियायांबद्धनिश्चयः ॥ हठाज्जितेंद्रियग्रामोमुनिःस्यात्काष्ठतापसः ॥ ४ ॥

नयुक्तोभूत्वा अवष्टब्धतत्पदःअवलंबितब्रह्मभावस्तिष्ठ ॥ १ ॥ वागिति ॥ वाङ्मौनादीनांलक्षणंवक्ष्यते मौनेश मुनीनांसमूहोमौनंतस्येशमुनिश्रेष्ठेत्यर्थः ॥ २ ॥ ३ ॥ अभावितायांब्रह्मभावनारहितायांअतश्चशुष्कायांनीरसायांक्रियायांप्राणायामादिरूपायांबद्धनिश्चयःसन्हठयोगाजितेंद्रियग्रामोमुनिःकाष्ठतापसःस्यात् ॥ ४ ॥

यथेति ॥ योमुनिः इदंजगद्यथाभूतंतथाबुद्ध्वाब्रह्मैवेदंसर्वमितिनिश्चित्य भावितात्माब्रह्मैवाहमितिनिश्चितात्मतत्त्वः आत्मनिस्थितःस्वरूपमेवा नुसंदधानोव्यवहारमात्रेणलोकोपमोऽपि अंतःस्वरूपसुखानुभवात्तृप्तस्तिष्ठतिसमुनिर्जीवन्मुक्तःस्मृतः ॥ ५ ॥ उभयानुगतंसामान्यलक्षण माह ॥ एतयोरिति ॥ शांतयोर्निर्विकारचित्तयोरेतयोःप्रकृतयोःप्रवृत्तयोर्मुनिनाथयोःचित्तनिश्चयरूपात्मा योगेनतत्त्वज्ञानेनवा यश्चित्त स्यनिश्चयएकनिष्ठतातद्रूपआत्मास्वभावोयस्यतादृशोभावोऽभिप्रायोमौनशब्देनकथ्यते ॥ ६ ॥ सुषुप्तमौननिरूपणायप्रथमंमौनांतराणि लक्षयन्नाह ॥ वागिति ॥ वचसांनिरोधाज्जातंवाङ्मौनंबलाद्धठयोगवशाच्चक्षुरादींद्रियनिग्रहोऽक्षमौनं तद्वशादेवचेष्टानांशरीरतदवयव

यथाभूतमिदंबुद्ध्वाभावितात्मात्मनिस्थितः ॥ लोकोपमोऽपितृप्तोंऽतर्यःसमुक्तोमुनिःस्मृतः ॥ ५ ॥
एतयोर्योऽभवद्भावःशांतयोर्मुनिनाथयोः ॥ चित्तनिश्चयरूपात्मामौनशब्देनकथ्यते ॥ ६ ॥ वा
ङ्मौनंवचसांरोधोबलादिंद्रियनिग्रहः ॥ अक्षमौनंपरित्यागश्चेष्टानांकाष्ठसंज्ञकम् ॥ ७ ॥ प्रस्फुर
च्चित्तकलनमेतन्मौनत्रयंस्थितम् ॥ एतेषांहठमौनानांविषयःकाष्ठतापसः ॥ ८ ॥ अविभागम
नायासंयदनाद्यंतमास्थितम् ॥ ध्यायतोऽध्यायतश्चैवसौषुप्तंमौनमुच्यते ॥ ९ ॥

क्रियाणांपरित्यागःकाष्ठमौनम् ॥ ७ ॥ प्रस्फुरदिति ॥ एतत्पूर्वोक्तंमौनत्रयंप्रस्फुरच्चित्तकलनंविलसच्चित्तवासनंस्थितं अतएतेषांहठमौ नानांकाष्ठतापसएवविषयआश्रयोनजीवन्मुक्तइत्यर्थः ॥ ८ ॥ अथचतुर्भिःश्लोकैःसुषुप्तमौनमाह ॥ अविभागमिति ॥ ध्यायतोऽध्यायतो वाअंतर्मुखस्यबहिर्मुखस्यवामुनेरविभागं अविद्यमानजाग्रदादिविभागं अनायासंअविद्यमानकर्मेंद्रियनिरोधक्लेशंअनाद्यंतंउपक्रमोपसंहा ररहितंयदास्थितंब्रह्मनिष्ठत्वं एतत्सौषुप्तंसुषुप्तिसंभवंमौनंउच्यते । महायोगएवसुषुप्तमौनमित्यर्थः । यदाहसर्वज्ञयोगी । प्रपंचस्यभानेऽप्यभाने समंयन्नवाविद्ययाविद्ययालिंगितांगम् । तदात्मस्वरूपंतदानंदसांद्रंपरंब्रह्मभावंमहायोगमाहुः इति । यथाचशैवे । शिवःस्वभावएवै

कश्चिंत्यतेनिरुपाधिकः । ययासैवमनोवृत्तिर्महायोगइहोच्यतेइति ॥ ९ ॥ यथेति ॥ नानात्वविभ्रमंनानात्वेनपरिभ्रांतमिदंजगद्यथाभूतंयेनप्रकारेणनिष्पन्नंतंप्रकारंबुद्ध्वाब्रह्मण्यध्यस्तत्वात्तदात्मकंनिश्चित्य असंदेहंनिर्विकल्पंयद्ब्रह्मभावेनास्थितंतत्सौषुप्तंमौनमेव । क्वचित्तुसौषुप्तंमौनसंगतमितिपाठः । तत्रमौनसंगतंमौनसंस्थानं मौनस्यप्रकारमित्यर्थः ॥१०॥ अनेकेति ॥ इदंजगत्अनेकसंविद्रूपात्मअनेकसंविद्रूपाआत्मानःस्वभावायस्यतादृशमाततंव्याप्तंशिवंब्रह्मैवेतियदनंतंनिरवधिकमास्थितंब्रह्मनिष्ठत्वंतत्सौषुप्तंमौनमुच्यते ॥ ११ ॥ आकाशमिति ॥ सर्वंजगत्आकाशंचिदाकाशविवर्तत्वादाकाशंनैव मूर्तिमत्त्वात् तथास्तिचअधिष्ठानसत्तायाःसद्रूपेणप्रतीतेःनास्तिचकल्पितत्वात् इतिजगतो

यथाभूतमिदंबुद्ध्वाजगन्नानात्वविभ्रमम् ॥ यदास्थितमसंदेहंसौषुप्तंमौनमुच्यते ॥ १० ॥ अनेकसंविद्रूपात्मशिवमेवेदमाततम् ॥ इत्यास्थितमनंतंयत्सौषुप्तंमौनमुच्यते ॥ ११ ॥ आकाशंनैवचाकाशंसर्वमस्तिचनास्तिच ॥ इतिस्थितंसमंशांतंयत्तन्मौनंसुषुप्तवत् ॥ १२ ॥ सुषुप्तमौनंयोगीशैर्द्विविधैःप्राप्यतेखलु ॥ सांख्ययोगिनएकेस्युरपरेयोगयोगिनः ॥ १३ ॥ सम्यग्ज्ञानावबोधेनसुसिद्धैकसमाधिनः ॥ संख्ययैवावबुद्ध्येयुस्तेसांख्यायोगिनःस्मृताः ॥ १४ ॥ प्राणाद्यनिलसंशांतौयुक्त्यायेपदमागताः ॥ अनामयमनाद्यंतंतेस्मृतायोगयोगिनः ॥ १५ ॥

ब्रह्मव्यतिरेकेणनास्तित्वंनिश्चित्यसममेकाकारंशांतंनिर्विकारंयत्स्थितंयानिष्ठातत्सुषुप्तवन्मौनं सुषुप्ततुल्यंमौनमित्यर्थः ॥ १२ ॥ सुषुप्तेति ॥ सांख्ययोगिनोयोगयोगिनश्चवक्ष्यंते ॥ १३ ॥ सम्यगिति ॥ सम्यग्ज्ञानावबोधेनतत्त्वज्ञानोदयेनसुसिद्धोयएकसमाधिःएकस्मिन्नद्वितीयेब्रह्मणिचित्तविश्रांतिस्तद्रूपलक्षितायेयोगिनः तेसंख्ययैवसम्यग्ज्ञानेनैवावबुद्धाइतिकृत्वा सांख्ययोगिनःस्मृताः ॥ १४ ॥ प्राणादीति ॥ येतुयुक्त्याअष्टांगयोगेनप्राणादीनामनिलानांसंशांतौसत्यांअनामयमनाद्यंतंचपदमागतास्तेयोगयोगिनः स्मृताः ॥ १५ ॥

उपादेयमिति ॥ शांतमकृत्रिमंपदमेवसर्वेषांयोगिनामुपादेयं अतोहेतोःसांख्यैर्योगिभिर्यत्स्थानंप्राप्यतेयोगैरपितत्परंस्थानंप्राप्यते ॥ १६ ॥ किंतत्पदमित्यत्राह ॥ यत्रेति ॥ यत्रयस्मिन्पदे वासनावागुराक्रांता वासनैववागुराबंधकत्वात् तयाआक्रांताऽव्याप्ताप्राणमनसोर्वृत्तिर्व्यापारः अत्यंतंसम्यङ्नोपलभ्यतेतदेवात्मस्वरूपंपरमंपदंविद्धि परब्रह्मस्वरूपंविद्धि ॥ १७ ॥ मनइति ॥ मनस्तावद्वस्तुतोऽसदेव अनवेक्षणादविचारान्मुधैवस्वप्नेमरणप्रत्ययवदुत्थितं अतःप्रेक्षमाणंविचार्यमाणंसन्नविद्यते । अविचारसिद्धस्यविचारेणनिवृत्तिर्युक्तैवेतिभा

**उपादेयंतुसर्वेषांशांतंपदमकृत्रिमम् ॥ यत्सांख्यैःप्राप्यतेस्थानंपरंयोगैस्तदेवहि ॥ १६ ॥ यत्र प्राणमनोवृत्तिरत्यंतंनोपलभ्यते ॥ वासनावागुराक्रांतातद्विद्धिपरमंपदम् ॥ १७ ॥ मनोमुधैवाभ्युदितमसदेवानवेक्षणात् ॥ स्वप्नेस्वमरणाकारंप्रेक्षमाणंनविद्यते ॥ १८ ॥ एकतत्त्वघनाभ्यासःप्राणानांविलयस्तथा ॥ मनोविनिग्रहश्चेतिमोक्षशब्दार्थसंग्रहः ॥ १९ ॥ एकार्थाभ्यसनप्राणरोधचित्तपरिक्षयाः ॥ एकस्मिन्नेवसंसिद्धेसंसिद्ध्यंतिपरस्परम् ॥ २० ॥ अविनाभाविनीनित्यंजंतूनांप्राणचेतसी ॥ कुसुमामोदवन्मिश्रेतिलतैलइवस्थिते ॥ २१ ॥ आधाराधेयवच्चैवएकाभावेविनश्यतः ॥ कुरुतश्चस्वनाशेनकार्यंमोक्षाख्यमुत्तमम् ॥ २२ ॥**

वः ॥ १८ ॥ एकेति ॥ एकतत्त्वघनाभ्यासः एकस्यैवस्वाभिमतस्यतत्त्वस्यनिरंतरमनुसंधानं तथाप्राणानांविलयः मनोनिग्रहश्चेति त्रितयमेवमोक्षशब्दस्यसंग्रहः । अतएतावदेवमोक्षसाधनमित्यर्थः ॥ १९ ॥ एकेति ॥ एकतत्त्वाभ्यासादीनांत्रयाणांमध्येएकस्मिन्नपिसिद्धे इतरेअपिसिद्ध्यंतीत्यर्थः ॥२०॥ अविनाभाविनीइतिश्लोकद्वयंवाक्यम् ॥ जंतूनांप्राणचेतसीकर्तृणीअविनाभावित्वात्तिलतैलवत् । कुसुमामोदवदाधाराधेयवच्चमिश्रेपरस्परसंगतेएवस्थिते ॥ २१ ॥ अतोहेतोरेकस्याभावेद्वेअपिनश्यतः स्वनाशेनकारणेनमोक्षाख्यमुत्तमंकार्यं

कुरुतश्च ॥ २२ ॥ एकस्मिन्निति ॥ सुदृढेप्रामाणिकेएकस्मिंस्तत्त्वेतावद्भावंचित्तवृत्तिंविभावयेत् । यावत्स्वाभ्यासाद्धेतोराततंभावत्वंभा व्यमानस्वरूपत्वमायाति ॥ २३ ॥ यदिति ॥ चेतःचित्तंयदेकतानंयस्मिन्वस्तुनिएकाग्रंभवति चिराभ्यासस्वभावतःचिरकालानुसंधा नवशात् शांताशेषविशेषौघंनिवृत्तनिखिलभेदंसत्क्षणात्तदेववस्तुभवति ॥२४॥२५॥ अस्तीति ॥ मंडलंदेशं जिघांसयाभक्षणेच्छया ॥२६॥



एकस्मिन्सुदृढेतत्त्वेतावद्भावंविभावयेत् ॥ भावोभावत्वमायातिस्वाभ्यासाद्यावदाततम् ॥२३॥ यदेकतानंभवतिचेतस्तद्भवतिक्षणात् ॥ शांताशेषविशेषौघंचिराभ्यासस्वभावतः ॥ २४ ॥ वसिष्ठउवाच ॥ संसृतिस्वप्नविभ्रांतौवेतालोदाहृतानिमान् ॥ प्रश्नानाकर्णयशुभान्प्रसंगात्स्मृ तिमागतान् ॥ २५ ॥ अस्तिविंध्यमहाटव्यांवेतालोविपुलाकृतिः ॥ सकंचिन्मंडलंगर्वादाजगा मजिघांसया ॥ २६ ॥ सवेतालोऽवसत्पूर्वंकस्मिंश्चित्सज्जनास्पदे ॥ बहुबल्युपहारेणनित्यतृप्तत यासुखी ॥ २७ ॥ निर्निमित्तंनिरागस्कंपुरोऽप्यभ्यागतंनसः ॥ क्षुधितोऽपिनरंहंतिसंतोहिन्याय दर्शकाः ॥ २८ ॥ सकालेनाटवीगेहोजगामनगरांतरम् ॥ न्याययुक्त्यानरंभोक्तुंक्षुधासमभिनो दितः ॥२९॥ तत्रप्रापसभूपालंरात्रिचर्याविनिर्गतम् ॥तमाहघनघोरेणशब्देनोग्रनिशाचरः ॥३०॥

बहुबल्युपहारेणमांसादिकल्पितबहुविधबलिसमर्पणेन ॥२७॥ निर्निमित्तमिति ॥ सवेतालःक्षुधितोऽपिनिरपराधंनरंपुरोऽभ्यागतमपिनिर्नि मित्तंनहंति । हियस्मात्कारणात्संतोविद्वांसःन्यायदर्शकान्यायस्यप्रवर्तकाः । वेतालोब्रह्मवित्तयाअन्यायेननहंतीत्यर्थः ॥ २८ ॥ २९ ॥ तत्रेति ॥ रात्रिचर्याविनिर्गतम् । राजानोहिराज्यस्थितिंविचारयितुमेकाकिनःप्रच्छन्नवेषेणरात्रावटंति । तयारात्रिचर्ययाविनिर्गतम् ॥ ३० ॥

॥ ३१ ॥ ३२॥३३॥ ममेति ॥ संभवार्थांसंभवदर्थाम् ॥ ३४ ॥ अथश्लोकपंचकेनवेतालप्रश्नाः ॥ कस्येति ॥ तेचषडप्युत्तरावसरेस्पष्टीभवंति ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ ४० ॥ तत्रब्रह्मांडानिकस्यसूर्यस्यरश्मीनांकुशाणवःसूक्ष्मालेशाःइतिप्रश्नोत्तरंश्लोकद्वयेनाह ॥ ए

वेतालउवाच ॥ राजन्लब्धोऽसिभीमेनवेतालेनमयाधुना ॥ क्वगच्छसिविनष्टोऽसिभवभोजनमद्यमे ॥ ३१ ॥ राजोवाच ॥ भोरात्रिंचरनिर्न्यायंमांचेदत्सिबलादिह ॥ तत्तेसहस्रधामूर्धास्फुटिष्यतिनसंशयः ॥ ३२ ॥ वेतालउवाच ॥ नत्वामद्म्यहमन्यायंन्यायोऽयंहिमयोच्यते ॥ राजासिसकलाशाश्चपूरणीयास्त्वयार्थिनाम् ॥ ३३ ॥ ममैतामर्थनांराजन्संभवार्थांप्रपूरयन् ॥ प्रश्नानिमान्मयोक्तांस्त्वंसम्यगाख्यातुमर्हसि ॥ ३४ ॥ कस्यसूर्यस्यरश्मीनांब्रह्मांडानिकुशाणवः ॥ कस्मिंस्फुरंतिपवनेमहागगनरेणवः ॥ ३५ ॥ स्वप्नात्स्वप्नांतरंगच्छन्शतशोऽथसहस्रशः ॥ त्यजन्नत्यजतिस्वच्छंकःस्वरूपंप्रभास्वरम् ॥ ३६ ॥ रंभास्तंभोयथापत्रमात्रमेवपुनःपुनः ॥ अंतरंतस्तथांतश्चतथाकोऽणुःसएवहि ॥ ३७ ॥ ब्रह्मांडाकारभूतौचसूर्यमंडलमेरवः ॥ अपरित्यजतोऽणुत्वंकस्याणोःपरमाणवः ॥ ३८ ॥ कस्यानवयवस्यैवपरमाणुमहागिरेः ॥ शिलांतर्निबिडैकांतरूपामज्जाजगत्त्रयी ॥ ३९ ॥ वसिष्ठउवाच ॥ इत्युक्तवतिवेतालेवक्तुंप्रश्नान्विहस्यसः ॥ उवाचवचनंराजादंतांशुधवलांबरम् ॥ ४० ॥ राजोवाच ॥ एषचित्सूर्यउदितःसर्वमेतत्तपत्यसौ ॥ विज्ञानात्मैषपरमोभास्करोभाविताशयः ॥ ४१ ॥

षइति ॥ कस्यःसूर्यस्येतिपृष्टःसूर्यःचित्सूर्यएवातिमग्न्यतरेणत्वयोक्तः । यतोऽसौचित्सूर्यएवैतत्पूर्वंजगत्तपतिप्रकाशयति । तस्यभासासर्व

मिदंविभातीति श्रुतेः । एषचित्सूर्यउदितइतिक्वचित्पाठः । तत्रउदितःत्वयोक्तइत्ययमेवार्थः । तस्यप्रसिद्धसूर्यवैलक्षण्यमाह । एषविज्ञाना त्माभाविताशयः जीवरूपेणसर्वांतःकरणप्रवर्तकःपरमोभास्करः । भास्करादीनामपितत्तेजोलेशत्वात् । तदुक्तंगीतासु ॥ यदादित्यगतंते जोजगद्भासयतेऽखिलम् । यच्चंद्रमसियच्चाग्नौतत्तेजोविद्धिमामकम् ॥ इति ॥ ४१ ॥ इमेभुवनाभोगास्तस्यैवविज्ञानपरमार्कस्यत्रसरेणुतुल्या अंशाः तस्यैवभासाभवंतिच उत्पद्यंतेप्रतीयंतेच ॥ ४२ ॥ कस्मिन्पवनेमहागगनादयोरेणवःस्फुरंतीतिद्वितीयप्रश्नंश्लोकद्वयेनविवृणो ति ॥ कालेति ॥ कालसत्ताकालरूपायाःशक्तेःस्फूर्तिः इत्थंनभस्फूर्तिःनभःसत्तास्पंदसत्तास्पंदस्वभावस्यवायोःसत्ता अथचिन्मयीशुद्धचे

इमेयेभुवनाभोगास्तस्यैवत्रसरेणवः ॥ विज्ञानपरमार्कस्यभासाभांतिभवंतिच ॥ ४२ ॥ काल सत्तानभःसत्तास्पंदसत्ताथचिन्मयी ॥ शुद्धचेतनसत्ताचसर्वमित्यादिपावनम् ॥ ४३ ॥ परमा त्ममयेवायौरजःस्फुरतिचंचलम् ॥ कुसुमांगइवामोदस्तदतद्रूपकंस्वतः ॥ ४४ ॥ जगदाख्येमहा स्वप्नेस्वप्नात्स्वप्नांतरंव्रजन् ॥ रूपंत्यजतिनोशांतंब्रह्मशांतंत्वबृंहितम् ॥ ४५ ॥

तनसत्ताचकेवलचेतनसृष्टिश्चइत्यादिचेतनाचेतनात्मकंपावनंचिद्बिंबितंरूपम् ॥ ४३ ॥ चंचलंपंचभूतानिरजःकुसुमांगेकुसुमावयवेष्वामो दवद्धुपरमात्ममयेवायौ तदतद्रूपमरूपंचस्वतःस्फुरतितत्रतद्रूपत्वंस्वरूपत्वात् भासमानत्वात् केनचिदाकारेणप्रतीतिहेतुत्वाच्च । अतद्रूपंत्ववि कारित्वजडत्वदुःखमयत्वादिभिरितिद्रष्टव्यम् ॥ ४४ ॥ स्वप्नात्स्वप्नांतरंशतसहस्रशोगच्छन्नूपूर्वस्वप्नान्त्यजन्नपिस्वच्छंसुभासुरंचस्वरूपंनत्यज तीतितृतीयप्रश्नंश्लोकेनविवृणोति ॥ जगदिति ॥ जगदेवमहास्वप्नःमायामयत्वात् तत्रजन्मानिक्षुद्रस्वप्नाःतादृशान्स्वप्नाननुभवन्नप्यात्मा शां तत्वबृंहितंब्रह्मणोनिर्विकारस्वरूपेकल्पितंशांतंरूपंनत्यजति संसरन्नपिजीवोब्रह्मभावंनत्यजति संसारस्यकल्पितत्वादितिभावः ॥ ४५ ॥

चतुर्थस्योत्तरमाह ॥ रंभास्तंभेति ॥ रंभास्तंभःकदलीस्तंभः सयथा अंतरंतर्विविच्यदृश्यमानः पुनःपुनःपत्रमात्रमेव तथाविवर्त्यपिविचित्र तयावर्तमानमपिविश्वमिदमंतर्विचार्यमाणंब्रह्मैव ॥ ४६ ॥ ब्रह्मांडादयोमहांतोऽपिभावा अणुत्वमपरित्यजंतएवकस्याणोः परमाणवइतिपंच मंप्रश्नं सार्धेनश्लोकेनविवृणोति ॥ सूक्ष्मत्वादिति ॥ परमात्मासूक्ष्मत्वादिदंतयाग्रहीतुमशक्यत्वादलभ्यत्वात् प्राप्तुमशक्यत्वाच्चपरोऽणुकः परमाणुतुल्यः । असावेवपरमात्मा अनंतत्वाद्देशकालादिभिरपरिच्छिन्नत्वान्मेर्वादिमूलतांपरिच्छिन्नस्यमेर्वादेर्मूलतामुपादानत्वंप्राप्तः ॥ ४७ ॥ तच्चमेर्वादिवस्तुतस्यपरमात्मनःपुरतः परमाणुवदाभाति । परमात्ममहत्त्वापेक्षयामेर्वादीनामतिसूक्ष्मत्वात् ॥ ४८ ॥ अनवयवस्यपरमाणु

रंभास्तंभोयथापत्रमात्रमेवोत्तरात्तरेम् ॥ अंतरंतस्तथैवेदंविश्वंब्रह्मविवर्त्यपि ॥ ४६ ॥ सूक्ष्म त्वादप्यलभ्यत्वात्परमात्मापरोऽणुकः ॥ अनंतत्वादसावेवप्राप्तोमेर्वादिमूलताम् ॥ ४७ ॥ पर माणुवदाभातिमेर्वादिपुरतोऽस्यतत् ॥ ४८ ॥ परोऽणुरेषोऽलभ्यत्वात्पूरकत्वान्महागिरिः ॥ सर्वावयवरूपोऽपिनिरस्तावयवःपुमान् ॥ ४९ ॥ विज्ञप्तिमात्रसारत्वात्सर्वाधिष्ठानरूपिणः ॥ अस्यविज्ञप्तिमात्रस्यमज्जामात्रंजगत्त्रयम् ॥ विज्ञानमात्रमध्यंहिविद्धिसाधोजगत्त्रयम् ॥ ५० ॥

रूपस्यमहागिरेरियंजगत्त्रयीशिलांतर्गतानिबिडैकांतरूपाकठिनैकस्वभावामज्जासारभूतोंऽशइतिषष्ठंप्रश्नंसार्धश्लोकद्वयेनविवृणोति ॥ परइ ति ॥ एषपुमानलभ्यत्वादप्राप्यत्वात्परमाणुशब्दवाच्योऽपिशब्दपूरकत्वात् व्यापकत्वान्महागिरिरपिसर्वावयवरूपोऽपि स्थूलप्रपंचाकार तयादृश्यमानोऽपिवस्तुतोऽपिनिरस्तावयवः ॥ ४९ ॥ सर्वप्रपंचाधिष्ठानरूपिणोऽस्यविज्ञप्तिमात्रसारत्वात् विज्ञानमात्रमेवसारोंऽशइतिकृ त्वाविज्ञप्तिमात्रस्यास्यपुंसोजगत्त्रयंमज्जामात्रंघनीभूतःसारोंऽशएव । हियस्मात्कारणाज्जगत्त्रयंविज्ञानमात्रस्यमध्यंमध्येवर्तते अतोमध्यवर्ति त्वान्मज्जारूपत्वंयुज्यतइतिभावः ॥ ५० ॥

॥ ५१ ॥ ५२ ॥ इतिश्रीवासिष्ठविवरणेनिर्वाणप्रकरणेवेतालोपाख्यानंनामपंचत्रिंशःसर्गः ॥ ३५ ॥ पूर्वसौषुप्तमौनसंपादकविवेकप्रदर्शनायवेतालप्रश्नानिरूपिताः । इदानींतुदुर्लभापिचित्तविश्रांतिः स्वप्रयत्नेनैवलभ्यतइतिदर्शयितुंभगीरथकथाकथ्यते ॥ संहृत्येति ॥ सर्वतोबाह्यविषयाच्चित्तंसंहृत्यप्रत्याहृत्य स्तिमितेनस्वरूपनिष्ठेनअंतरात्मनांतःकरणेनोपलक्षितःप्रवाहपतितमाचारक्रमप्राप्तंकर्मकुर्वन्निरिच्छः शां



इतिराजमुखाच्छ्रुत्वावेतालःशांतिमाययौ ॥ भावितात्मतयातत्रविचारोत्थितयातया ॥ ५१ ॥ उपशांतवपुर्भूत्वागत्वैकांतमनिंदितम् ॥ बभूवाविरलध्यानीविस्मृत्यविरलांक्षुधाम् ॥ ५२ ॥ इतिश्रीयोगवासिष्ठसारेमोक्षोपायेनिर्वाणप्रकरणेवेतालोपाख्यानंनामपंचत्रिंशःसर्गः ॥ ३५ ॥ वसिष्ठउवाच ॥ संहृत्यसर्वतश्चित्तंस्तिमितेनांतरात्मना ॥ प्रवाहपतितंकुर्वन्निरिच्छस्तिष्ठशांतधीः ॥ १ ॥ आकाशविशदंकृत्वामनसैवमनोमुनिः ॥ तिष्ठैकशमशांतात्मासर्वत्रसमदर्शनः ॥ २ ॥ स्थिरबुद्धेरमूढस्ययथाप्राप्तानुवर्तिनः ॥ राज्ञोभगीरथस्येवदुःसाध्यमपिसिद्ध्यति ॥ ३ ॥ श्रीरामउवाच ॥ यथाचित्तचमत्कृत्याराज्ञोगंगावतारणम् ॥ भगीरथस्यसंपन्नंतन्मेकथयवैप्रभो ॥ ४ ॥ वसिष्ठउवाच ॥ आसीद्भगीरथोनामराजापरमधार्मिकः ॥ भुवःसमुद्रयुक्तायामंडलीतिलकोपमः ॥ ५ ॥ संकल्पानंतरंप्रापुर्यथाभिमतमार्थिनः ॥ चंद्रप्रसन्नवदनाद्यस्माच्चिंतामणेरिव ॥ ६ ॥



तधीस्तिष्ठ ॥ १ ॥ आकाशेति ॥ मनसैवविचारतत्परेणस्वचित्तेनैव ॥ २ ॥ ३ ॥ यथेति ॥ चित्तचमत्कृत्याआश्चर्यकारिणीचित्तवृत्तिः चित्तचमत्कृतिस्तया ॥ ४ ॥ ५ ॥ ६ ॥

॥ ७ ॥ यौवनइतिश्लोकद्वयंवाक्यम् ॥ सुविरागचमत्कारःशोभनोविरागचमत्कारोवैराग्यनिश्चयोयस्यांसाविचारकणिकासूक्ष्मोविचारः ॥ ८ ॥ ९ ॥ एकांतइति ॥ असमंजससंकुलांअसमंजसमन्याय्यंतेनसंकुलांव्याकुलाम् ॥ १० ॥ पुनरिति ॥ श्यामारात्रिः कर्मसांसारिकंव्यापारं शुष्कंविरसंनीरसंविपरीतरसंवादानादानशतंलभ्यते त्यागभोगशतंप्राप्यते ॥ ११ ॥ येनेति ॥ येनवस्तुनाप्राप्तेनसताअप्राप्तं

गंगासोपानपद्धत्यायेनपातालवासिनः ॥ योजिताब्रह्मणोलोकेबांधवालोकबंधुना ॥ ७ ॥ यौवनेवर्तमानस्यतस्यभूमीपतेरपि ॥ प्रविचारयतोलोकयात्रांपर्याकुलामिमाम् ॥ ८ ॥ सुविरागचमत्कारविचारकणिकोदभूत् ॥ वयस्यपिचतारुण्येदैवाद्वल्लीमराविव ॥ ९ ॥ एकांतेचिंतयामासमहीपतिरसावथ ॥ जगद्यात्रामिमांनित्यमसमंजससंकुलाम् ॥ १० ॥ पुनर्दिनंपुनःश्यामादानादानशतंपुनः ॥ तदेवशुष्कंविरसंलभ्यतेकर्मकुर्वता ॥ ११ ॥ येनप्राप्तेनलोकेऽस्मिन्नाप्राप्तमवशिष्यते ॥ तत्कृतंसुकृतंमन्येशेषंकर्मविषूचिका ॥ १२ ॥ पुनःपुनःपर्युषितंकर्मकुर्वन्नलज्जते ॥ मूढबुद्धिरमूढस्तुकिंकुर्यात्किलबालवत् ॥ १३ ॥ अथैकदोद्विग्नमनाःकदाचिन्नितुलंगुरुम् ॥ एकांतेसंस्तुतेर्भीतःसमपृच्छद्भगीरथः ॥ १४ ॥ जरामरणमोहादिरूपाणांभयकारिणाम् ॥ भगवन्सर्वदुःखानांकथमंतःप्रजायते ॥ १५ ॥

वांछितंकिंचिदपिनावशिष्यते । तदेवकृतंसुकृतंमन्ये शेषमन्यत्कर्मविषूचिकैव । पुनःपुनःप्रवृत्तिहेतुत्वात् । बंधनिवृत्तिहेतुरेवसत्कर्मेत्यर्थः । यदाहप्रह्लादः । तत्कर्मयन्नबंधायसाविद्यायाविमुक्तये ॥ आयासायापरंकर्मविद्यान्याशिल्पनैपुणमिति ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥

चिरेतिश्लोकद्वयंवाक्यम् ॥ चिरसाम्यात्मनाचिरंसाम्यरूपेणसर्वाविगताकारेण । यदुत्थितःयदुदितः तेननिर्विभागविलासिनानिर्विशेषंस्फुरता पूर्णेनअखंडेनभरितात्मनाव्याप्तेनज्ञेयावबोधेन ज्ञेयस्यपरतत्त्वस्यसाक्षात्कारेणसर्वदुःखानिक्षीयंतेग्रंथयोबंधहेतवःअहंकारादयस्त्रुटयंति छिद्यंते । संशयाः कैवल्यमस्तिनवा आत्मापरमानंदरूपोभवतिनवेत्येवमादयःशममायांति । सर्वकर्माणिपुण्यापुण्यरूपाणिसर्वाण्यपिकर्माणिशममायांति । भिद्यतेहृदयग्रंथिरित्यादिश्रुतेः ॥ १६ ॥ १७ ॥ किंतज्ज्ञेयमित्यतआह ॥ ज्ञेयमिति ॥ ज्ञानस्वरूपोनित्यःसर्वगतश्चविशुद्धआत्मैवज्ञेयइत्यर्थः ॥ १८ ॥ चिन्मात्रमितिश्लोकद्वयंवाक्यम् ॥ शांतत्वादिलक्षणंचिन्मात्ररूपंनिर्गुणंब्रह्मैवास्ति । इतरदात्मव्यति

त्रितुलउवाच ॥ चिरसाम्यात्मनोत्थेननिर्विभागविलासिना ॥ राजन्ज्ञेयावबोधेनपूर्णेनभरितात्मना ॥ १६ ॥ क्षीयंतेसर्वदुःखानित्रुटयंतिग्रंथयोऽभितः ॥ संशयाविलयंयांतिसर्वकर्माणिचानघ ॥ १७ ॥ ज्ञेयंतुविदुरात्मानंसंशुद्धज्ञप्तिरूपिणम् ॥ सचसर्वगतोनित्यंनास्तमेतिनचोदयम् ॥ १८ ॥ भगीरथ उवाच ॥ चिन्मात्रंसर्वगंशांतमस्तिनिर्मलमच्युतम् ॥ देहादिनेतरत्किंचिदितिवेद्मिमुनीश्वर ॥ १९ ॥ किंत्वत्रप्रतिपत्तिर्मेस्फुटतामेतिनप्रभो ॥ एतावन्मात्रसंवित्तिःस्यामहंसर्वदाकथम् ॥ २० ॥ त्रितुलउवाच ॥ ज्ञानेनज्ञेयनिष्ठत्वमेतिचेतोहृदंबरे ॥ ततःसर्ववपुर्भूत्वाभूयोजीवोनजायते ॥ २१ ॥

रिक्तंदेहादिरूपंवस्तुकिंचिदपिवस्तुतोनास्तीतिवेद्मि ॥ १९ ॥ किंतु अत्रास्मिन्नर्थेप्रतिपत्तिःज्ञानंस्थिरप्रतिष्ठांनैति अतःएतावन्मात्रसंवित्तिःचिन्मात्रानुसंधानमयःकथंकेनप्रकारेणस्यां तंप्रकारंनिरूपयेत्यर्थः ॥ २० ॥ ज्ञानेनेति ॥ ज्ञानेनवक्ष्यमाणलक्षणेनज्ञानसाधनेनचेतोयदाहृदंबरेहृदयाकाशेज्ञेयनिष्ठत्वंस्वस्वरूपनिष्ठत्वमेति । ततस्तदाजीवः सर्ववपुर्भूत्वासर्वात्मकोभूत्वाभूयोनजायते । अंतर्मुखतयास्वरूपनिष्ठत्वेस्वयमेवसर्वात्मकंब्रह्मभूत्वापुनर्जीवभावंनैतीत्यर्थः ॥ २१ ॥

किंतज्ज्ञानमित्यत्राह ॥ असक्तिर्विषयेष्वनासक्तिः पुत्रदारगृहादिषुअनभिष्वंगः ममताराहित्यंइष्टानिष्टोपपत्तिषुप्रियाप्रियेषुनित्यंसमचित्तत्वंहर्षविषादराहित्यम् ॥ २२ ॥ अनन्ययोगेनअभेदभावनयाआत्मनः स्वरूपस्यअनारतमविच्छिन्नंतद्भावनंब्रह्मभावनंब्रह्मैवाहमित्यनुसंधानं विविक्तदेशसेवित्वंविविक्तः पूतोनिर्जनश्चयोदेशः तत्सेवनशीलत्वं जनसंसदिपामरजनसभायांअरतिरनवस्थानम् ॥ २३ ॥ अध्यात्मज्ञाननिष्ठत्वंआत्मविषयकज्ञानतत्परत्वं तत्त्वज्ञानार्थदर्शनंतत्त्वज्ञानप्रयोजनस्यात्यंतिकदुःखोपरमस्यानुसंधानम् । एतत्पूर्वोक्तंज्ञानसाधन

असक्तिरनभिष्वंगः पुत्रदारगृहादिषु ॥ नित्यंचसमचित्तत्वमिष्टानिष्टोपपत्तिषु ॥ २२ ॥ आत्मनोऽनन्ययोगेनतद्भावनमनारतम् ॥ विविक्तदेशसेवित्वमरतिर्जनसंसदि ॥ २३ ॥ अध्यात्मज्ञाननिष्ठत्वंतत्त्वज्ञानार्थदर्शनम् ॥ एतज्ज्ञानमितिप्रोक्तमज्ञानंस्यादितोऽन्यथा ॥२४॥ रागद्वेषक्षयकरंसंसारव्याधिभेषजम् ॥ अहंकारोपशांतौतद्राजन्ज्ञानमवाप्यते ॥ २५ ॥ भगीरथउवाच ॥ शरीरेऽस्मिंश्चिरारूढोगिरौतरुरिवस्वके ॥ अहंभावोमहाभागवदमेत्यज्यते कथम् ॥ २६ ॥ त्रितुलउवाच ॥ पौरुषेणप्रयत्नेनत्यक्त्वाभोगौघभावनाम् ॥ गत्वाविकासितां सत्तामहंकारलयंव्रजेत् ॥ २७ ॥

त्वात् ज्ञानमितिप्रोक्तम् । इतोऽन्यथाउक्तसाधनविपरीतंविषयासक्त्यादिकमज्ञानंसंसारहेतुत्वादित्यर्थः ॥ २४ ॥ रागेति ॥ देहादावहंकारभावत्वस्यात्मज्ञानप्रतिबंधकत्वात् तदुपशांतावेवात्मनः स्वरूपमवगम्यतइत्यर्थः ॥ २५ ॥ शरीरइति ॥ संसारस्यानादित्वात्तन्मूलत्वभूतस्याहंकारस्यरूढमूलतयात्यागोदुष्करइतिभावः ॥ २६ ॥ पौरुषेणेति ॥ पौरुषेणप्रयत्नेनवासनाक्षयहेतुः सम्यग्ज्ञानसमाध्यभ्यासादिरूपः पौरुषः प्रयत्नः तेनभोगौघभावनांविषयवासनांत्यक्त्वा । विकासितांपरिपूर्णांसत्तांगत्वा आश्रित्यअहंकारलयंव्रजेत्साधयेदित्यर्थः ॥ २७ ॥

यंत्राणामिति ॥ लज्जादिअनुचितेकर्मणिचेतसःसंकोचोलज्जा आदिशब्दाज्जातिकुलाभिमानादिग्रहणम् । तदुक्तम् । घृणाशंकास्पृहालज्जाजुगुप्साचेतिपंचमी । कुलंशीलंतथाजातिरष्टौपाशाःप्रकीर्तिताइति । तादृशंलज्जादिरूपंयंत्राणांपंजरंअकिंचनत्वशेषेणस्वरूपातिरिक्तंकिंचिदपियस्यनास्तिसोऽकिंचनः तद्भावमात्रशेषेणयावदखिलंनभग्नंनत्यक्तंतावदहंकृतिःस्फुटाननिवर्ततइत्यर्थः ॥२८॥ सर्वमिति ॥ एतत्सर्वंलज्जाभिमानादिकंसर्वमित्यर्थः ॥ २९ ॥ शांतेति ॥ शांतान्यशेषविशेषणानिब्राह्मणोऽहंगृहस्थोऽहमित्यादीनियस्य विगताभीर्भयहेतुःयस्मात्सं

यंत्राणांपंजरंयावद्भग्नंलज्जादिनाखिलम् ॥ अकिंचनत्वशेषेणस्फुटातावदहंकृतिः ॥ २८ ॥ सर्वमेतद्धियात्यक्त्वायदितिष्ठसिनिश्चलः ॥ तदहंकारविलयेत्वमेवपरमंपदम् ॥ २९ ॥ शांताशेषविशेषणोविगतभीःसंत्यक्तसर्वैषणोगत्वानूनमकिंचनत्वमरिपुत्यक्त्वासमग्रांश्रियम् ॥ शांताहंकृतिरस्तदेहकलनस्तेष्वेवभिक्षामटन्मामप्युज्झितवानलंयदिभवस्युच्चैस्तदुच्चैरसि ॥ ३० ॥ वसिष्ठउवाच ॥ अथतस्यगुरोर्वक्त्रादित्याकर्ण्यभगीरथः ॥ मनस्याहितकर्तव्यःस्वव्यापारपरोऽभवत् ॥ ३१ ॥ ततःकतिपयेष्वेववासरेषुगतेषुसः ॥ अग्निष्टोममखंचक्रेसर्वत्यागैकसिद्धये ॥ ३२ ॥ गोभूम्यश्वहिरण्यादिददौधनमशेषतः ॥ द्विजदेवार्तबंधुभ्योगुण्यागुण्यंविचारयन् ॥ ३३ ॥

त्यक्ताःसर्वाएषणाःपुत्रकलत्रादिवांछायेनसतादृशःसन् अरिषुसमग्रांश्रियंत्यक्त्वा अकिंचनत्वमेवगत्वाआश्रित्य शांताहंकृतिरस्तदेहकलनस्तेष्वेवारिषुभिक्षामटन्मामपरित्याज्यंगुरुमपिअलंसम्यगुज्झितवान्यदिभवसितर्हिउच्चैरस्युच्चैरसि उन्नतादप्युन्नतोऽसि सर्वोत्कृष्टंब्रह्मैवासीत्यर्थः ॥ ३० ॥ अथेति ॥ मनस्याहितकर्तव्यःगुरूपदिष्टंकर्तव्यंचित्तेनिधायेत्यर्थः । स्वव्यापारपरःराज्यचिंतास्वव्यापारः तत्रतात्पर्यवानिवाभूत् ॥ ३१ ॥ ततइति ॥ सर्वत्यागैकसिद्धयेसर्वधनत्यागावसरसंपादनायेत्यर्थः ॥ ३२ ॥ ३३ ॥

॥ ३४ ॥ अथेति ॥ अथभगीरथःसर्वार्थरिक्तंसर्वधनशून्यं खिन्नप्रकृतिपौरकंखिन्नाःदीनाःप्रकृतयोऽमात्यादयःपौराःपुरजनाश्चयस्मिंस्त त्स्वंस्वीयंराज्यंतृणमिवसीमांतिनेसीमांतेवर्तमानायअरयेददौ । सामंतिनइतिपाठे सामंताः समंतसंभवादेशास्तद्वते समीपदेशाधिपतय इत्यर्थः ॥ ३५ ॥ आक्रांतइति ॥ द्विषताराज्येराज्यभवेसद्मनिस्वगृहेमंडलेस्वराष्ट्रेचआक्रांतेसति असौभगीरथः अधोवासोऽवशेषःपरि

दिवसत्रयमात्रेणसर्वमेवपरित्यजन् ॥ स्ववस्त्रमात्रशेषोऽसावासीद्राजाभगीरथः ॥ ३४ ॥ अथ सर्वार्थरिक्तंतुखिन्नप्रकृतिपौरकम् ॥ सीमांतिनेतृणमिवराज्यंस्वमरयेददौ ॥ ३५ ॥ आक्रांते द्विषताराज्येमुनिसद्मनिमंडले ॥ अधोवासोऽवशेषोऽसौनिर्जगामस्वमंडलात् ॥ ३६ ॥ यत्रनज्ञा यतेनाम्नायत्रनज्ञायतेमुखात् ॥ तत्रग्रामेअरण्येषुपुरेषूवासधैर्यवान् ॥ ३७ ॥ इत्यल्पेनैवकाले नप्रशांतसकलैषणः ॥ परमेणशमेनासौप्रापविश्रांतिमात्मनि ॥ ३८ ॥ भ्रमन्द्वीपानिभूपीठेक दाचित्कालयोगतः ॥ अवशःशत्रुणाक्रांतंस्वमेवप्रापतत्पुरम् ॥ ३९ ॥ नानागारांश्चतत्रासौप्र वाहपतितांश्चतान् ॥ पौराणांमंत्रिणांचैवशनैर्भिक्षामयाचत ॥ ४० ॥ विविदुस्तंनृपंपौरामंत्रि णश्चभगीरथम् ॥ पूजयामासुरथतंसविषादंसपर्यया ॥ ४१ ॥ प्रभोराज्यंगृहाणेतिप्रार्थितोऽप्यथ रिणामुनिः ॥ नाददेनावृताशेषंतृणमप्यशनादृते ॥ ४२ ॥

धानमात्रशेषोमुनिः मौननिष्ठः स्वमंडलान्निर्जगाम ॥ ३६ ॥ ३७ ॥ ३८ ॥ भ्रमन्निति ॥ अवशः स्वस्यगंतव्यदेशाभावात्पथिकानुसारी शत्रुणा आक्रांतंस्वयमेवतत्पुरंकदाचित्प्रापेत्यर्थः ॥ ३९ ॥ नानेति ॥ प्रवाहपतितान्मनःप्रवाहानुसारेणप्राप्तान् ॥ ४० ॥ ४१ ॥ ४२ ॥

॥ ४३ ॥ ४४ ॥ स्वमिति ॥ स्वमेवस्वागतंकृत्वा स्वोचितंस्वागतादिसत्कारंकृत्वेत्यर्थः ॥ ४५ ॥ समतामिति ॥ देहधारणंविषादंदुःखहेतुम् ॥ ४६ ॥ किमितिश्लोकद्वयंवाक्यम् ॥ आनंदंआनंद्यतेयेनतंसुखहेतुंनननंदतुःनाभ्यनंदतां दुःखंदुःखहेतुं मध्यमंअनुभवहेतुम् ॥ ४७ ॥





कतिचिद्दिवसांस्तत्रनीत्वान्यत्रजगामसः ॥ भगीरथोऽयंहाकष्टमितिलोकेनशोचितः ॥ ४३ ॥ अथान्यत्रोपशांतात्मापरिविश्रांतधीःसुखी ॥ आत्मारामःकदाचिच्चसप्रापत्रितुलंगुरुम् ॥ ४४ ॥ स्वमेवस्वागतंकृत्वातेनसार्धंभगीरथः ॥ किंचित्कालमुवासाद्रौवनेग्रामेपुरेजने ॥ ४५ ॥ समतामुपयातौतौगुरुशिष्यौसमौस्थितौ ॥ कलयामासतुःस्वस्थौविषादंदेहधारणे ॥ ४६ ॥ किमयंधार्यतेदेहःकिंवानेनोज्झितेननः ॥ यथाक्रमंयथाचारंतिष्ठत्वेषयथास्थितम् ॥ ४७ ॥ इतिनिश्चित्यतिष्ठंतौतौवनाद्वनगामिनौ ॥ नननंदतुरानंदंनदुःखंनचमध्यमम् ॥ ४८ ॥ धनानिवाजिविभवाद्यैश्वर्यंचाष्टधोदितम् ॥ सिद्धैरप्यर्पितंतुष्टैर्मेनातेजर्जरंतृणम् ॥ ४९ ॥ अथैकदापुरश्रेष्ठेकस्मिंश्चिन्मंडलांतरे ॥ अनपत्यंनृपंमृत्युरहरत्स्वामिवामिषम् ॥ ५० ॥ तत्रप्रकृतयःखिन्नानष्टदेशक्रमान्नृपम् ॥ अन्विष्यंतिस्मसंयुक्तंगुणलक्ष्म्याविशालया ॥ ५१ ॥ तंभगीरथमासाद्यास्थितंभिक्षाचरंमुनिम् ॥ परिज्ञायसमानीयसैन्येचक्रुर्महीपतिम् ॥ ५२ ॥



॥ ४८ ॥ धनानीति ॥ धनानिप्रसिद्धानि वाजिविभवोवाजिसंपत्तिस्तदादियद्राज्ञामैश्वर्यंतच्चतदप्यष्टधोदितं अणिमादिकंतच्चसिद्धैरष्टमहासिद्धिमद्भिःदेवयोनिभेदैस्तुष्टैः प्रीतैरप्यर्पितमपिजर्जरंजीर्णंमेनाते अंतरायधियेतिभावः ॥ ४९ ॥ ५० ॥ ५१ ॥ ५२ ॥

॥ ५३ ॥ ५४ ॥ ५५ ॥ ५६ ॥ ५७ ॥ इतीति ॥ तत्तादृशंतद्वचः तासांप्रकृतीनांवचः ॥ ५८ ॥ ५९ ॥ अथेति ॥ पितामहाः सगर तनयाः तेषामुत्तारणार्थंनरकादुद्धरणार्थम् ॥ ६० ॥ भगीरथइति ॥ यशःप्रचारवीथिकाभगीरथस्यकीर्तिसंचारमार्गः तदादिसभगीरथः

भगीरथःक्षणेनैवप्रावृषीवांबुनासरः ॥ वलितःसेनयागुर्व्यासमारोहन्मतंगजम् ॥ ५३ ॥ भगीरथोजगन्नाथोजयतीतिजनारवैः ॥ नीरंध्रतामुपाजग्मुर्गिरींद्राणांमहागुहाः ॥ ५४ ॥ तत्रतत्पालयंतंतंराज्यंराजानमादृताः ॥ आजग्मुःप्राक्प्रकृतयःप्राहुरित्थंमृताधिपाः ॥ ५५ ॥ राजन्नस्माकमधिपोयस्त्वयासपुराकृतः ॥ मृत्युनाविनिगीर्णोऽसौमत्स्येनेवामिषंमृदु ॥ ५६ ॥ तत्त्वंपालयितुंराज्यंप्रसादंकर्तुमर्हसि ॥ अप्रार्थितोपयातानांत्यागोऽर्थानांचनोचितः ॥ ५७ ॥ वसिष्ठ उवाच ॥ इतिसंप्रार्थितोराजातदंगीकृत्यतद्वचः ॥ सप्तसागरचिह्नायाःसबभूवभुवःपतिः ॥५८॥ समःशांतमनामौनीवीतरागोविमत्सरः ॥ प्राप्तकार्यैककरणरतिराहितविस्मयः ॥ ५९ ॥ अथ वर्षसहस्राणितपस्तप्त्वासुदारुणम् ॥ स्वपितामहोत्तारणेभुविगंगामयोजयत् ॥ ६० ॥ भगीरथेमहीपतौयशःप्रचारवीथिका ॥ तदादिमार्गगातुसामहीतलंबभूवह ॥ ६१ ॥ इतिश्रीलघुयोगवासिष्ठेमोक्षोपायेनिर्वाणप्रकरणेभागीरथोपाख्यानंनामषट्त्रिंशःसर्गः ॥ ३६ ॥

आदिर्यस्मिन्कर्मणितद्यथाभवति तथेति महीतलंभवनक्रियाविशेषणम् ॥ ६१ ॥ इतिश्रीवासिष्ठविवरणेभगीरथोपाख्यानंनामषट्त्रिंशः सर्गः ॥ ३६ ॥

पूर्वंदुर्लभापिचित्तविश्रांतिःस्वप्रयत्नेनैवलभ्यतइतिदर्शयितुंभगीरथकथाकथिता । इदानींतुप्रतिबंधकपापसंचयक्षयाभावेदुर्लभमपिस्वात्मज्ञानमाचार्यस्यप्रश्नातिशयाल्लभ्यतइतिदर्शयितुमनेकोपाख्यानगर्भंशिखिध्वजोपाख्यानंप्रारभ्यते ॥ इदमिति ॥ पूर्वमिदंविश्वंपरित्यज्यप्रपंचदृष्टिंतद्वासनांचत्यक्त्वा मनःखगंपक्षिवत्परिभ्रमणशीलंमनःक्रोडीकृत्यएकनिष्ठंकृत्वा शांतःसन्नशिखिध्वजइवात्मन्यचलस्तिष्ठ ॥ १ ॥



वसिष्ठउवाच ॥ इदंपूर्वंपरित्यज्यक्रोडीकृत्यमनःखगम् ॥ शांतआत्मनितिष्ठत्वंशिखिध्वजइवाचलः ॥ १ ॥ श्रीरामउवाच ॥ कोऽसौशिखिध्वजोनामकथंवालब्धवान्पदम् ॥ एतन्मेकथयब्रह्मन्भूयोबोधविवृद्धये ॥ २ ॥ वसिष्ठउवाच ॥ द्वापरेपूर्वमभवदतीतेसप्तमेमनौ ॥ मालवानांपुरेश्रीमाञ्छिखिध्वजइतीश्वरः ॥ ३ ॥ धैर्यौदार्यदयासत्यक्षमादमशमान्वितः ॥ शूरःशुभसमाचारोमानीगुणगणाकरः ॥ ४ ॥ सुराष्ट्राधिपतेःकन्यांचूडालांनामनामतः ॥ उपयेमेसतीमात्मसदृशींसशिखिध्वजः ॥ ५ ॥ अवर्धततयोःप्रीतिरन्योन्यार्पितचेतसोः ॥ नित्यमेवाभियुक्तत्वात्प्रियत्वाच्चेष्टितस्यच ॥ ६ ॥ मिथःकलाकलापस्यकोविदौतौबभूवतुः ॥ स्वरूपमेवमेवैतौदधतुर्मित्रतांगतौ ॥ ७ ॥ एवंबहूनिवर्षाणिमिथुनंनिर्भरस्पृहम् ॥ रेमेयौवनलीलाभिरनंताभिर्दिनेदिने ॥ ८ ॥ अथयातेषुबहुषुवर्षेष्वावृतिशालिषु ॥ शनैर्गलतितारुण्येभिन्नकुंभादिवांभसि ॥ ९ ॥

॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ अवर्धतेति ॥ चेष्टितस्यपरस्परालोकनसंभाषणादिरूपस्यप्रियत्वादभिमतत्वाच्चतयोः प्रीतिरवर्धतेत्यन्वयः ॥ ६ ॥ मिथइति ॥ कलाकलापस्यगीतवादित्रनृत्यादिरूपस्य ॥ ७ ॥ ८ ॥ अथेतिश्लोकषट्कंवाक्यम् ॥ अथबहुषुवर्षेषुयातेषु ततः चूडालाशि

खिध्वजयोर्युग्मं इतितारुण्येशनैर्गलतिजरावनिपतितोन्मुखीत्यादिनाप्रकारेणसंसारासारतांनिर्णीय संसारव्याधिभेषजमध्यात्मशास्त्रंचिरं विचारयामासेत्यन्वयः । तत्रतुंबीलता अलाबूः ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ तच्चित्ताविति ॥ तदित्यात्मज्ञानंपरा मृश्यते । तद्गतप्राणौचित्तस्यतद्गतत्वाच्चित्तप्राणयोश्चाविनाभावात् तन्निष्ठौतत्रैवात्मज्ञानेनिष्ठानियमोययोस्तौ तद्विधाश्रयौतद्विधाःआत्म

पातःपक्वफलस्येवमरणंदुर्निवारणम् ॥ हिमाशनिरिवांभोजेजरानिपतितोन्मुखी ॥ १० ॥ आयुर्गलत्य विरतंजलंकरतलादिव ॥ प्रावृषीवलतातुंबीतृष्णैकादीर्घतांगता ॥ ११ ॥ शैलनद्यारयइवसंप्रयात्येवयौ वनम् ॥ सुखानिप्रपलायंतेशराइवधनुश्च्युताः ॥ १२ ॥ रंभागर्भइवासारोव्यवहारोविरागदः ॥ तदि हस्यान्नसंसारेतादृक्षमतिशोभनम् ॥ १३ ॥ यदासाद्यपुनश्चेतोदशासुनविद्रूयते ॥ १४ ॥ इतिनि र्णीययुग्मंतत्संसारव्याधिभेषजम् ॥ चिरंविचारयामासशास्त्रमध्यात्मसंमतम् ॥ १५ ॥ आत्मज्ञा नैकमंत्रेणसंसृत्याख्याविषूचिका ॥ संशाम्यतीतिनिश्चित्यतावास्तांतत्परायणौ ॥ १६ ॥ तच्चित्तौ तद्गतप्राणौतन्निष्ठौतद्विधाश्रयौ ॥ तदातदर्चनपरौतदीहौतौविरेजतुः ॥ १७ ॥ तत्रैवातिघनाभ्या सौबोधयंतौपरस्परम् ॥ तत्प्रीतौतत्समारंभौचिरारंभौबभूवतुः ॥ १८ ॥ अथसाविरतंरामरमणीय पदक्रमात् ॥ श्रुत्वाध्यात्मविदांवक्त्राच्छास्त्रार्थांस्तारणक्षमान् ॥ १९ ॥

ज्ञाननिष्ठाः तेआश्रयाः आश्रयणीयाः ययोस्तौतदर्चनपरौआत्मवित्पूजनपरौ तदीहौतदुचितचेष्टायुक्तौ ॥ १७ ॥ १८ ॥ अथेतिश्लोकद्वयं वाक्यम् ॥ अव्यापृतातूष्णीमासीनाव्यापृतावासमुचितंव्यापारंकुर्वाणापि धियास्वमात्मानमित्थंवक्ष्यमाणप्रकारेणविचारयामास ॥ १९ ॥

॥२०॥२१॥ देहइति॥देहस्तावज्जडः तत्रहेतुः मूढःविचित्तः नाहमित्येवनिश्चयः कर्मेंद्रियगणश्चअस्माद्देहादभिन्नइतिजडएव॥२२॥बुद्धीति॥ बुद्धींद्रियगणोऽपियष्ट्यालोकेलोष्टकइवमनसायस्मात्प्रेर्यतेतस्माज्जडएवेतिदृश्यतेनिश्चीयते॥२३॥मनइति॥संकल्पात्मकशक्तिमनश्चक्षेपणैःपाषाणइवबुद्धिकृतैर्निश्चयैः प्रेर्यतइतिजडंमन्ये। क्षिप्यंतेएभिरिति क्षेपणानिरज्जुदार्वादिमयायंत्रविशेषाः॥२४॥बुद्धिरिति॥ निश्चयरूपाबुद्धिश्च खातेनखननजनितश्वभ्रेणसरिदिवअहंकारेणचाल्यतेप्रेर्यतइतिजडैवेतिनिश्चयः॥२५॥अहंकारइति॥ निःसारःविपरीतज्ञानरूपत्वान्निःसत्वः चे

इत्थंविचारयामासस्वमात्मानमहर्निशम् ॥ अव्याप्तताव्याप्ततावाधियाधवलयेद्धया ॥ २० ॥
चूडालोवाच ॥ प्रेक्षेतावत्स्वमात्मानंकिमहंस्यामितिस्वयम् ॥ कस्यायमागतोमोहःकथमभ्युदितःक्वा ॥ २१ ॥ देहस्तावज्जडोमूढोनाहमित्येवनिश्चयः ॥ कर्मेंद्रियगणश्चास्मादभिन्नोजडएवसः ॥ २२ ॥ बुद्धींद्रियगणोऽप्येवंजडएवेतिदृश्यते ॥ प्रेर्यतेमनसायस्माद्यष्ट्येवभुविलोष्टकः ॥२३॥ मनस्त्वेवंजडंमन्येसंकल्पात्मकशक्तिमत् ॥ क्षेपणैरिवपाषाणःप्रेर्यतेबुद्धिनिश्चयैः ॥२४॥ बुद्धिर्निश्चयरूपैवजडासत्येवनिश्चयः ॥ खातेनेवसरित्कूलमहंकारेणचाल्यते ॥ २५ ॥ अहंकारोऽपिनिःसारोजडएवशवात्मकः ॥ जीवेनजन्यतेयक्षोबालेनेवभ्रमात्मकः ॥ २६ ॥ जीवश्चकलनाकारोवातात्माहृदयेस्थितः ॥ सुकुमारोंऽतरन्येनकेनापिपरिजीवति ॥ २७ ॥

ष्टारहितत्वाच्छवात्मकोऽहंकारोऽपिबालेनभ्रमात्मकोयक्षइवजीवेनजन्यतेकल्प्यतइति। जडएवअवशात्मकइतिपाठेपरवशस्वभावइत्यर्थः २६ जीवइति ॥ हृदयेस्थितःअंतःकरणप्रतिफलितचैतन्यरूपत्वाद्धृदयेवर्तमानः । अतएवकलनाकारः कल्पितस्वभावः वातात्माप्राणमयत्वात्सुकुमारः अध्रुवः प्रत्यहंसुषुप्तावात्मनिलीयमानत्वात् एवंविधोजीवश्चअंतःस्थेनस्वस्याऽप्यंतरनुप्रविष्टेनकेनाप्यव्यपदेश्येनप्राणप्रदायिनापुरु

षेणानुप्राणितः परिजीवति । अतोजीवोऽपिपारमार्थिकमात्मस्वरूपंनभवतीत्यर्थः । एतदुक्तंभवति । यथाघटाद्युपाध्यवच्छिन्नोऽनवच्छिन्न श्चाकाशोऽस्तितथासर्वप्राणिनांहृदिजीवईश्वरश्चास्ति । तथाचव्याससूत्रम् । गुहांप्रविष्टावात्मानौहितद्दर्शनादिति ॥ तत्रचमायाविधेयोजी वः विधेयमायईश्वरइतिभेदः । तदुक्तंगौडपादाचार्यैः । कार्योपाधिरयंजीवःकारणोपाधिरीश्वरः । कार्यकारणतांहित्वापूर्णबोधोऽवशिष्यते ॥ इति ॥ २७ ॥ आअहोइति ॥ आइतिस्मृतिद्योतकमव्ययं अहोइत्याश्चर्ये । अहोमयाज्ञातमेतत्किंतदित्यत्राह । अयंजीवश्चेत्योल्लेखो दृश्यसंबंधः तेनकलंकिनाप्रतिबिंबरूपकलंकवताजीर्णेनअनादिनाआत्मरूपिणासर्वेषामात्मभूतेनचिद्रूपेणचित्स्वरूपेणैवजीवति प्राणान्

आअहोज्ञातमेतेनचेत्योल्लेखकलंकिना ॥ जीवोजीवतिजीर्णेनचिद्रूपेणात्मरूपिणा ॥ २८ ॥
चेत्यभ्रमवताजीवश्चिद्रूपेणैवजीवति ॥ आमोदःपवनेनेवखातेनेवसरिद्रयः ॥ २९ ॥ असत्य
जडचेत्यांशचयनाचिद्वपुर्जडम् ॥ महाजलगतोह्यग्निरिवरूपंसमुज्झति ॥ ३० ॥ एवंचिद्रूपम
प्येतच्चेत्योन्मुखतयास्वयम् ॥ जडंशून्यमसत्कल्पंचैतन्येनप्रबोध्यते ॥ ३१ ॥ इदानीमहमी
क्षेऽहंकेनैषाचित्प्रचेत्यते ॥ अहोनुचिरकालेनज्ञातंज्ञेयमनामयम् ॥ ३२ ॥

धारयति ॥ २८ ॥ एतदेवसदृष्टांतमाह ॥ चेत्येति ॥ चेत्यभ्रमवताचेत्येषुप्रतिफलनात्तैस्तादात्म्याभिमानवता ॥ २९ ॥ असत्येति ॥ चिद्वपुःचित्स्वरूपंअसत्यजडचेत्यांशचयनात् असत्याजडाश्चयेचेत्यांशाः तेषांचयनादुपचयाद्धेतोः जडंसन्महाजलगतोऽग्निरिवस्वरूपंचि त्स्वभावमुज्झतिअपाकरोति ॥ ३० ॥ एतच्चिद्रूपंएवंपूर्वोक्तप्रकारेणचेत्योन्मुखतयादृश्यभावनयास्वयमेवजडंजाड्ययुक्तंशून्यसमंअसत्क ल्पंचभूत्वापिपुनश्चैतन्येनअनुप्रविष्टचैतन्येनप्रबोध्यते । तत्सृष्ट्वातदेवानुप्राविशत् ॥ इतिश्रुतेः ॥ ३१ ॥ इदानीमिति अर्धमेकंवाक्यम् । एषा चित्केनहेतुनाप्रचेत्यते । मनोबुद्ध्यादिरूपेणप्रचेत्यते इत्येतदिदानीमहमीक्षे पश्यामि । अहोइति ॥ अर्धमेकंवाक्यम् । ज्ञेयंज्ञातंयज्जिज्ञासितं

चिद्विवर्तनिमितंज्ञातव्यं तज्ज्ञातमित्यर्थः ॥ ३२ ॥ एतेहीति ॥ चिद्विलासांताः जडेषुवस्तुषुचैतन्यफलनंचिद्विलासः तदंतास्तत्पर्यंताः एतेमनोबुद्धींद्रियादयः सर्वएववस्तुतोऽसंतोऽपिअवधानंविनाऐकाग्र्यमवधानंतेनविनातद्भावेनउदिताःप्रादुर्भूताःआत्मनःस्वरूपनिष्ठत्वाभावरूपेणप्रमादेनोदिताः अनवधानमेवचितोनानारूपत्वविवर्तहेतुरित्यर्थः ॥ ३३ ॥ महाचिदिति श्लोकद्वयंवाक्यम् ॥ महासत्तापरपर्यायानिःकलंका यामहाचिदस्तिसैवब्रह्मपरमात्मादिनामभिर्गीयतेइत्यर्थः । समेति । द्विरूपादीयते तयोरेकः समशब्दःसर्वशब्दपर्यायः ।

एतेहिचिद्विलासांतामनोबुद्धींद्रियादयः ॥ असंतःसर्वएवाहोअवधानंविनोत्थिताः ॥ ३३ ॥ महाचिदेकैवास्तीहमहासत्तेतियोच्यते ॥ निष्कलंकासमाशुद्धानिरहंकाररूपिणी ॥ ३४ ॥ सकृद्विभातिविमलानित्योदयवतीसमा ॥ साब्रह्मपरमात्मादिनामभिःपरिगीयते ॥ ३५ ॥ वसिष्ठउवाच ॥ दिनानुदिनमित्येषास्वात्मारामतयातथा ॥ नित्यमंतर्मुखतयाबभूवप्रकृतिस्थिता ॥ ३६ ॥ नीरागानिरुपासंगानिर्द्वंद्वानिःसमीहिता ॥ नजहातिनचादत्तेप्रकृताचारचारिणी ॥ ३७ ॥ परमात्ममहालाभपरिपूर्णांतरांतरा ॥ सर्वोत्तमातीततयाजगामाव्यपदेश्यताम् ॥ ३८ ॥ स्वविवेकधनाभ्यासवशादात्मोदयेनसा ॥ शुशुभेशोभनापुष्पलतेवाभिनवोद्गता ॥ ३९ ॥ अथतामनवद्यांगींकदाचित्सशिखिध्वजः ॥ अपूर्वशोभामालोक्यस्मयमानउवाचह ॥ ४० ॥

समा सर्वात्मकेत्यर्थः । अन्यस्त्ववैषम्यवाचीसमैकरूपेतिनपौनरुक्त्यम् ॥ ३४ ॥ ३५ ॥ दिनानुदिनमिति ॥ दिनंपूर्वभाविअनुदिनंपश्चाद्भाविदिनंचानुदिनंचदिनानुदिनंसर्वेष्वपिदिनेष्वित्यर्थः । एषाचूडाला ॥ ३६ ॥ नीरागेति ॥ रागइच्छाउपासंगःआसक्तिः द्वंद्वमिष्टानिष्टबुद्धिः समीहितमुद्योगःनजहातिद्वेषाभावात् नचादत्तेरागाभावात् ॥ ३७ ॥ ३८ ॥ ३९ ॥ ४० ॥

॥ ४१ ॥ ४२ ॥ ४३ ॥ अथाष्टभिः श्लोकैः चूडालास्वानुभवंभर्त्रेनिवेदयति ॥ नकिंचिदिति ॥ नकिंचिज्जगत्तावत्संभवति । नेहनाना स्तीति बाध्यमानत्वान्नाप्यसत् प्रतीयमानत्वात् । असतश्चसत्तयावाव्यवहर्तुमयोग्यं अतएवकिंचिदाकारंमहासत्तात्मनाकेनचिदाकारेणो पलक्षितंपरंब्रह्म येनहेतुनाआगताप्राप्तानकिंचिदाकारंब्रह्मभावमापन्नेतियावत् तेनअस्मिअहंश्रीमतीकांतिमतीस्थिताअस्मीत्यहमर्थेऽव्य यंश्रीरिहब्रह्मविद्याप्रभावंसद्भूतमतिलोकंचदिव्यंतेजः ॥ ४४ ॥ एतदेवाह ॥ इदमिति ॥ इदंजगत्सर्वंपरित्यज्यअन्यद्विश्वविलक्षणंसर्वंसर्वात्म

भूयोयौवनयुक्तेवमंडितेवपुनःपुनः ॥ अधिकंराजसेतन्विकांत्याविमलयातनोः ॥ ४१ ॥ प्रपी तामृतसारेवलब्धालब्धपदेवच ॥ आनंदामृतपूर्णेवराजसेनितरांप्रिये ॥ ४२ ॥ अभोगकृपणंशां तमूर्जितंसमतांगतम् ॥ गंभीरंचप्रसन्नंचचेतःपश्यामितेप्रिये ॥ ४३ ॥ चूडालोवाच ॥ नकिंचि त्किंचिदाकारमिदंत्यक्त्वाहमागता ॥ नकिंचित्किंचिदाकारंतेनास्मिश्रीमतीस्थिता ॥४४॥ इदं सर्वंपरित्यज्यसर्वमन्यन्मयाश्रितम् ॥ यत्तत्सत्यमसत्यंचतेनास्मिश्रीमतीस्थिता ॥ ४५ ॥ य त्किंचिद्यन्नकिंचिच्चतज्जानामियथास्थितम् ॥ यथोदयंयथानाशंतेनास्मिश्रीमतीस्थिता ॥४६॥ भोगैरभुक्तैस्तुष्यामिभुक्तैरिवसुदूरगैः ॥ नहृष्यामिनकुप्यामितेनाहंश्रीमतीस्थिता ॥ ४७ ॥

कंसत्यंअबाध्यंअसत्यंचअसतिकल्पितेजगत्यनुप्रविष्टंब्रह्मयद्यस्मादाश्रितंतेनाहंश्रीमतीस्थिता ॥ ४५ ॥ यत्किंचिदिति ॥ यद्वस्तुकिंचितम हासत्तारूपत्वात्नकिंचिच्चविश्वविलक्षणत्वात् । तद्वस्तुयथास्थितंयथोदयंयथानाशंचजानामिसृष्ट्यादिषुयथायथावर्ततेतत्सर्वंजानामीत्यर्थः ॥ ४६ ॥ भोगैरिति ॥ भुक्तैरिवपूर्वमुपभुक्तैरिवसुदूरगैर्विप्रकृष्टैरभुक्तैरपिभोगैस्तुष्यामि भुक्तानांचविप्रकृष्टत्वाविशेषात्पक्षपातेहेत्वभावा दितिभावः । नहृष्यामिनकुप्यामिरागद्वेषयोरभावात् ॥ ४७ ॥

॥ ५० ॥

एकेति ॥ आकाशसंकाशेआकाशवत्परिपूर्णेकेवलेविशुद्धेहृदयेहृदयवत् सर्वांतरेस्वात्मनिएकैवरमे राजलीलासुराज्ञांलीलासुगीतवाद्यनृत्यादिषुनरमे ॥ ४८ ॥ जगतामिति ॥ नकिंचिन्मात्ररूपिणीयद्विब्रह्मनकिंचित्किंचिदपिनभवति सर्वविलक्षणत्वात्तन्मात्ररूपिणीअस्मि । अहंजगतांप्रभुरेवसर्वाणिभूतानियोऽतएवयमयतीतिसर्वनियामकत्वादित्यनेनप्रकारेणात्मन्येवतुष्यामि ॥ ४९ ॥ तन्विति ॥ तनुविद्वेषरागाभिःतन्नकृशौविद्वेषरागौयासुताभिः शास्त्रदृष्टिषुप्रज्ञाभिः वीतरागकथाभिरित्यर्थः । ताभिर्वयस्याभिःसखीभिःसहरमेविनोदया

एकैवाकाशसंकाशेकेवलेहृदयेरमे ॥ नरमेराजलीलासुतेनाहंश्रीमतीस्थिता ॥ ४८ ॥ जगतांप्रभुरेवास्मिनकिंचिन्मात्ररूपिणी ॥ इत्यात्मन्येवतुष्यामितेनाहंश्रीमतीस्थिता ॥ ४९ ॥ तनुविद्वेषरागाभिःप्रज्ञाभिःशास्त्रदृष्टिषु ॥ रमेसहवयस्याभिस्तेनाहंश्रीमतीस्थिता ॥ ५० ॥ पश्यामियन्नयनरश्मिभिरिंद्रियैर्वाचित्तेनवेहाहितदंगनकिंचिदेव ॥ पश्यामितद्विरहितंतुनकिंचिदंतःपश्यामिसम्यगितिनाथविनोदयामि ॥ ५१ ॥ वसिष्ठउवाच ॥ एवमात्मनिविश्रांतांवदंतींतांवरागनाम् ॥ अबुध्वातद्गिरामर्थंविहस्योवाचभूपतिः ॥ ५२ ॥ शिखिध्वजउवाच ॥ असंबद्धप्रलापासिबालासिवरवर्णिनि ॥ रमसेराजलीलाभिरहमेवंनृपात्मजे ॥ ५३ ॥

मि ॥ ५० ॥ पश्यामीति ॥ यद्वस्तुदूरस्थत्वान्नयनरश्मिभिः पश्यामियच्चसंनिहितत्वात्त्वगादिभिरिंद्रियैःपश्यामियच्चातीतमनागतंवाचित्तेनपश्यामि तत्सर्वंकिंचिदपिनपश्यामिनानुसंदधामितद्विरहितंदृश्यव्यतिरिक्तंतन्नकिंचिद्धि श्वविलक्षणंपरंवस्तुसम्यगंतः पश्यामिइत्यनेनहेतुनाविनोदयामि॥५१॥५२॥असंबद्धेति ॥ रमसेराजलीलाभिः अहमेवंनृपात्मजे यथाहंरमे एवंत्वमपिरमसे नरमइतिब्रुवाणात्वसंबद्धप्रलापासीत्यन्वयः । राजलीलाभीरमस्वावनिपालात्मजेतिपाठे यथेदानींरमसेएवमुत्तरकालमपिरमस्वनरमेइतितुमिथ्याप्रलापिनीमाभूरित्यर्थः ५३

नकिंचित्किंचिदाकारमिदंत्यक्त्वेतियदुक्तंतत्परिहसति ॥ किंचिदिति ॥ यत्प्रत्यक्षसंस्थितंकिंचित्पृथिव्यादिरूपंवस्तुत्यक्त्वानकिंचिदव्यपदे
श्यंवस्तुगतः प्राप्तःत्यक्तप्रत्यक्षसद्रूपः त्यक्तंप्रत्यक्षंवस्तुयेनसकथंशोभते प्रामाणिकस्यपरित्यागादप्रामाणिकस्यचस्वीकारादितिभावः ॥५४॥
भोगैरभुक्तैरितियदुक्तंतत्परिहसति ॥ भोगैरिति ॥ योमूढःअभुक्तैरेवभोगैस्तुष्टइतिमन्यमानःप्राप्तानपिभोगान्जहाति समूढः प्राप्तभोगत्या
गाद्दरिद्रवद्दुर्भगोभाग्यहीनःसन्कथंशोभते । रुषेवासनशय्यायामितिपाठेयथाहिकश्चित्कुपितः परिविष्टेष्वपिभोज्यवस्तुषुसंनिहितायामपिस्व

किंचित्त्यक्त्वानकिंचिद्योगतःप्रत्यक्षसंस्थितम् ॥ त्यक्तप्रत्यक्षसद्रूपःसकथंकिलशोभते ॥ ५४ ॥ भोगैरभु
क्तैस्तुष्टोऽहमितिभोगान्जहातियः ॥ दरिद्रवद्दुर्भगःसन्सकथंकिलशोभते ॥ ५५ ॥ यत्पश्यामिनपश्या
मितत्पश्याम्यन्यदेवतु ॥ प्रलापइत्यसत्यस्यसकथंकिलशोभते ॥ ५६ ॥ तस्माद्बालासिमुग्धासिचपला
सिविलासिनि ॥ नानालापविलासेनक्रीडसेक्रीडसुंदरि ॥ ५७ ॥ वसिष्ठउवाच ॥ प्रविहस्याट्टहासेन
शिखिध्वजइतिप्रियाम् ॥ मध्याह्नेस्नातुमुत्थायनिर्जगामांगनागृहात् ॥ ५८ ॥ कष्टंनात्मनिविश्रांतो
मद्वचांसिनबुद्धवान् ॥ राजेतिखिन्नाचूडालास्वव्यापारपराभवत् ॥ ५९ ॥ तदातथांगतत्राथतादृशा
शययोस्तयोः ॥ ताभिःपार्थिवलीलाभिःकालोबहुतिथोययौ ॥ ६० ॥

कांतायांरुषारोषवशादासनएवशय्यायांतिष्ठन्भोगपराङ्मुखःस्यात्तद्वदित्यर्थः ॥ ५५ ॥ यत्पश्यामीति ॥ यद्वस्तुपश्यामिचक्षुरादिभिर्विषयी
करोमितादृशंवस्तुनपश्यामिनानुसंदधामि । अन्यदेवतुदृश्यव्यतिरिक्तंअन्यदेववस्तुपश्यामीतियःप्रलापःएतंप्रलापमनर्थकंवचनंअत्यक्त्वाक
थंशोभते । प्रलापइत्यसत्यस्येतिपाठे इतिएवंरूपोऽसन्नशोभनःप्रलापोयस्यसकथंशोभतइत्यर्थः ॥ ५६ ॥ ५७ ॥ ५८ ॥ ५९ ॥ तदेति ॥
तदातस्मिन्कालेतत्रदेशेतस्मिन्देशेतथातेनप्रकारेणावस्थितयोस्ताभिःपार्थिवलीलाभिःबहुतिथःकालोययौअंगेतिसंबोधनम् ॥ ६० ॥

एकदेति ॥ खगमागमैराकाशगमनागमनैः ॥ ६१ ॥ ६२ ॥ ६३ ॥ कस्येति ॥ स्पंदविलासस्यप्राणगतिविशेषस्यचिराभ्यासस्यचिरमभ्यस्तस्य ॥ ६४ ॥ अंतस्थाइतिश्लोकचतुष्टयंवाक्यम् । अंतस्थाश्चित्तगताःस्वसाध्येतरवासनाःस्वसाध्यव्यतिरिक्तवस्तुविषयावासना अखिलाःअपित्यक्त्वासमभ्यस्यमानैःद्वारसंकोचादिभिःसाधनैस्तस्यपुंसः प्रभुत्वान्नियामकत्वाद्धेतोरखिलाअपिप्राणादिवायवोभृत्याइव त्यागादाननिरोधेषुरेचकपूरककुंभकेषुविधेयतांयांतीत्यन्वयः । तत्रगुदादिद्वारसंकोचेहेतुमाह । स्थानकादिक्रियाक्रमैरिति । स्थानकानि



एकदानित्यतृप्तायानिरिच्छायाअपिस्वयम् ॥ चूडालायाबभूवेच्छालीलयाखगमागमैः ॥ ६१ ॥ खगमागमसिद्ध्यर्थमथसानृपकन्यका ॥ सर्वभोगाननादृत्यसमागत्यचनिर्जनम् ॥ ६२ ॥ एकैवैकांतनिरतास्वासनावस्थितांगिका ॥ ऊर्ध्वगप्राणपवनंचिराभ्यासंचकारह ॥ ६३ ॥ श्रीरामउवाच ॥ कस्यस्पंदविलासस्यचिराभ्यासस्यमेवद ॥ ब्रह्मन्खगमनाद्येतत्फलंयत्नैकशालिनः ॥ ६४ ॥ वसिष्ठउवाच ॥ अंतस्थाअखिलास्त्यक्त्वास्वसाध्येतरवासनाः ॥ गुदादिस्थानसंकोचात्स्थानकादिक्रियाक्रमैः ॥ ६५ ॥ श्रीमच्छिखिध्वजकथाप्रसंगात्पतितामिमाम् ॥ प्राणादिपवनाभ्यासक्रियांसिद्धिफलांशृणु ॥ ६६ ॥ भोजनासनशुद्ध्याचसाधुशास्त्रार्थभावनात् ॥ स्वाचारात्सुजनासंगात्सर्वत्यागसुखासनात् ॥ ६७ ॥

महामुद्रादयःस्थानविशेषाःआदिशब्दाद्यमादिग्रहणंस्थानकादयश्चतेक्रियाक्रमाउपायभेदाःतैस्तत्रमूलबंधेनगुदसंकोचः खेचर्याउपरितनद्वारनिरोधइतिविवेकः । तत्रमूलबंधलक्षणम् । पार्ष्णिभागेनसंपीड्ययोनिमाकुंचयेद्गुदम् । अपानमूर्ध्वमाकृष्यमूलबंधोऽयमिष्यते । इतिखेचरीलक्षणंतुबहुशःपूर्वमुक्तम् ॥ ६५ ॥ ६६ ॥ भोजनासनशुद्ध्याभोजनस्यभोज्यवस्तुनःशुद्धिर्हितमितमेध्यभावःआसनशुद्धिरासनस्यनिर्विकारतासाधुशास्त्रार्थभावनात् योगशास्त्रस्यसम्यगनुसंधानात्स्वाचारोयोगांगानुष्ठानंसुजनायोगविदःसर्वत्यागस्तत्पूर्वकात्सुखासनात् ॥ ६७ ॥

॥ ६८ ॥ ६९ ॥ राज्यादीति ॥ देहानिलविधेयत्वसाध्याःप्राणजयेनअणिमादयोऽपिसिध्यंतीत्यर्थः ॥ ७० ॥ परिमंडलितेतिश्लोकत्रयंवाक्यं ॥ परितोमंडलितोमंडलीकृतआकारोयस्याःसामर्मस्थानंसमाश्रिता । तस्योर्ध्वंकुंडलीस्थानंनाभेस्तिर्यगधोर्ध्वतः । अष्टप्रकृतिरूपासाह्यष्टधा कुंडलीकृता । इतियाज्ञवल्क्येनकंदस्योर्ध्वंनाभेस्तिर्यगूर्ध्वतश्चकुंडलीस्थाननिरूपणात् नाभेश्चमर्मस्थानात् नाभिस्थानमाश्रितामर्मस्थानंसमाश्रिताभवति । नाभिश्चहृदयंगार्गिकंठकूपंतथैवचेतियाज्ञवल्क्येनमर्मस्थानेषुपरिगणनात् ॥ ७१ ॥ वीणाग्रावर्तसदृशीवीणादंडस्योपरिभा

प्राणायामघनाभ्यासाद्रामकालेनकेनचित् ॥ कोपलोभादिसंत्यागाद्भोगत्यागाच्चसुव्रत ॥ ६८ ॥
त्यागादाननिरोधेषुभृशंयांतिविधेयताम् ॥ प्राणाःप्रभुत्वात्तज्ज्ञस्यपुंसोभृत्याइवाखिलाः ॥ ६९ ॥
राज्यादिमोक्षपर्यंताःसमस्ताएवसंपदः ॥ देहानिलविधेयत्वसाध्याःसर्वस्यराघव ॥ ७० ॥ परि
मंडलिताकारामर्मस्थानंसमाश्रिता ॥ अत्रचेष्टनिकानामनाडीनाडीशतान्विता ॥ ७१ ॥ वी
णाग्रावर्तसदृशीसलिलावर्तसंनिभा ॥ कीटादिष्वब्जजातेषुसर्वेषुप्राणिषूदिता ॥ ७२ ॥ शीतार्त
सुप्तभोगींद्रभोगवद्बद्धमंडला ॥ अनारतंसासस्पंदापवमानेनतिष्ठति ॥ ७३ ॥ तस्यास्त्वभ्यंतरे
तस्मिन्कदलीकोशकोमले ॥ पावनीपरमाशक्तिःसर्वशक्तिजवप्रदा ॥ ७४ ॥

गेयस्तंत्रीसूत्रवेष्टनरूपआवर्तःतत्सदृशीसलिलावर्तसंनिभा ॥ ७२ ॥ यतःशीतार्ततयासुप्तस्यभोगीन्द्रस्यभोगवद्बद्धमंडलासर्वप्राणगतानाडीशतैरावृताअंत्रवेष्टनिकानामअंत्रवेष्टनिकेतिप्रसिद्धाकाचिन्नाडीपवमानेनवायुनाअनारतंसस्पंदातिष्ठतीत्यन्वयः ॥ ७३ ॥ तस्याइति श्लोकद्वयंवाक्यम् ॥ तस्याःपूर्वोक्तायानाड्याःकदलीकोशवत्कोमलेअभ्यंतरेकुपिताभुजंगमीवअनिशंनिश्वसद्रूपास्पंदनाहेतुत्वंगताऊर्ध्वीकृतमुखीसर्वासांशक्तीनांजवप्रदाउल्लासहेतुःपावनीपवनसंबंधिनीपरमाशक्तिःसंस्थिता ॥ ७४ ॥

॥७५॥ अस्यामितिश्लोकत्रयंवाक्यं ॥ अस्यामेवप्राणशक्तौहृदयकोशगाःसमस्तानाडयःसंवद्धाःसिद्धाःस्पंदस्पर्शसंवित्कलाक्रियाहेतुःस्पर्शा नुभवहेतुश्च अमलासैवपावनीशक्तिरंतःकुंडलिनीत्युच्यते ॥ ७६ ॥ कलोक्तेति ॥ सैवकलनेनबंधनेनहेतुनाकलेत्युक्ता चेतनेनज्ञानोत्पादनेन चिदित्युक्ताजीवनाद्रुच्छ्वासनिश्वासप्रवर्तनात्जीवशब्दवाच्यतांगतामननात्स्मरणहेतुत्वान्मनइतिस्थिता ॥ ७७॥ संकल्पाद्विविधात्मनोरथ कल्पनात्साहिसंकल्पाइतिसंकल्पशब्दवाच्याशक्तिरपि बोधनान्निश्चयोत्पादनात्बुद्धिरितिस्मृता सैवाहमित्यभिमानात्अहंकारात्मतांया

अनिशंनिश्वसद्रूपाकुपितेवभुजंगमी ॥ संस्थितोर्ध्वीकृतमुखीस्पंदनाहेतुतांगता ॥ ७५ ॥ अ स्यांसमस्ताःसंवद्धानाडयोहृदयकोशगाः ॥ सातःकुंडलिनीस्पंदस्पर्शसंवित्कलामला ॥ ७६ ॥ कलोक्ताकलनेनाशुकथिताचेतनेनचित् ॥ जीवनाज्जीवतांयातामननाच्चमनःस्थिता ॥७७॥ संक ल्पात्सैवसंकल्पाबोधाद्बुद्धिरितिस्थिता ॥ अहंकारात्मतांयातासैषापुर्यष्टकाभिधा ॥७८॥ स्थि ताकुंडलिनीदेहेजीवशक्तिरनुत्तमा ॥ प्राणापानस्वरूपत्वादधऊर्ध्वंव्रजत्यसौ ॥ ७९ ॥ समस्तै वोर्ध्वमायातिसमस्ताधोऽथसाव्रजेत् ॥ तत्पुमान्मृतिमायातिसैवप्राणमयीस्मृता ॥ ८० ॥ सर्व थात्मनितिष्ठेच्चेत्त्यक्त्वोर्ध्वाधोगमागमौ ॥ तज्जंतोर्हीयतेव्याधिरंतर्मारुतरोधतः ॥ ८१ ॥

तासतीपुर्यष्टकशब्दवाच्यापीत्यन्वयः ॥ ७८ ॥ स्थितेति ॥ देहेस्थिताकुंडलिनीशब्दवाच्याअनुत्तमायाजीवशक्तिरस्ति असावेवप्राणा पानस्वरूपत्वात्अधऊर्ध्वंचव्रजति ॥ ७९ ॥ समस्तेति ॥ साप्राणशक्तिःसमस्तैवकदाचिदूर्ध्वमायाति । अथानंतरंसमस्तैवाधोव्रजेत् । त त्तस्मात्प्राणगतेरध्रुवत्वात्पुमान्जीवोमृतिंमरणमायाति हियस्मात्कारणात्प्राणमयीस्मृता ॥ ८० ॥ सर्वथेति ॥ साप्राणशक्तिर्निरोधाभ्या सवशातूर्ध्वाधोगमागमौत्यक्त्वाआत्मनिदेहेसर्वथासर्वेणप्रकारेणतिष्ठेच्चेत्तर्हिअंतर्मारुतरोधतः मारुतस्यांतर्निरुद्धत्वाद्धेतोर्जंतोर्व्याधिर्ही

यतेत्यज्यते व्याधिरित्युपलक्षणंजरामरणादयोऽपिहीयंतइत्यर्थः ॥ ८१ ॥ किमिति ॥ विनाशोत्पत्तिशब्दाभ्यांतद्धेतूलक्ष्येते । कोविनाशो येषांकउत्पादोयेषामितिबहुव्रीहिः ॥ ८२ ॥ देहेति ॥ देहदुःखंशारीरदुःखहेतुंव्याधिंविदुः । वासनामयंमानसदुःखहेतुमाध्याख्यंविदुः । तेउभेअपिदुःखेतत्त्वज्ञानपरिक्षयेतत्त्वज्ञानाभावेसतिमौर्ख्यमूलेविद्यात् ॥ ८३ ॥ अतत्त्वेतिश्लोकद्वयंवाक्यम् ॥ अतत्त्वज्ञानवशतःतत्त्वज्ञा नाभावात्स्वेंद्रियाक्रमणंविनाइंद्रियजयाभावेसतितानवमल्पत्वमुत्सृज्य हृदिरागद्वेषप्रवृत्तेर्हेतोर्जाडयवशात् इंदवस्तुप्राप्तमिदंनेत्येवंरूपाघ

श्रीरामउवाच ॥ किंविनाशाःकिमुत्पादाःशरीरेऽस्मिन्मुनीश्वर ॥ आधयोव्याधयश्चैवयथावत्कथयाशु मे ॥ ८२ ॥ वसिष्ठउवाच ॥ देहदुःखंविदुर्व्याधिमाध्याख्यंवासनामयम् ॥ मौर्ख्यमूलेहितेविद्यात्तत्त्व ज्ञानपरिक्षये ॥ ८३ ॥ अतत्त्वज्ञानवशतस्त्विन्द्रियाक्रमणंविना ॥ हृदितानवमुत्सृज्यरागद्वेषष्वनार तम् ॥ ८४ ॥ इदंप्राप्तमिदंनेतिजाडयात्सुघनमोहदाः ॥ आधयःसंप्रवर्ततेवर्षासुमिहिकायथा ॥ ८५ ॥ भृ शंस्फुरंतीष्विच्छासुमौर्ख्येचघनतांगते ॥ दुरंताभ्यवहारेणदुर्देशाक्रमणेनच ॥ ८६ ॥ दुःकालव्यवहारे णदुःक्रियास्फुरणेनच ॥ दुर्जनासंगदोषेणदुर्भावोद्धावनेनच ॥ ८७ ॥ क्षीणत्वाद्वातिपूर्णत्वान्नाडीनांरं ध्रसंततौ ॥ प्राणेविधुरतांयातेकायेचविकलीकृते ॥ ८८ ॥

नमोहदाआधयःसंप्रवर्तंते । वर्षासुवर्षर्तौमिहिकाप्रालेयमिव ॥ ८४॥८५॥ भृशमितिश्लोकचतुष्टयंवाक्यम् ॥ इच्छासुपूर्वोक्तास्वाधिरूपासुभृ शंस्फुरंतीषुमौर्ख्येचघनतांगते दुरंतस्यदोषोद्रेकहेतोर्दुष्टस्यान्नस्याभ्यवहारेण दुर्देशस्यस्मशानादेराक्रमणेन ॥ ८६ ॥ दुःकालेसंध्यादौभो जनादिव्यवहारेणदुःक्रियायाःशववहनादिरूपायाःस्फुरणेनप्रवर्तनेन कुष्ठादिदूषितजनानामासंगदोषेण दुर्भावस्यक्रोधादेरुद्भावनेनच ८७ नाडीनांप्राणसंचारमार्गाणांक्षीणत्वात्पूर्णत्वाद्वातद्रंध्रसंततौप्राणेविधुरतांवैषम्यंयातेकायेचविकलीकृतेसति ॥ ८८ ॥

दौःस्थित्यकारणाद्दुःखहेतोर्दोषाद्वातादिरूपाद्देहेव्याधिर्जायते । प्रावृण्निदाघाभ्यांवृद्धिक्षयहेतुभ्यांनद्याआकारविपर्ययोवृद्धिक्षयरूपइवेत्यन्वयः ॥ ८९ ॥ प्राक्तनीति ॥ प्राक्तनीपूर्वजन्मसंभवाऐहिकीइहजन्मनिसंभूताशुभाशुभावा यागतिर्वासनाअधिकाप्रबलासैवतस्मिन्नस्वानुरूपेशुभेऽशुभेवाक्रमेव्यवहारेतथातेनैवप्रकारेणयोजयतिप्रवर्तयति । दुर्वासनावशाद्व्याधिहेतुमपचारमाचरतीतिभावः ॥ ९० ॥ आधयइति ॥ एवंपूर्वोक्तेनप्रकारेण ॥ ९१ ॥ द्विविधइति ॥ आधिर्द्विविधोऽस्ति । सामान्यःसारभूतश्चेति । तत्रयोव्यवहारमात्रहेतुराधिःस

॥ ९२ ॥

दौःस्थित्यकारणाद्दोषाद्व्याधिर्देहात्प्रवर्तते ॥ नद्याःप्रावृण्निदाघाभ्यामिवाकारविपर्ययः ॥८९॥
प्राक्तनीचैहिकीवापिशुभावाप्यशुभागतिः ॥ यैवाधिकासैवतथातस्मिन्योजयतिक्रमे ॥ ९० ॥
आधयोव्याधयश्चैवंजायंतेभूतपंचके ॥ कथंशृणुविनश्यंतिराघवानांकुलोद्वह ॥ ९१ ॥ द्विविधो
ह्याधिरस्तीहसामान्यःसारएवच ॥ व्यवहारश्चसामान्यःसारोजन्मनियःस्मृतः ॥ ९२ ॥ प्राप्ते
नाभिमतेनैवनश्यंतिव्यावहारिकाः ॥ आधिक्षयेचाधिभवाःक्षीयंतेव्याधयोऽप्यलम् ॥९३॥ आ
त्मज्ञानंविनासारोनाधिर्नश्यतिराघव ॥ यथारज्ज्ववबोधेनविनासर्पोननश्यति ॥ ९४ ॥ अना
धिजाव्याधयस्तुद्रव्यमंत्रशुभक्रमैः ॥ चिकित्सकादिशास्त्रोक्तैर्नश्यंतित्वंचवेत्सितत् ॥ ९५ ॥

सारःस्मृतः । सुदृढत्वाच्छुद्धवासनामयआधिःसामान्योमलिनवासनामयस्तुसारइतितात्पर्यम् ॥ ९२ ॥ प्राप्तेनेति ॥ व्यावहारिकाःव्यवहारमात्रप्रयोजनाआधयःप्राप्तेनसताअभिमतेनैववस्तुनानश्यंति इष्टप्राप्तिरिच्छानिवृत्तेरुचितत्वात् । आधिभवाव्याधयोऽपिआधिक्षयेसतिक्षीयंते ॥ ९३ ॥ आत्मेति ॥ सारस्त्वाधिःआत्मज्ञानंविनानानश्यतिअविद्यामयत्वात् ॥ ९४ ॥ अनाधीति ॥ द्रव्याणिकल्ककषायादिरूपाणिमंत्राआरोग्यहेतवःसौरादयःशुभक्रमाःदेवब्राह्मणसंतर्पणादयः ॥ ९५ ॥

॥ ९३ ॥

॥ ९६ ॥ चित्तइतिश्लोकषट्कंवाक्यम् ॥ चित्तेविधुरितेविक्षिप्तेसतिदेहःसंक्षोभमनुयाति । चित्तायत्तंधातुबद्धंशरीरमित्येतदुपपादयन्नाह ।
तथाहीति । रुषितःकुपितोजंतुरग्रंपुरोभागमेवनपश्यतिकिमुतान्यद्वस्त्वितिशेषः ॥ ९७ ॥ तथापुरोमार्गमनपेक्ष्यअमार्गमकार्यमेवानुधा
वतिशरेणविद्धोहरिणइव ॥ ९८ ॥ ततश्चदेहस्थसप्तधातुमयस्यसंक्षोभात्प्राणवायवःसाम्यमुत्सृज्यविषमंवहंति । प्राणेविषमंवहतिसतिना
ड्योविसंस्थितिंविषमांस्थितिंयांति ॥ ९९ ॥ एवंनाडीनांप्राणानांचविपर्ययाद्वैषम्याद्धेतोरन्नमुपभुक्तंदोषायैवदोषोद्रेकंकर्तुंकुजीर्णत्वमजी

श्रीरामउवाच ॥ आधिःकथंभवेद्व्याधिःकथंचसविनश्यति ॥ इतिमेभगवन्ब्रूहिप्रसन्नपदयागिरा ॥ ९६ ॥
वसिष्ठउवाच ॥ चित्तेविधुरितेदेहःसंक्षोभमुपयातिहि ॥ तथाहिरुषितोजंतुरग्रमेवनपश्यति ॥ ९७ ॥ अन
वेक्ष्यपुरोमार्गममार्गमनुधावति ॥ प्रकृतंमार्गमुत्सृज्यशरार्तोहरिणोयथा ॥ ९८ ॥ संक्षोभात्साम्यमुत्सृ
ज्यवहंतिप्राणवायवः ॥ असमेवहतिप्राणेनाड्योयांतिविसंस्थितिम् ॥ ९९ ॥ असम्यक्संस्थितेभूपेयथाव
र्णाश्रमक्रमः ॥ कुजीर्णत्वमजीर्णत्वमतिजीर्णत्वमेववा ॥ १०० ॥ दोषायैवप्रयात्यन्नंनाडीप्राणविपर्य
यात् ॥ यान्यन्नानिविरोधेनतिष्ठंत्यंतःशरीरके ॥ १ ॥ तान्येवव्याधितांयांतिपरिणामस्वभावतः ॥ एवमाधे
र्भवेद्व्याधिराधिनाशाच्चनश्यति ॥ यथामंत्रैर्विनश्यंतिव्याधयस्तंक्रमंशृणु ॥ २ ॥ यथाविरेकंकुर्वंतिहरी
तक्यःस्वभावतः ॥ भावनावशतःकार्यंतथायरलवादयः ॥ ३ ॥

र्णत्वमेववाप्रयाति ॥ १०० ॥ एवंयान्यन्नानिशरीरेविरोधेनकुजीर्णत्वादिरूपेणतिष्ठंतितान्येवचान्नानिपरिणामस्वभावतःविपाकवशाद्व्या
धिरूपतांयांति ॥ १ ॥ एवमुक्तेनप्रकारेणाधेर्व्याधिर्भवेत्तन्नाशाच्चनश्यति यथाव्याधयोमंत्रैर्यथारोग्यहेतुभिर्विनश्यंतितंचक्रमंवक्ष्यामि
शृण्वित्यन्वयः ॥ १०२ ॥ यथेति ॥ हरीतक्यःहरीतकीफलानियथास्वभावादेवविरेकंमलमोचनंकुर्वंतितथैवयरलवादयोमंत्रवर्णाभावना

वशतः आरोग्यसमुचितध्यानवशाद्रोगनिवृत्तिरूपंकार्यंकुर्वंति ॥ ३ ॥ तत्तत्फलोपजननीत्वपिभावनैवेतिन्यायात् । आधिनाशात्त जन्योव्याधिर्नश्यतीत्युक्तंतत्कथमित्याकांक्षायांतत्प्रकारमाह ॥ शुद्धयेतिश्लोकत्रयंवाक्यम् ॥ शुद्धयानिर्दोषयापुण्ययाक्रिययाशिवार्च नादिरूपयासाधुसेवयामहापुरुषशुश्रूषयाचपापक्षयेसतिमनोनैर्मल्यंप्रयातिनिकषेणघर्षणेनकांचनमिव ॥ ४ ॥ ततश्चेतसिशुद्धेसतिदे हेआनंदःसुखंवर्धते । पूर्णेंदावुदितेसतिभुवनेनैर्मल्यंप्रकाशइव ॥ ५ ॥ तथासत्वशुद्धौचित्तनैर्मल्येसतिप्राणवायवःक्रमेणैववहंति । त थासाम्येनवहंतःसंतोऽन्नानिजरयंतितेनान्नानांजरणेनव्याधिर्विनश्यति ॥ ६ ॥ आधीति ॥ आधिव्याध्योर्नाशोत्पत्तिक्रमौनाशक्र

शुद्धयापुण्ययासाधोक्रिययासाधुसेवया ॥ मनःप्रयातिनैर्मल्यंनिकषेणेवकांचनम् ॥ ४ ॥ आ
नंदोवर्धतेदेहेशुद्धेचेतसिराघव ॥ पूर्णेंदावुदितेसम्यङ्नैर्मल्यंभुवनेयथा ॥ ५ ॥ सत्वशुद्धौवहंत्ये
तेक्रमेणप्राणवायवः ॥ जरयन्तितथान्नानिव्याधिस्तेनविनश्यति ॥ ६ ॥ आधिव्याध्योरिति
प्रोक्तौनाशोत्पत्तिक्रमौत्वयि ॥ कुंडलिन्यांकथायोगमधुनाप्रकृतंशृणु ॥ ७ ॥ पुर्यष्टकापराख्य
स्यजीवस्यप्राणनामिकाम् ॥ विद्धिकुंडलिनीमंतरामोदस्येवमंजरीम् ॥ ८ ॥ तांयदापूरकाभ्या
सादापूर्यस्थीयतेसमम् ॥ तदैतिमैरवंस्थैर्यंकायस्यपीनतांतथा ॥ ९ ॥

मउत्पत्तिक्रमश्चेतिपूर्वोक्तप्रकारेणप्रोक्तौ । अधुनाप्रकृतंकुंडलिन्यांकुंडलिनीविषयंकथायोगंकथ्यमानंयोगंशृणु ॥ ७ ॥ पुरीति ॥ अनं तःकुंडलीपूर्वोक्तांपुर्यष्टकापराख्यस्यपुर्यष्टकमित्यपराआख्यायस्यजीवस्यप्राणनामिकांप्राणभूतांविद्धि । आमोदस्यमंजरीमिव । यथाहिमं जर्यासत्यामेवामोदःप्राणितितथाकुंडलिन्यांसत्यामेवजीवइतिभावः ॥ ८ ॥ तामिति ॥ यदापूरकाभ्यासात्पूरकाभ्यासवशाद्धेतोःतां कुंडलिनीमापूर्यसमंनिर्विकारंस्थीयतेतदामैरवंमेरुसंबंधिस्थैर्यंस्थिरत्वं कायस्यपीनतांस्थौल्यंचैति प्राप्नोतिताट्टक्पूरकाभ्यासेकायोमेरुरिव

स्थितःस्थूलश्चभवतीत्यर्थः ॥ ९ ॥ यदेतिश्लोकत्रयंवाक्यम् ॥ यदातुसाकुंडलिनीपूरकपूर्णांतरायतप्राणमारुतं पूरकैःपूर्णःअंतरायतो दीर्घश्चप्राणमारुतोयस्मिन्कर्मणितद्यथाभवतितथासंविदाऊर्ध्वगतिभावनयाऊर्ध्वमुपरितनाकाशदेशंनीयतेघर्मश्रमक्लमंसोढुमिव । तथाहि । केनचिद्धर्मश्रांतेनकुत्रचिच्छायायांश्रमापनोदनायशीताख्यंकुंभकमभ्यस्यता पूरकपूर्णांतरायतप्राणं यथातथाकुंडलिन्यूर्ध्वंनीयतेतद्वदित्य र्थः ॥ ११० ॥ तदासाकुंडलिनीसर्पीवभुजंगमीवदंडोपमांगतासतीदेहबद्धाःसर्वानाडीर्लताइवसमादायत्वरिताइवोर्ध्वंयाति ॥ ११ ॥ तदाचेदंदेहकंसमस्तमेवोत्प्लावयतिउद्गमयतिनीरंध्रपवनापूर्णानीरंध्रंयथातथापवनेनापूर्णा भस्त्राचर्मप्रसेविकाअंबुगतासतीनरंयथोत्प्लावय

> यदापूरकपूर्णांतरायतप्राणमारुतम् ॥ नीयतेसंविदेवोर्ध्वंसोढुंघर्मंश्रमक्लमम् ॥ ११० ॥ सर्पीव
> त्वरितैवोर्ध्वंयातिदंडोपमांगता ॥ नाडीःसर्वाःसमादायदेहबद्धालतोपमाः ॥ ११ ॥ तदासम
> स्तमेवेदमुत्प्लावयतिदेहकम् ॥ नीरंध्रपवनापूर्णाभस्त्रेवांबुगतानरम् ॥ १२ ॥ इत्यभ्यासविलासेन
> योगेनव्योमगामिताम् ॥ योगिनःप्राप्नुवंत्युच्चैर्दीनाइंद्रदशामिव ॥ १३ ॥ ब्रह्मनाडीप्रवाहेणश
> क्तिःकुंडलिनीयदा ॥ बहिरूर्ध्वकपाटस्यद्वादशांगुलमूर्धनि ॥ १४ ॥

तितद्वदित्यर्थः ॥ १२ ॥ इतीति ॥ इत्यभ्यासविलासेनईदृशाभ्यासविशेषवतायोगेनयोगिनोव्योमगामितांप्राप्नुवंति दीनादरिद्राइंद्रदशा मिंद्रपदमिवेत्यन्वयः ॥ १३ ॥ ब्रह्मनाडीतिश्लोकद्वयंवाक्यम् ॥ यदासाकुंडलिनीरूपाप्राणशक्तिःब्रह्मनाडीप्रवाहेणसुषुम्नांतःप्रवाहेणऊ र्ध्वकपाटस्यब्रह्मरंध्रस्यबहिर्भागेद्वादशांगुलमूर्धनिद्वादशांगुलपरिमितस्याकाशदेशस्योपरिभागे नाडीशतनिरोधिनासर्वनाडीनिरोधकेनप्र योगेणरेचकाभ्यासरूपेणप्रकृष्टेनयोगेनमुहूर्तमात्रंस्थितिमवस्थांप्राप्नोति तदातस्मिन्कालेव्योमगदर्शनंसिद्धविद्याधरादीनांखेचराणांदर्श नंभवति ॥ १४ ॥

॥ १५ ॥ दर्शनप्रकारमेवाह ॥ विज्ञानेति ॥ विज्ञानादूरसंस्थेनविज्ञानंस्वरूपचैतन्यंतस्माददूरसंस्थेनसन्निकृष्टेन अतश्चैतन्यसंक्रांत्याप्रकाशकेनबुद्धिनेत्रेणचक्षुषाव्योमगाःसिद्धाःस्वप्नदशायामिवदृश्यंते । नकेवलंदर्शनमात्रंस्वार्थदाअपिस्वापेक्षितामणिमादिसिद्धिंचप्रयच्छंतीत्यर्थः ॥ १६ ॥ परपुरप्रवेशप्रकारमाह ॥ मुखादिति ॥ मुखाद्वक्राद्बहिःद्वादशांतेद्वादशांगुलपरिमिताकाशदेशपर्यंतेरेचकाभ्यासयुक्तितोरेचकाभ्यासरूपाद्योगविशेषाद्धेतोःप्राणेप्राणवायौचिरंस्थितिंनीतेसतिअपरांपुरींदेहांतरंप्रविशति परकायप्रवेशसिद्धिर्भवतीत्यर्थः ॥ १७ ॥

रेचकेनप्रयोगेणनाडयंतरनिरोधिना ॥ मुहूर्तंस्थितिमाप्नोतितदाव्योमगदर्शनम् ॥ १५ ॥ विज्ञानादूरसंस्थेनबुद्धिनेत्रेणराघव ॥ दृश्यंतेव्योमगाःसिद्धाःस्वप्नवत्स्वार्थदाअपि ॥ १६ ॥ मुखाद्बहिर्द्वादशांतेरेचकाभ्यासयुक्तितः ॥ प्राणेचिरंस्थितिंनीतेप्रविशत्यपरांपुरीम् ॥ १७ ॥ श्रीरामउवाच ॥ सूक्ष्मच्छिद्रादिगत्यर्थंपूरणार्थंचखस्यवा ॥ अणुतांस्थूलतांवापिकायोऽयंनीयतेकथम् ॥ १८ ॥ वसिष्ठउवाच ॥ एकंचिन्मात्रमस्तीहशुद्धंसौम्यमलेपकम् ॥ सूक्ष्मात्सूक्ष्मतरंशांतंनोजगन्नजगद्गताः ॥ १९ ॥ तच्चिनोत्यात्मनात्मानंसंकल्पोन्मुखतांगतम् ॥ यदातदाजीवइतिप्रोक्तमाविलतांगतम् ॥ १२० ॥ असत्यमेवसंकल्पभ्रमेणेदंशरीरकम् ॥ जीवःपश्यतिमूढात्माबालोयक्षमिवोद्धतम् ॥ २१ ॥

सूक्ष्मेति ॥ सूक्ष्मच्छिद्रादिगत्यर्थंगमनसिद्धयेखस्याकाशस्यपूरणार्थंव्याप्त्यर्थंवाअयंकायःअणुतांस्थूलतांवापिकथंनीयतेकायस्यैकत्वात्परिणामभेदेचभेदप्रसंगादितिभावः ॥ १८ ॥ एकमिति ॥ चिन्मात्रमेकमेवास्ति जगद्गताःपदार्थसमृद्धयोऽपिनोसंति ॥ १९ ॥ तदिति ॥ तच्चिन्मात्रंवस्तुसंकल्पोन्मुखतांगतंसत् यदाआत्मनैवात्मानंचिनोतिउपचितंकरोतिपरिच्छिन्नमितियावत्तदाआविलतांकलुषतांगतंजीवइतिप्रोक्तम् ॥ १२० ॥ असत्यमिति ॥ मूढात्माजीवःस्वसंकल्पभ्रमेणबालोयक्षमिवअसत्यमेवेदंशरीरंपश्यति ॥ २१ ॥

एवमिति ॥ एवंसतिविदितात्मानोनिश्चितात्मानःपुरुषाःयद्वस्तुयथैवभावयंतितथादृढभावनयातद्वस्तुतथैवाशुपश्यंति ॥ २२ ॥ दृढेति ॥ मूढाआत्मज्ञानरहिताअपिदृढभावनानुसंधानाद्भावोभावनात्दृढभावनायाः सांतत्याद्विषंदुःखोदर्कंनिषिद्धंकर्मअमृततांनयंति अमृतंविहितं कर्मविषतांदुःखहेतुतांनयंति ॥ २३ ॥ एवमिति ॥ एवंयद्वस्तुयथाभाव्यतेतेनतथैवभूयतेअनुभूयतइत्यर्थः। तदेतदर्थस्वरूपंमुहुरालोकितंविचारितमित्यर्थः ॥ २४ ॥ २५ ॥ अणिमादीति ॥ योगसंसिद्धिसंविदांयोगेपवनजयेसंसिद्धादृढंपरिचयासंविद्येषांतेषांअणिमादिपदप्रा

एवंहिविदितात्मानोभावयंतियथैवयत् ॥ तत्तथैवानुपश्यंतिदृढभावनयातया ॥ २२ ॥ दृढभावानुसंधानाद्धिमूढाअपिराघव ॥ विषंनयंत्यमृततामममृतंविषतामपि ॥ २३ ॥ एवंयथावद्देवेहभाव्यतेदृढभावनात् ॥ भूयतेहितदेवाशुतदित्यालोकितंमुहुः ॥ २४ ॥ सत्यभावेनदृष्टोऽयंदेहोऽदेहोभवत्यलम् ॥ दृष्टस्त्वसत्यभावेनव्योमतांयातिदेहकः ॥ २५ ॥ अणिमादिपदप्राप्तौभावनायुक्तिरीदृशी ॥ सुलभेयंमहाबुद्धेयोगसंसिद्धिसंविदाम् ॥ २६ ॥ अणिमादिगुणैश्वर्ययुक्तासानृपभामिनी ॥ एवंबभूवचूडालाघनाभ्यासवतीसती ॥ २७ ॥ जगामाकाशमार्गेणविवेशांबुधिकोटरम् ॥ चचारवसुधापीठंगंगेवामृतशीतला ॥ २८ ॥ क्षणमप्यागताभर्तुर्वक्षस्युच्चैर्यदातदा ॥ भर्तारंबोधयामीतितदुपायमवेक्षते ॥ २९ ॥

प्तावपिईदृशीइयंभावनायुक्तिः सुलभाअणुत्वभावनायामणिमामहत्त्वभावनायांमहिमेत्येवमणिमादिसाधिकापियुक्तिःसुखेनलभ्यतइत्यर्थः ॥ २६ ॥ अणिमेति ॥ साचूडालाएवंघनाभ्यासवतीसतीअणिमादिगुणैश्वर्ययुक्ताबभूवेत्यन्वयः ॥ २७ ॥ जगामेति ॥ सागंगेवलोकत्रयेऽपिस्वैरंविजहारेत्यर्थः। तत्रांबुधिकोटरप्रवेशेनपातालगमनमुच्यते ॥ २८ ॥ क्षणमिति ॥ साचूडालाभर्तुर्वक्षस्यालिंगनार्थंक्षणमपि

यदागतातदाभर्तारंबोधयामीतिबुद्ध्यातदुपायंतद्बोधनोपायमेवावेक्षतेविचारयतिनपुनरालिंगनादिकमपेक्षते विषयसुखेष्वनादरादितिभा
वः ॥ २९ ॥ ३० ॥ नचेति ॥ मुक्ताफलममलेमुक्ताफलेसुसंक्लिष्टमपियथाविश्रांतिंनापतति तथाऽसौराजाआत्मनिविश्रांतिंनापतत् । असं
क्लिष्टमितिपाठेमुक्ताफलंअसंक्लिष्टंसत्यथाविश्रांतिंनापततितद्वदितिभावः ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ उपदेशेति ॥ उपदेशक्रमःगु
रूपदेशरूपःउपायःव्यवस्थामात्रपालनंव्यवस्थाज्ञानशास्त्रोक्तामर्यादातन्मात्रस्यैवपालनं ज्ञप्तेरात्मसाक्षात्कारस्यतुशुद्धाशिष्यप्रज्ञैवकारणमि

यत्नेनतंचभर्तारमात्मज्ञानामृतंप्रति ॥ बहुशोबोधयामासपिताबालमिवात्मजम् ॥ ३० ॥ नचासावाप
तद्भर्ताराजाविश्रांतिमात्मनि ॥ मुक्ताफलंसुसंक्लिष्टंमुक्ताफलइवामलम् ॥ ३१ ॥ एतावतापिकालेनतामे
वंगुणशालिनीम् ॥ बालोविद्यामिवनृपश्चूडालांनविवेदसः ॥ ३२ ॥ साप्यलब्धात्मविश्रांतेःस्वांसिद्धिं
श्रियमात्मनः ॥ दर्शयामासनोराज्ञःक्षुद्रस्येवमखक्रियाम् ॥ ३३ ॥ श्रीरामउवाच ॥ महत्याःसिद्धयोगि
न्यास्तस्याअपिशिखिध्वजः ॥ यत्नेनप्रापनोयोगंबुध्यतेऽन्यःकथंप्रभो ॥ ३४ ॥ वसिष्ठउवाच ॥ उपदे
शक्रमोरामव्यवस्थामात्रपालनम् ॥ ज्ञप्तेस्तुकारणंशुद्धाशिष्यप्रज्ञैवकेवला ॥ ३५ ॥ श्रीरामउवाच ॥ एवं
स्थितेवदमुनेकथमेतज्जगत्स्थितौ ॥ क्रमोगुरूपदेशाख्यआत्मज्ञानस्यकारणम् ॥ ३६ ॥ वसिष्ठउवाच ॥
अत्यंतकृपणःकश्चित्किराटोधनधान्यवान् ॥ आस्तेविंध्याटवीकच्छेकुटुंबीब्राह्मणादिवत् ॥ ३७ ॥

ति ॥ ३५ ॥ एवमिति ॥ एवंस्थितेसतिजगत्स्थितौलोकव्यवहारेषुगुरूपदेशाख्यःक्रमःआत्मज्ञानस्यकारणमित्येतत्कथंकेनप्रकारेण तंप्र
कारंवदेत्यर्थः ॥ ३६ ॥ अत्यंतेति ॥ किराटोवैश्यःकिरतिधनलाभार्थंअटतिपुनःप्राप्नोतिचतद्विगुणत्रिगुणादिरूपेणेतिव्युत्पत्तेः । वैश्यविडंबने
किराटःकटसंनिभइतिवचनात् । किरातइतितुनपाठः धनधान्यवत्त्वस्यब्राह्मणादिवत्कुटंबित्वस्यदिनत्रयमरण्येकपर्दिकान्वेषणस्यचकिरातं

प्रत्यनौचित्यात् ॥३७॥ तस्येति ॥ विंध्यजांगले जंगलमरण्यप्रायोदेशः जांगलंइतिपाठेअल्पोदकंस्वल्पतरुस्थलं वराटिकाकपर्दिका ॥३८॥ कार्पण्यादिति ॥ कृपणस्यभावःकार्पण्यंलोभातिशयइत्यर्थः । तृणबुसादिकंबुसंकडंगरःकपर्दिकार्थंपतितांवराटिकामन्वेष्टुम् ॥ ३९ ॥ ततइति ॥ कुजांगलात्कुत्सितादरण्यप्रदेशात् ॥ १४० ॥ यथेतिश्लोकद्वयंवाक्यम् ॥ यथाहिकिराटेनकपर्दान्वेषणाययज्जगन्मूल्यंरत्नंलब्धं तथागुरोःश्रुतोपदेशेनशिष्येणस्वात्मज्ञानमवाप्यते । हियस्मात्कारणातगुरुक्रमातगुरूपदिष्टाद्रुपायाद्धेतोः । अन्यद्रुपहितंवस्त्वन्विष्यतेध्या

तस्यैकदानिपतितागच्छतोविंध्यजांगले ॥ एकावराटिकारामतृणजालसमावृते ॥ ३८ ॥ कार्पण्यात्सप्रयत्नेनसर्वंतृणबुसादिकम् ॥ कपर्दिकार्थमभितोदुधावदिवसत्रयम् ॥ ३९ ॥ ततोदिनत्रयस्यांतेतेनतस्मात्कुजांगलात् ॥ पूर्णेंदुबिंबप्रतिमोलब्धश्चिंतामणिर्महान् ॥ १४० ॥ यथातत्रकिराटेनकपर्दान्वेषणेनतत् ॥ रत्नंलब्धंजगन्मूल्यमहोरात्रमखेदिना ॥ ४१ ॥ तथाश्रुतोपदेशेनस्वात्मज्ञानमवाप्यते ॥ अन्यदन्विष्यतेचान्यल्लभ्यतेहिगुरुक्रमात् ॥ ४२ ॥ तत्त्वस्यास्यमहार्घस्यगुरूपकथनंगतम् ॥ अकारणंकारणतांमणेरिवकपर्दिकः ॥ ४३ ॥ इतिश्रीयोगवासिष्ठसारेनिर्वाणप्रकरणेकिराटोपाख्यानंनामसप्तत्रिंशःसर्गः ॥ ३७ ॥ वसिष्ठउवाच ॥ ततःशिखिध्वजोराजातत्त्वज्ञानपदंविना ॥ आजगामपरंमोहंतमोऽधत्वमिवप्रजाः ॥ १ ॥

यतेअन्यदनुपहितंवस्तुचलभ्यतेसाक्षात्क्रियते ॥ ४१ ॥ ४२ ॥ तत्त्वस्येति ॥ महार्घस्यबहुमूल्यस्यअस्यतत्त्वस्यतत्त्वज्ञानस्यगुरूपकथनंगुरूपदेशःअकारणंसाक्षादकारणमपिमणेःकपर्दिकइवपरंपरयाकारणतांगतम् ॥ ४३ ॥ इतिश्रीवासिष्ठविवरणेनिर्वाणप्रकरणेकिराटोपाख्यानंनाम सप्तत्रिंशःसर्गः ॥ ३७ ॥ ततइति ॥ तत्त्वज्ञानपदंविनातत्त्वज्ञानरूपस्यविश्रांतिपदस्याभावादित्यर्थः । तमोऽधत्वं प्रजाजनाः ॥ १ ॥

दुःखाग्निर्दीपितमनामनागपिविभूतिषु ॥ तास्वभीष्टोपनीतासुनरेमेऽग्निशिखास्विव ॥ २ ॥ ददावति
तरांदानंतीर्थयात्रांचकारह ॥ तपःकृच्छ्रादिकंचक्रेबभ्रामपरितोदिशः ॥ ३ ॥ सर्वथापिविशोकत्वंनम
नागपिलब्धवान् ॥ चिंतापरवशोदीनोराज्यंपश्यन्विषोपमम् ॥ ४ ॥ अथैकदैकांतगतश्चूडालामंकमा
स्थिताम् ॥ इदंमधुरयावाचासमुवाचशिखिध्वजः ॥ ५ ॥ भुक्तंराज्यंचिरंकालंदृष्टाविभवभूमयः ॥
अधुनास्मिविरागेणयुक्तोगच्छामिकाननम् ॥ ६ ॥ नसुखानिनदुःखानिनापदोनचसंपदः ॥ क्रो
डीकुर्वंतितन्वंगिमुनिंवननिवासिनम् ॥ ७ ॥ नदेशभंगसंमोहोनसंग्रामेजनक्षयः ॥ राज्यादप्य
धिकंमन्येसुखंवननिवासिनाम् ॥ ८ ॥ यथाविविक्तमेकांतमनोभवतिनिर्मलम् ॥ नतथाशशिबिंबे
षुनचब्रह्मेंद्रसद्मसु ॥ ९ ॥ अस्मिन्मेमंत्रणेतन्विनविघ्नंकर्तुमर्हसि ॥ भर्तुर्विघटयंतीच्छांनस्वप्नेऽपि
कुलस्त्रियः ॥ १० ॥ चूडालोवाच ॥ प्राप्तकालमिदंकार्यंराजतेनाथनेतरत् ॥ वसंतेराजतेपुष्पंफलं
शरदिराजते ॥ ११ ॥ जराजरठदेहानांयुक्तोवनसमाश्रयः ॥ नयूनांत्वादृशामेवतेनैतन्मेनरोचते
॥ १२ ॥ शिखिध्वजउवाच ॥ अलमुत्पलपत्राक्षिविघ्नेनाभिमतस्यमे ॥ विद्धित्वंमांगतमितोदूर
मेकांतकाननम् ॥ १३ ॥



यः युद्धनिमित्तःप्राणिनांसंक्षयोनास्ति । अतश्चवननिवासिनांसुखंराज्यसुखादप्यधिकंमन्ये ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥

॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ वीरेति ॥ वीरक्रमार्थंवीरचर्यार्थम् ॥ १२० ॥ २१ ॥ २२ ॥ ततइतिश्लोकद्वयंवाक्यम् ॥ अत्यंतदूरस्थाजनताजनसमूहःपुराणिचयस्माद्दरंतितिध्वनंति प्रणालसलिलानिकुल्याजलानियासांताभिर्वापीभिर्दीर्घिकाभिर्वलिताःपादपाय

बालात्वमनवद्यांगीनागंतव्यंत्वयावनम् ॥ पुंसामपिहिमृद्वंगिदुर्विगाह्योवनाश्रयः ॥ १४ ॥ भवत्यापालयंत्येहराज्येस्थातव्यमुत्तमे ॥ कुटुंबभारोद्वहनंपत्यौयातेव्रतंस्त्रियः ॥ १५ ॥ वसिष्ठउवाच ॥ इत्युक्त्वादयितांराजातामिंदुवदनांवशी ॥ उत्तस्थौस्नातुमखिलंदिनकार्यंचकारह ॥ १६ ॥ अथोज्झितप्रजाचारोरविरस्ताचलंययौ ॥ यामिनीयौवनंप्रापसरोजमुकुलस्तनी ॥ १७ ॥ कृतसंध्यासमाचारःसहचूडालयेष्टया ॥ सुष्वापशयनेभूयोमैनाकइवसागरे ॥ १८ ॥ अथार्धरात्रिसमयेदेशेनिःशब्दतांगते ॥ घननिद्राशिलाकोशेनिलीनेसकलेजने ॥ तत्याजदयितांसुप्तामंकाद्राजाथनिर्ययौ ॥ १९ ॥ वीरक्रमार्थंयामीतितत्रैवानुचरंनिजम् ॥ योजयित्वाजगामासौपुरान्निर्गत्यपूर्णधीः ॥ १२० ॥ जडेलक्ष्मिनमस्तुभ्यमित्युक्त्वामंडलाद्गतः ॥ विवेशोग्रामरण्यानीमेकोनदइवार्णवम् ॥ २१ ॥ पुनःप्रातःपुनारात्रिरुषित्वादशशर्वरीः ॥ जवेनलंघयामासमंडलानिगिरीन्नदीः ॥ २२ ॥ ततोमंदरशैलस्यतटस्थंजनदुर्गमम् ॥ प्रापकाननमत्यंतदूरस्थजनतापुरम् ॥ २३ ॥

स्मिन्शीर्णैःशिथिलितैर्वेद्यादिभिर्वेदिकापर्णशालादिभिर्विज्ञाता भूतपूर्वाःपूर्वभूताः द्विजानांआश्रमायस्मिंस्तत्तादृशंमंदिरशैलस्यतटस्थं

कानननंप्रापेत्यन्वयः ॥ २३ ॥ २४ ॥ २५ ॥ मसृणमितिश्लोकद्वयंवाक्यम् ॥ मसृणंस्निग्धंबृसींव्रतिनामासनरूपं मृगाजिनमित्यर्थः॥२६॥ ॥ २७ ॥ तस्यादिनचर्यामाह ॥ संध्यामितिश्लोकद्वयंवाक्यम् ॥ प्रहरेयामे ॥ २८ ॥ २९ ॥ एवमिति ॥ किंवृत्तवतीकीदृशचरित्रयुक्ता





रटत्प्रणालसलिलवापीवलितपादपम् ॥ शीर्णवेद्यादिविज्ञानभूतपूर्वद्विजाश्रमम् ॥ २४ ॥ क्षुद्रप्राणिविनिर्मुक्तंसिद्धसेव्यलतागृहम् ॥ तत्रैकस्मिन्समेदेशेसचकारोटजालयम् ॥ सर्वसंपादितंतद्वद्योग्यंतापसकर्माणि ॥ २५ ॥ मसृणंवैणवंदंडंफलभोजनभाजनम् ॥ अर्घ्यपात्रंपुष्पभांडमक्षमालांकमंडलुम् ॥ २६ ॥ कंथांशीतापनोदायबृसीमथमृगाजिनम् ॥ आनीयायोजयत्तत्रमठिकामंदिरेनृपः ॥ २७ ॥ संध्यापूर्वंजपंप्रातःप्रहरेसतदाकरोत् ॥ पुष्पोच्चयंद्वितीयेतुस्नानंदेवार्चनंततः ॥ २८ ॥ पश्चाद्वन्यंफलंकिंचिद्वनकंदबिसादिच ॥ भुक्त्वाजप्यपरोभूत्वानिनायैकांनिशांवशी ॥ २९ ॥ वसिष्ठउवाच ॥ एवंशिखिध्वजःपर्णमठिकायांवनेस्थितः ॥ इदानींशृणुचूडालासाकिंवृत्तवतीगृहे ॥ १३० ॥ तत्रार्धरात्रसमयेदूरंयातेशिखिध्वजे ॥ हरिणीग्रामसुप्तेवचूडालाबुबुधेभयात् ॥ ३१ ॥ अपश्यत्पतिनिर्हीनाशयनंशून्यतांगतम् ॥ उत्तस्थौकिंचिदाम्लानवदनाखेदशालिनी ॥ ३२ ॥ कुमित्रेवमहावल्लीनिरुत्साहांगपल्लवा ॥ क्षणंशय्योपविष्टैवचिंतयामासखिन्नधीः ॥ ३३ ॥



॥ १३० ॥ ३१ ॥ ३२ ॥ ३३ ॥

तदितिश्लोकद्वयंवाक्यम् ॥ विधिनाशास्त्रेणस्त्रियाःभर्तैवप्रकृतान्याय्यागतिरुद्दिष्टा ॥ ३४ ॥ वातरंध्रेणगवाक्षेण ॥ ३५ ॥ चकारेति ॥ मुखेनस्वमुखेनसिद्धसार्थस्यसिद्धसंघस्यान्येंदुविभ्रमंअन्योऽयमिंदुरितिभ्रांतिः ॥ ३६ ॥ तादृशमिति ॥ भविष्यंभाविभर्तुःसर्वंशुभाशुभं

कष्टंराज्यंप्रभुस्त्यक्त्वावनंयातोगृहादिति ॥ तन्मयेहाद्यकिंकार्यंतत्समीपंव्रजाम्यहम् ॥ भर्तैवगतिरुद्दिष्टाविधिनाप्रकृतास्त्रियाः ॥ ३४ ॥ इतिसंचिंत्यभर्तारमनुगंतुंसमुत्थिता ॥ चूडालावातरंध्रेणनिर्गत्यांबरमाययौ ॥ ३५ ॥ चकारसिद्धसार्थस्यमुखेनान्येंदुविभ्रमम् ॥ ददर्शाथयथायांतंरात्रौखड्गधरंपतिम् ॥ ३६ ॥ तादृशंपतिमालोक्यस्थित्वागगनकोटरे ॥ भविष्यंचिंतयामाससर्वंभर्तुरखंडितम् ॥३७॥ अवश्यंभवितव्यंतद्दृष्ट्वाभर्तुःपुरःस्थितम् ॥ तदेवसंपादयितुंगगनात्सान्यवर्तत ॥ ३८ ॥ आस्तांममाद्यगमनंकालेनातिचिरेणहि ॥ मयास्यपार्श्वंगंतव्यंनियतेरेषनिश्चयः ॥ ३९ ॥ इतिसंचिंत्यचूडालाप्रविश्यांतःपुरंपुनः ॥ सुष्वापशयनेकांतानभसीवेंदवीकला ॥ १४० ॥ केनचित्कारणेनासौगतःसंप्रतिभूपतिः ॥ इतिपौरजनंसर्वमाश्वास्यातिष्ठदंगना ॥ ४१ ॥ राज्यंररक्षभर्तुस्तत्क्रमेणसमदर्शनी ॥ जगामाथदिनंपक्षोमासःसंवत्सरस्तथा ॥ ४२ ॥ बहुनात्रकिमुक्तेनवर्षाण्यष्टादशांगना ॥ चूडालोवाससदनेवनंगतेशिखिध्वजे ॥ ४३ ॥ भर्तुःसमीपगमनेममकालोऽयमित्यथ ॥ संचिंत्यमंदरप्रांतंगंतुंबुद्धिंचकारसा ॥ ४४ ॥

अखंडितमशेषंचिंतयामास ॥ ३७ ॥ ३८ ॥ ३९ ॥ १४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥

॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥ १५० ॥ ५१ ॥ ५२ ॥ भर्तेति ॥ कषायपाकेनकषायारागादयःतेषांपाकोनिषिद्धवर्जनेनवि हितेप्रवृत्तिःतेन ॥ ५३ ॥ इतीति ॥ द्विजदारकःद्विजपुत्रकःईषद्ध्यानात्अल्पादेवध्यानात्अन्यत्वंरूपांतरम् ॥ ५४ ॥ ददर्शेतिश्लोकद्व



चचालांतःपुराद्रात्रौततारनभसःपथम् ॥ जगामवातस्कंधेनप्रापमंदरकंदरम् ॥ ४५ ॥ अदृश्यैवनभस्थैवप्रविवेशवनांतरम् ॥ नृपंयोगेनबुबुधेदेहांतरमिवास्थितम् ॥ ४६ ॥ हारकेयूरकटककुंडलादिविवर्जितम् ॥ कृशांगंकृष्णवर्णंचपतिंजर्जरतांगतम् ॥ ४७ ॥ तमालोक्यानवद्यांगीचूडालापीवरस्तनी ॥ किंचिज्जातविषादैवमुवाचात्मनिचेतसा ॥ ४८ ॥ अहोनुविषमंमौर्ख्यंसर्वशास्त्रार्थदर्शिनः ॥ एवंविधाःसमायांतिदुर्दशायत्प्रसादतः ॥ ४९ ॥ तदवश्यमिहाद्यैवनाथंविदितवेद्यताम् ॥ नयाम्येनंनसंदेहोभोगमोक्षश्रियंतथा ॥ ५० ॥ इदंरूपंपरित्यज्य रूपेणान्येनकेनचित् ॥ सकाशमस्यगच्छामिबोधंदातुमनुत्तमम् ॥ ५१ ॥ बालेयंममकांतेतिमदुक्तंनकरिष्यति ॥ तस्मात्तापसवेषेणबोधयामिपतिंक्षणात् ॥ ५२ ॥ भर्ताकषायपाकेनपरिपक्कमतिःस्थितः ॥ चेतस्यस्याद्यविमलेस्वतत्त्वंप्रतिबिंबति ॥ ५३ ॥ इतिसंचिंत्यचूडालाबभूवद्विजदारकः ॥ ईषद्ध्यानाद्गतान्यत्वंभर्तुरग्रेपपातह ॥ ५४ ॥ ददर्शद्विजपुत्रंतंपुरोयातंशिखिध्वजः ॥ द्रवत्कनकगौरांगंमुक्ताहारविभूषणम् ॥ ५५ ॥



यंवाक्यम् ॥ किष्कुमात्रोपरिस्थितंभूमिंमुक्त्वाहस्तमात्राद्उपरिवर्तमानम् ॥ ५५ ॥

॥ ५६ ॥ ५७ ॥ ५८ ॥ ५९ ॥ १६० ॥ ६१ ॥ ६२ ॥ शांतेनेति ॥ आराद्दूरादेवउन्मुक्तकल्पनंयथातथाशांतेनमनसानिर्वाणार्थंउदारंमहत्तपः संभृतवानसिकच्चित् ॥ ६३ ॥ असिधारेति ॥ असिधारासमंअसिधाराव्रततुल्यम् । तल्लक्षणंतु । युवायुवत्यासार्धंयन्मुग्धभर्तृवदाचरेत् ।

शुक्लयज्ञोपवीतांगंशुक्लांबरयुगावृतम् ॥ भूमावलग्नचरणंकिष्कुमात्रोपरिस्थितम् ॥ ५६ ॥ तमालोक्य द्विजसुतंसमुत्तस्थौशिखिध्वजः ॥ देवपुत्रागमधियासंपरित्यक्तपादुकः ॥ ५७ ॥ देवपुत्रनमस्कारइद मासनमास्यताम् ॥ इत्यस्यदर्शयामासपाणिनापत्रविष्टरम् ॥ ५८ ॥ हेराजर्षेनमस्तुभ्यमित्युक्त्वास उपाविशत ॥ तदर्पितांपुष्पवृष्टिंगृह्णन्नुपविवेशह ॥ ५९ ॥ शिखिध्वजउवाच ॥ देवपुत्रमहाभागकु तआगमनंकृतम् ॥ दिवसंसफलंमन्येयत्त्वामद्यास्मिदृष्टवान् ॥ १६० ॥ इत्युक्त्वापाद्यमर्घ्यंचमाला पुष्पाणिचानघ ॥ शिखिध्वजस्तदिष्टायैदेवतायैददौक्रमात् ॥ ६१ ॥ चूडालोवाच ॥ पेशलेनानु रूपेणप्रश्रयेणामुनानघ ॥ मन्येऽहंनूनमत्यंतंचिरजीवीभविष्यसि ॥ ६२ ॥ शांतेनमनसोदारमारा दुन्मुक्तकल्पनम् ॥ निर्वाणार्थंतपःसाधोकच्चित्संभृतवानसि ॥ ६३ ॥ असिधारासमंसौम्यशांतव्रत मिदंतव ॥ स्फीतंयद्राज्यमुत्सृज्यमहावननिषेवणम् ॥ ६४ ॥ शिखिध्वजउवाच ॥ जानासिभगव न्सर्वंदेवस्त्वंकोऽत्रविस्मयः ॥ श्रियैवसर्वोत्तमयाज्ञायसेचिह्नभूतया ॥ ६५ ॥ तत्कस्त्वंकस्यपुत्रस्त्वंकि मायातोऽस्यनुग्रहात् ॥ एवंमेसंशयंछिंधिविमलेंदुसमानन ॥ ६६ ॥

अंतर्निवृत्तसंगस्तदसिधाराव्रतंविदुरिति तत्साद्दृश्यंचसंनिहितायामपिराज्यलक्ष्म्यांभोगसामर्थ्येऽपिभोगत्यागात् ॥ ६४ ॥ ६५ ॥ ६६ ॥

चूडालोवाच ॥ राजन्मेशृणुवक्ष्यामियथापृष्टमखंडितम् ॥ कोनामपरिपृच्छंतंविनीतंवंचयेत्पुमान्
॥ ६७ ॥ अस्त्यस्मिन्जगतःकोशेशुद्धात्मानारदोमुनिः ॥ पुण्यलक्ष्म्यामुखेकांतेकर्पूरतिलकोपमः
॥ ६८ ॥ सकदाचिन्मुनिर्देवोगुहायांध्यानमास्थितः ॥ तत्रहेमतटेगंगावहत्युरुतरंगिणी ॥ ६९ ॥ ए
कदानारदमुनिर्ध्यानांतेसरितस्तटे ॥ ध्वनद्वलयमश्रौषील्लीलाकलकलारवम् ॥ १७० ॥ किमेतदित्य
सौकिंचित्कौतूहलमवाप्तवान् ॥ हेलयालोकयन्नद्यामपश्यल्ललनागणम् ॥ ७१ ॥ रंभातिलोत्तमाप्रायंनि
तांतंजललीलया ॥ क्रीडंतंत्यक्तवसनंदेशेपुरुषवर्जिते ॥ ७२ ॥ सर्वत्रदृष्टसर्वांगंविश्वरूपमिवस्थितम् ॥
प्रतिबिंबितसर्वांगमन्योन्यादर्शतांगतम् ॥ ७३ ॥ स्त्रैणमालोक्यतत्कांतंसहसैवमनोमुनेः ॥ अनाश्रि
तविवेकंतद्बभूवानंदितंस्फुरन् ॥ ७४ ॥ आनंदवलितेचित्तेक्षुब्धेप्राणानिलेस्थिते ॥ बभूवतस्यतुष्टस्य
मदनस्खलितंतदा ॥ ७५ ॥ शिखिध्वजउवाच ॥ तादृशोऽपिबहुज्ञोऽपिजीवन्मुक्तोऽप्यसौमुनिः ॥
कथमेवंविधांब्रूहिप्राप्तोमदनवश्यताम् ॥ ७६ ॥ चूडालोवाच ॥ स्वरूपेनिर्मलेसत्येनिमेषमपिविस्मृ
ते ॥ दृश्यमुल्लासमायातिप्रावृषीवपयोधरः ॥ ७७ ॥ अनारतानुसंधानादप्युन्मेषमविस्मृते ॥ स्वरूपे
नोल्लसत्येषचितिदृश्यपिशाचकः ॥ ७८ ॥



स्वरूपेनिमेषमात्रमपिविस्मृतेसतिदृश्यंजगदुल्लासंप्रादुर्भावमाप्नोति ॥ ७७ ॥ अनारतेति ॥ चितिचिन्मात्रस्वभावेस्वरूपेऽनारतानुसंधा

नाद्धेतोरुन्मेषमात्रमप्यविस्मृतेसत्येवदृश्यरूपपिशाचकएषनोल्लसतिनस्फुरति ॥ ७८ ॥ सुखेति ॥ जीवस्यसुखदुःखकलास्पंदःसुखदुःखले शस्फुरणमेवबंधः तदभावःसुखदुःखकलास्पंदाभावएवमोक्षःस्यात् इत्येवंद्वेधाद्वयोर्बंधमोक्षप्रकारयोःव्यवस्थितिर्निष्कर्षःद्वेधेतिषष्ठीद्विवच नांतम् ॥ ७९ ॥ शुद्धेनेति ॥ स्वात्मज्ञानमयात्मनास्वस्वरूपज्ञानादभिन्नेनशुद्धेनबोध्यबोधेनबोध्यस्यज्ञेयस्यपरतत्त्वस्यबोधेनस्वरूपाभिन्न परब्रह्मानुभवेनसुखदुःखादिकंनास्तीतिज्ञातेसतिज्ञःज्ञानीसौम्यतांजीवन्मुक्ततांयाति ॥ १८० ॥ सर्वमिति ॥ सर्वमेवजगत्चिदाकाशरूपं

सुखदुःखकलास्पंदोबंधोजीवस्यनेतरः ॥ तदभावोहिमोक्षःस्यादितिद्वेधाव्यवस्थितिः ॥ ७९ ॥ शुद्धे नबोध्यबोधेनस्वात्मज्ञानमयात्मना ॥ सुखदुःखादिनास्तीतिज्ञातेज्ञोयातिसौम्यताम् ॥ १८० ॥ सर्व मेवचिदाकाशंब्रह्मेतिघननिश्चये ॥ स्थितिंयातेसमंयातिजीवोनिस्नेहदीपवत् ॥ ८१ ॥ आत्मस्वभा ववशतोजातंजगदिदंमहत् ॥ स्थितिंवासनयाभ्येत्यधर्माधर्मवशेस्थितम् ॥ ८२ ॥ वासनांशमपानी यधर्माधर्मैर्नगृह्यते ॥ ततोनजायतेजंतुरितिनोदर्शनंमुने ॥ ८३ ॥ शिखिध्वजउवाच ॥ अत्युदारंम हाश्चर्यंवक्षित्वंवदतांवर ॥ अनुभूतिमुपारूढंरूढंचपरमार्थवत् ॥ ८४ ॥ तद्वाक्यविभवेनाद्यश्रुतेनाने नसुंदर ॥ पीतेनेवामृतेनाहमंतर्यातोऽस्मिशीतताम् ॥ ८५ ॥ तत्समासेनतांतावदात्मोत्पत्तिंवदाशु मे ॥ ततःश्रोष्यामियत्नेनज्ञानगर्भांगिरंतव ॥ ८६ ॥

ब्रह्मैवेतिघननिश्चयेस्थितिंयातेसतिजीवभावःशमंयाति ॥ ८१ ॥ आत्मेति ॥ इदंजगदात्मस्वरूपंजातंवासनयास्थितिमभ्येत्यधर्माधर्मवशे कर्मपारतंत्र्येस्थितम् ॥ ८२ ॥ वासनामिति ॥ अंतःकरणाद्वासनांशमपानीयधर्माधर्मैर्नगृह्यतेनबद्ध्यतेततःकर्मबंधाभावाज्जंतुर्नजायते इतिएवंविधंनोऽस्माकंदर्शनंसिद्धांतः ॥ ८३ ॥ ८४ ॥ ८५ ॥ ८६ ॥

॥ ८७ ॥ ततइतिश्लोकद्वयंवाक्यम् ॥ विवेकविपुलालाने आलानंगजवंधनस्तंभः शुद्धबुद्धिवरत्रयावरत्राचर्ममयीरज्जुः ॥ ८८ ॥
॥ ८९ ॥ १९० ॥ ९१ ॥ ९२ ॥ साधोइतिश्लोकद्वयंवाक्यम् ॥ चत्वारोवेदाःममसुहृदइत्यनेनवेदार्थतत्त्वज्ञानंसूचयति गायत्री





तेनपद्मजपुत्रेणमुनिनानारदेनतत् ॥ क्वकृतंवीर्यमार्येणकथयाद्ययथास्थितम् ॥ ८७ ॥ चूडालोवाच ॥
ततोनिबध्नतातेनमनोमत्तमतंगजम् ॥ विवेकविपुलालानेशुद्धबुद्धिवरत्रया ॥ ८८ ॥ मुनिनापार्श्वगे
कुंभेस्फाटिकेवीर्यमर्पितम् ॥ संकल्पितेनक्षीरेणसकुंभस्तेनपूरितः ॥ ८९ ॥ अवर्धततोमासाद्गिरि
गर्भादिवोडुराट् ॥ परिपूर्णसमस्तांगःकुंभाद्गर्भोविनिर्ययौ ॥ १९० ॥ सर्वसंस्कारसंपन्नेसतस्मिन्नारदो
मुनिः ॥ भांडाद्भांडइवाशेषंविद्याधनमयोजयत् ॥ ९१ ॥ अथैनंपुत्रमादायजगामब्रह्मणोऽतिकम् ॥
पौत्रंतंभगवान्वेधाश्चकारज्ञानपारगम् ॥ ९२ ॥ साधोसोऽयमहंनामकुंभनामास्मिकुंभजः ॥ चत्वा
रःसुहृदोवेदाममलीलाविवासिनः ॥ ९३ ॥ मातृष्वसामेगायत्रीमाताममसरस्वती ॥ यथाकाममशे
षेणजगंतिविचराम्यहम् ॥ ९४ ॥ शिखिध्वजउवाच ॥ अद्यातिष्ठाम्यहंसाधोधन्यानांधुरिधर्मतः ॥
अमृतस्पंदिवचसायत्त्वयास्मिसमागतः ॥ ९५ ॥ नकेचनतथाभावाश्चेतःशीतलयंतिमे ॥ राज्यला
भादयोऽप्येतेयथासाधुसमागमः ॥ ९६ ॥



मेमातृष्वसामातासरस्वतीपोषयित्रीतिकृत्वातस्याःस्वसाभगिनीगायत्रीत्यनेनचसरस्वतीप्रसादलब्धंसार्वज्ञंसूचयतिकुंभवाक्यम् ॥ ९३ ॥
॥ ९४ ॥ ९५ ॥ ९६ ॥

॥ ९७ ॥ ९८ ॥ ९९ ॥ २०० ॥ ज्ञानमिति ॥ ज्ञानंज्ञानसाधनंकालातिवाहनायकालहरणरूपायविनोदायैवक्रियातपःस्वाध्यायादि
रूपाउदिता ॥ १ ॥ अलब्धेति ॥ अलब्धज्ञानदृष्टीनांअनात्मविदांक्रियैवपरायणंपरागतिःयतोवासनामात्रसारत्वात् प्रकृष्टवासनत्वाद्धे
तोरज्ञस्यैवक्रियाःसफलानतुनिर्वासनस्यज्ञस्येत्यर्थः ॥ २ ॥ ऋत्वंतरइति ॥ पूर्वंप्राक्तनंआर्तवमृतौभवंकुसुमफलादिकंवस्तुऋत्वंतरेपूर्वर्त्वंत

चूडालोवाच ॥ आस्तामेषाकथातावत्सर्वंतेकथितंमया ॥ त्वंमेकथयहेसाधोकस्त्वमद्रौकरो
षिकिम् ॥ ९७ ॥ शिखिध्वजउवाच ॥ देवपुत्रोऽसिजानासिपृष्टश्चेद्वच्म्यहंशृणु ॥ संसारभ
यभीतत्वान्निवसामिवनांतरे ॥ ९८ ॥ शिखिध्वजोऽहंभूपालस्त्यक्त्वाराज्यमिहस्थितः ॥ भृ
शंभीतोऽस्मितत्त्वज्ञसंसृतौजन्मनःपुनः ॥ ९९ ॥ इमामखंडितांसम्यक्क्रियांसंपादयन्नपि ॥ दुः
खाद्गच्छामिदुःखौघममृतंमेविषंस्थितम् ॥ २०० ॥ चूडालोवाच ॥ ज्ञानंहिपरमंश्रेयःकैवल्यंतेन
वेत्त्यलम् ॥ कालातिवाहनायैवविनोदायक्रियोदिता ॥ १ ॥ अलब्धज्ञानदृष्टीनांक्रियामृतपराय
णम् ॥ वासनामात्रसारत्वादज्ञस्यसफलाःक्रियाः ॥ सर्वाएवाफलाज्ञस्यवासनामात्रसंक्षयात्
॥ २ ॥ ऋत्वंतरेयथायातिविलयंपूर्वमार्तवम् ॥ तथैववासनानाशेनाशमेतिक्रियाफलम् ॥ ३ ॥
नस्वभावेनफलतियथाशरलताफलम् ॥ क्रियानिर्वासनामुत्रफलंफलतिनोतथा ॥ ४ ॥

रापगमेनान्यस्मिन्नृतौयथाविलयंयातितथैववासनानांनाशेसतिक्रियाफलमपिनाशमेतिवासनाहेतुत्वात्क्रियाफलस्य ॥ ३ ॥ एतदेवोपपाद
यन्नाह ॥ नेति ॥ शरलताशराख्यतृणस्यस्तंबःसायथास्वभावेनैववस्तुस्वभावेनैवफलंनफलतिकुसुममात्रपर्यवसितत्वात् तथानिर्वासनाअ

पिक्रियाअमुत्रजन्मांतरेफलंनोफलति तस्याअपितादृशस्वभावत्वात् ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ कथमिति ॥ पारावारविदां





यस्यमौर्ख्यंक्षयंयातिसर्वंब्रह्मेतिभावनात् ॥ नोदेतिवासनातस्यप्राज्ञस्येवांबुधिर्मरौ ॥ ५ ॥ वासना मात्रसंत्यागाज्जरामरणवर्जितम् ॥ पदंभवतिजीवोंऽतर्भूयोजन्मविवर्जितम् ॥ ६ ॥ सवासनंमनो ज्ञानंज्ञेयंनिर्वासनंमनः ॥ ज्ञानेनज्ञेयतामेत्यपुनर्जीवोनजायते ॥ ७ ॥ ज्ञानमेवपरंश्रेयइतिब्रह्मादयो ऽपिते ॥ संसारतारणंज्ञानंत्वंकिमज्ञानवांस्थितः ॥ ८ ॥ कोऽहंकथमिदंजातंकथंशाम्यतिवेतिभो ॥ राजन्नावेक्षसेकस्मात्किमज्ञइवतिष्ठसि ॥ ९ ॥ कथंबंधःकथंमोक्षइतिप्रश्नानुदाहरन् ॥ पारावारवि विदांपादान्कस्माद्राजन्नसेवसे ॥ २१० ॥ साधूनांसमदृष्टीनांपरिप्रश्नेनसेवया ॥ संगमेनचसाधु क्तिर्लभ्यतेमुच्यतेयया ॥ ११ ॥ वसिष्ठउवाच ॥ कांतयादेवरूपिण्यातयैवंप्रतिबोधितः ॥ अश्रु पूर्णमुखोवाक्यंशिखिध्वजउवाचह ॥ १२ ॥ शिखिध्वजउवाच ॥ अहोनुबोधितोऽस्म्यद्यचिरात्सुर सुतत्वया ॥ मौर्ख्यादार्यसमासंगंमुक्त्वाहमवसंवने ॥ १३ ॥ अहोनुमेक्षयंयातंमन्येपापमशेषतः ॥ सत्वंमेवनमागत्यसंप्रबोधयसीहमाम् ॥ १४ ॥ गुरुस्त्वंमेपितात्वंमेमित्रत्वंमेवरानन ॥ शिष्योन मस्करोम्यद्यपादौतवकृपांकुरु ॥ १५ ॥ यद्बुदारतमंवेत्सियस्मिन्ज्ञातेनशोच्यते ॥ भवामिनिर्वृतोये नतद्ब्रह्मोपदिशाशुमे ॥ १६ ॥



संसारसागरस्यपारावारंचब्रह्मैवतद्विदांपारावारशब्दाभ्यांअंतादीलक्ष्येते ॥ २१० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥

पुनःकुंभवाक्यम् ॥ १७ ॥ अनुपादेयेति ॥ लीलयाअनादरेणपृष्टस्यअनुपादेयवाक्यस्य अनाप्तस्यकुवर्वाचस्तमसिअक्षसंविदःचक्षुरिंद्रियवृत्तयइवअफलतांव्रजंति ॥ १८ ॥ यदिति ॥ त्वंयद्वक्षिब्रूषेतच्छ्रुतेर्विधिरिववैदिकंकार्यमिवअविचारितमेवमयास्वनुष्ठेयंएतन्मयास

चूडालोवाच ॥ यद्युपादेयवाक्योऽहंराजर्षेतद्वदामिते ॥ अन्यथानेकधाप्रोक्तमपिस्याद्धिफलंवचः ॥
॥ १७ ॥ अनुपादेयवाक्यस्यवक्तुःपृष्टस्यलीलया ॥ व्रजंत्यफलतांवाचस्तमसीवाक्षसंविदः ॥ १८ ॥
शिखिध्वजउवाच ॥ यद्वक्षितदनुष्ठेयंमयाविधिरिवश्रुतेः ॥ अविचारितमेवाशुसत्यमेतन्मयोदितम्
॥ १९ ॥ चूडालोवाच ॥ यथाबालःपितुर्वाक्यंमुक्तिहेतूपपादनम् ॥ आदत्तेहितथैवत्वंगृहाणवचनंमम
॥२२०॥ प्रथमंशृणुभोराजन्वृत्तांतंकंचिदद्भुतम् ॥ पश्चात्तेवर्णयिष्यामिप्रकृतार्थंव्यवस्थितिम् ॥ २१ ॥
अस्तिकश्चित्पुमाञ्छ्रीमान्स्थानंसर्वगुणाश्रयाम् ॥ सर्वशास्त्रार्थतत्त्वज्ञोनतुजानात्यजंपदम् ॥ २२ ॥
अनंतयत्नसंसाध्येसचिंतामणिसाधने ॥ प्रवृत्तोवाडवोवह्निरब्धिसंशोषणेयथा ॥ २३ ॥ तस्ययत्नेनमहताकालेनाध्यवसायिनः ॥ कालस्यवशतस्तस्यमुनेर्निर्बंधशालिनः ॥ २४ ॥ सिद्धिश्चिंतामणिःकिंवानसिद्ध्यत्युद्यतात्मनाम् ॥ मणिमग्रेस्थितंप्राप्तंहस्तप्राप्तंददर्शसः ॥ २५ ॥ मेरोरुदयशृंगस्थोमुनिरिंदुमिवोदितम् ॥ बभूवमणीराजेंद्रनतुनिश्चयवानसौ ॥ २६ ॥

त्यमेवोदितम् ॥ १९ ॥ पुनःकुंभः ॥ यथेति ॥ बालोयथापितुर्वाक्यंमुक्तिहेतूपपादनंत्यक्तयुक्तिसमर्थनमेवादत्तेस्वीकरोति तथैवत्वमपिममवचोगृहाण ॥ २२० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥

॥ २७ ॥ अयमिति सप्तभिः श्लोकैर्वाक्यम् ॥ अयंतुपुरोवर्तीमणिर्वाअयंदृश्यमानोमणिर्नभवतिवा मणिश्चेन्मणिर्भवतिचेत्तर्हिसचिंतामणिर्नभवेत् अतःसंदेहदशायांपश्याम्येवनस्पृशामिस्पर्शतःकदाचिद्व्रजेदपि ॥ २८ ॥ मणींद्रश्चिंतामणिरेतावतैवकालेननसिद्ध्यतिकिलकिंतर्हिजीवितांतेनप्राणसंपादितेनमहतायत्नेनसिद्ध्यतीत्यागमानांमणिसाधनकल्पानांक्रमः ॥ २९ ॥ अहंतुकृपणःसन्कुणितेनसंकुचितेनाक्षणालोलालातलतोपमं अलातमुल्मुकंतच्छाखासदृशंरत्नालोकंद्विचंद्रत्वमिवभ्रमादेवपश्यामि ॥ २३० ॥ एतावतीस्फीताभूयिष्ठाभाग्यसंप





राज्ञिद्रागितिसंप्राप्तेसुदीनइवपामरः ॥ इदंसचिंतयामासमनसास्मयशालिना ॥ २७ ॥ अयं मणिर्मणिर्नाथमणिश्चेत्तद्भवेन्नसः ॥ पश्यामिनस्पृशाम्येनंकदाचित्स्पर्शतोव्रजेत् ॥ २८ ॥ नैतावतैवकालेनमणींद्रःकिलसिद्ध्यति ॥ यत्नेनजीवितांतेनसिद्ध्यतीत्यागमक्रमः ॥ २९ ॥ कृपणःकुणितेनाक्ष्णालोलालातलतोपमम् ॥ रत्नालोकंप्रपश्यामिद्विचंद्रत्वमिवभ्रमात् ॥ २३० ॥ कुत एतावतीस्फीताभाग्यसंपत्समागता ॥ अधुनैवयदाप्नोमिमणींद्रंसर्वसिद्धिदम् ॥ ३१ ॥ केचिदेवमहांतस्तेमहाभाग्याभवंतिहि ॥ येषामल्पेनकालेनभवंत्यभिमुखाःश्रियः ॥ ३२ ॥ अहमल्पतपाःसाधुर्वराकोमानुषःकिल ॥ सिद्धयःकथमायांतिमामभाग्यैकभाजनम् ॥ ३३ ॥ एवंविकल्पसंकल्पैश्चिरमज्ञःपरामृशन् ॥ नमणिग्रहणेयत्नमकरोन्मौर्ख्यमोहितः ॥ ३४ ॥

न्ममकुतआगतातस्याभाग्यसंपदोहेतोरधुनैवसर्वसिद्धिदंमणींद्रंप्राप्नोमि ॥ ३१ ॥ येषामल्पेनैवकालेनश्रियोऽभिमुखाभवंति तेकेचिदेवमहांतोमहाभाग्याभवंति ॥ ३२ ॥ अहंपुनरल्पतपाःसाधुवराकःसाधूनांशोच्योमानुषएवअतोमामभाग्यैकभाजनंसिद्धयःकथमायांति ॥ ३३ ॥ एवंविकल्पसंकल्पैःविकल्पैःसंकल्पैश्चचिरंपरामृशन्मौर्ख्यमोहितोज्ञानपरवशोमणिग्रहणयत्नंनाकरोत् ॥ ३४ ॥

॥ ३५ ॥ ३६ ॥ ददर्शेति ॥ अथहसद्भिर्वंचकैः सिद्धैरलक्षितैरेवपुरस्कृतंकचद्रूपंस्फुरद्रूपंअखंडितंकाचखंडंददर्श ॥ ३७ ॥ अयमिति ॥ सम्मूढः तस्मिन्काचखंडेअयंचिंतामणिरितिवस्तुतांपरमार्थचिंतामणित्वंबुबुधे । अज्ञोहिमोहितःसन्मृदंमृत्तिकाविशेषंहेमवत्पश्यति ॥ ३८ ॥

इतितस्मिंस्स्थितेयातोमणिरुड्डीयसिद्धयः ॥ त्यजंतिह्यवमंतारंशराग्गुणमिवोज्झिताः ॥ ३५ ॥ पुमान्भूयःक्रियायत्नंचक्रेरत्नेंद्रसाधने ॥ नोद्विजंतेस्वकार्येषुजनाअध्यवसायिनः ॥ ३६ ॥ ददर्शाथकचद्रूपंकाचखंडमखंडितम् ॥ हसद्भिर्वंचकैःसिद्धैःपुरस्कृतमलक्षितैः ॥ ३७ ॥ अयंचिंतामणिरितिमूढस्तस्मिन्सवस्तुताम् ॥ बुबुधेमोहितोह्यज्ञोमृदंहेमेवपश्यति ॥ ३८ ॥ ततस्तंमणिमादायप्राक्तनींसाश्रियंजहौ ॥ सर्वंचिंतामणेरस्मात्प्राप्यतेकिंधनैरिति ॥ ३९ ॥ देशोऽयमसुखोरूक्षोजनैःपापिभिरावृतः ॥ दूरंगत्वायथाकामंसुखंतिष्ठामिसंपदा ॥ २४० ॥ इत्यादायमणिंमूढःशून्यकाननमाययौ ॥ तत्रैषकाचमणिनामहतीमापदंगतः ॥ ४१ ॥ इतिश्रीयोगवासिष्ठसारेचिंतामण्युपाख्यानंनामप्रकरणम् ॥ ॥ ॥ चूडालोवाच ॥ अथेममपरंरम्यंवृत्तांतंशृणुभूमिप ॥ परंप्रबोधनंबुद्धेःसाधोसदृशमात्मनः ॥ १ ॥ अस्तिविंध्यवनेहस्तीमहायूथपयूथपः ॥ वज्रास्थिविषमौदीर्घौतस्यास्तांदशनौसितौ ॥ २ ॥

॥ ३९ ॥ २४० ॥ ४१ ॥ इतिश्रीयोगवासिष्ठविवरणेचिंतामण्युपाख्यानंनामप्रकरणम् ॥ १ ॥ ॥ अस्तीति ॥ महायूथपयूथपो महायूथपानामपियूथपःश्रेष्ठः वज्रास्थिविषमौवज्रादप्यस्थ्नोऽपिकठिनौ । वज्राग्रविषमौइतिपाठे वज्रायुधकोटिरिवविषमावित्यर्थः ॥ २ ॥

सइति ॥ सहस्तीहस्तिपेनकर्त्रालोहजालेनशृंखलयासाधनेनअभितोबद्धोऽभूत् । इत्थंनिबद्धश्चक्रूरशृंखलयाअर्दितःसन् यंत्रणांपारतंत्र्य मापेतिवाक्यभेदान्निबद्धइतिनपौनरुक्त्यम् ॥ ३ ॥ ४ ॥ तस्येति ॥ तद्बंधनिश्चयःतस्यहस्तिनोबंधेनिश्चयोयस्यसरिपुर्हस्तिपकःतालतरोः





सबद्धोलोहजालेनहस्तिपेनकिलाभितः ॥ निबद्धोयंत्रणामापक्रूरशृंखलयार्दितः ॥ ३ ॥ खेदा न्निगडनिर्भेदंचकारसमतंगजः ॥ दंताभ्यांयत्नतस्ताभ्यांमुहूर्तद्वितयेनतु ॥ ४ ॥ तस्यतं निगडोच्छेदंदृष्ट्वातद्बंधनिश्चयः ॥ पपाताथगजेंद्रस्यमूर्ध्नितालतरोरिपुः ॥ ५ ॥ सोऽपतद्दु र्मतिर्भूमावप्राप्यकरिणःशिरः ॥ तंपुरःपतितंदृष्ट्वामहेभःकरुणांययौ ॥ ६ ॥ केऽपिस्फारगुणाः संतःसंतितिर्यग्गतावपि ॥ पतितंदलयामीतिकिंनाममपौरुषम् ॥ ७ ॥ वारणोऽपीतिकलय न्नजघानसतंरिपुम् ॥ केवलंतंपरित्यज्यप्रदेशंसययौगजः ॥ ८ ॥ गतेगजेसमुत्तस्थौहस्तिपःस्व स्थदेहधीः ॥ सोऽन्वियेषगजंयत्नाद्दुल्मुकांतरितंवने ॥ चिरेणालभ्यतेभेंद्रंकस्मिंश्चित्काननेस्थि तम् ॥ ९ ॥ सखातवलयंचक्रेहस्तिपःकाननेऽभितः ॥ उपर्यस्थगयज्जीर्णलतौघेनसतंशठः ॥ १० ॥ दिनैःकतिपयैरेववारणोविहरन्वने ॥ तस्मिन्निपतितःखातेशुष्काब्धाविवपर्वतः ॥ ११ ॥ इति भूयोदृढंबद्धस्तेनहस्तिपकेनसः ॥ तिष्ठत्यद्यापिदुःखेनस्वसद्मनियथाबलिः ॥ १२ ॥



सकाशाद्गजेंद्रस्यमूर्ध्निपपात ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ सइति ॥ खातवलयंश्वभ्रवलयम् । अस्थगयदावृणोत् ॥ १० ॥ ॥ ११ ॥ १२ ॥

॥ १३ ॥ मौर्ख्यादिति ॥ नरोमौर्ख्यादज्ञानाद्धेतोःआगामिनंकालंवर्तमानैःक्रियाक्रमैःउपायभेदैरशोधयन्निरुपायमकुर्वन्दुःखंयाति विं ध्यगजोयथेत्यन्वयः ॥ १४ ॥ इतिश्रीयोगवासिष्ठविवरणेगजेंद्रोपाख्यानंनामप्रकरणम् ॥ इदानींशिखिध्वजःकथाद्वयस्यतात्पर्यंपृच्छ ति ॥ मणीति ॥ मणिसाधकविंध्येभवंधनान्मणिसाधकाद्विंध्येभबंधनाच्चेत्यर्थः ॥ १ ॥ योऽसावितिसार्धश्लोकद्वयंवाक्यम् ॥ यः पुमान्शास्त्रकुशलःशास्त्रज्ञानेप्रवीणःतत्त्वज्ञानेत्वपंडितःअप्रगल्भःसपुमान्रत्नसंसाधकःप्रोक्तः शास्त्रोक्तविधिनारत्नसाधनाल्लब्धेऽपिरत्नेतत्त्व

अहनत्पुष्करेणासौयद्यग्रेपतितंरिपुम् ॥ तन्नालप्स्यततद्दुःखंगजःखातनिबंधनम् ॥ १३ ॥ मौ र्ख्यादागामिनंकालंवर्तमानक्रियाक्रमैः ॥ अशोधयन्नरोदुःखंयातिविंध्यगजोयथा ॥ १४ ॥ इतिश्रीयोगवासिष्ठसारेगजेंद्रोपाख्यानंनामप्रकरणम् ॥ शिखिध्वजउवाच ॥ मणिसाधक विंध्येभवंधनादमरात्मज ॥ सूचितंयत्कथाजालंपुनर्मेप्रकटीकुरु ॥ १ ॥ चूडालोवाच ॥ योऽसौ शास्त्रार्थकुशलस्तत्त्वज्ञानेत्वपंडितः ॥ रत्नसंसाधकःप्रोक्तःसत्वमेवमहीपते ॥ २ ॥ तज्ज्ञोभव सिशास्त्रेषुतत्त्वज्ञानेत्वशिक्षितः ॥ ३ ॥ विद्धिचिंतामणिंसाधोसर्वत्यागमकृत्रिमम् ॥ तंमतं सर्वदुःखानांत्वंसाधयितुमुद्यतः ॥ ४ ॥ संत्यक्तंभवताराज्यंसदारधनबांधवम् ॥ स्वदेशस्या तिदूरस्थमागतोऽसिममाश्रमम् ॥ ५ ॥

निश्चयाभावात् । सचरत्नसंसाधकःपुमांस्त्वमेव ॥ २ ॥ यतस्त्वंशास्त्रेषुतत्त्वज्ञोभवसि तेहृदिविश्रांतिस्तत्त्वनिष्ठाचनास्ति ॥ ३ ॥ कस्त र्हिचिंतामणिरित्यत्राह ॥ विद्धीतिश्लोकद्वयंवाक्यम् ॥ यतोभवताराज्यंसंत्यक्तंयतश्चातिदूरमिममाश्रममागतोऽसि अतस्त्वंसर्वदुः खविनाशकंसर्वत्यागंनामचिंतामणिंसाधयितुमुद्यतइत्यन्वयः ॥ ४ ॥ ५ ॥

कथंतर्हिसचिंतामणिर्मयानलब्धइत्यत्राह ॥ केवलमिति अर्धत्रयंवाक्यम् ॥ यतस्त्वयासर्वसंत्यागेऽहंमतिःकेवलंशेषिताऽभिमानोनत्य क्तइत्यर्थः । ततस्तस्माद्धेतोःसर्वत्यागस्यास्यापूर्णत्वात्तद्विषयोविकल्पस्त्वामावृणोत् । खमाकाशमंबुदइव ॥ ६ ॥ नायमिति श्लोक द्वयंवाक्यम् ॥ अयमिदानींसिद्धःसर्वत्यागःपरमानंदःपरमआनंदोयस्मिन् महानुदयःउद्बोधोयस्मिंस्तादृशःसर्वत्यागोनभवति यतोऽसौप रमानंदहेतुःसर्वत्यागश्चिरसाध्योमहानन्यएवकोऽपीति ॥ ७ ॥ एवंचिंतयाविकल्पेचेतसिवृद्धिंगतेसति तेत्यागः प्रोड्डीयगतः वात्ययावा



केवलंसर्वसंत्यागेशेषिताहंमतिस्त्वया ॥ ततःसर्वपरित्यागोयावन्नाप्नोतिपूर्णताम् ॥ तावत्त्या गविकल्पस्त्वांखमंबुदइवावृणोत् ॥ ६ ॥ नायंसपरमानंदःसर्वत्यागोमहोदयः ॥ कोप्युच्चैर न्यएवासौचिरसाध्योमहानिति ॥ ७ ॥ चिंतयेतिगतेवृद्धिंविकल्पेतवचेतसि ॥ वात्ययेववन स्पंदेत्यागःप्रोड्डीयतेगतः ॥ ८ ॥ सर्वत्यागमहारत्नेगतेकमललोचन ॥ तपःकाचमणिर्दृष्टस्त्व यासंकल्पचक्षुषा ॥ ९ ॥ अमितानंदमुत्सृज्यसुसाध्यंयःप्रवर्तते ॥ मितेवस्तुनिदुःसाध्येस्वा त्महासशठःस्मृतः ॥ १० ॥ चिंतामणिर्मयाप्राप्तइत्यलंबुद्धवानसि ॥ नलब्धवान्भवान्साधो स्फटिकस्यापिखंडिकाम् ॥ ११ ॥ इतियोगवासिष्ठसारेचिंतामणिविवरणंनामप्रकरणम् ॥

तसमूहेनवनस्पंदेकंपेतुवृद्धिंगतेपक्षीयथाप्रोड्डीयगच्छतितद्वत् ॥ ८ ॥ ९ ॥ अमितेति ॥ अमितानंदःसुसाध्यश्चसर्वत्यागः । मितंपरि मितानंदंदुःसाध्यंचवस्तुतः ॥ १० ॥ चिंतेति ॥ तपःकाचमणिंलब्धवान् श्रेयस्तुकिंचिदपिनलब्धवानित्यर्थः ॥ ११ ॥ इतिश्रीयोग वासिष्ठविवरणेचिंतामणिविवरणंनामप्रकरणम् ॥

इदानीं विंध्यहस्तिकथां विवृणोति योऽसावित्यादिना नृपबद्धो यथा बलिरियं तेन ॥ विंध्यहस्तो भवान् मूर्खत्वाद्वैराग्यविवेकौ च त्वदीयौ त
स्य दशनौ श्रृंखलादिबंधभंजकत्वात् ॥ १ ॥ हस्तिपकस्त्वदज्ञानं बंधकत्वाद्दुःखहेतुत्वाच्च ॥ २ ॥ ३ ॥ लोहरज्जुजालमाशापाशजा

चूडालोवाच ॥ योऽसौ विंध्यवने हस्ती सोऽस्मिन्भूमितले भवान् ॥ यौ वैराग्यविवेकौ ते तौ तस्य दशनौ
सितौ ॥ १ ॥ यश्चासौ वारणाक्रांतितत्परो हस्तिपः स्मृतः ॥ त्वदज्ञानं त्वदाक्रांतितत्परं तेऽतिदुःखदम्
॥ २ ॥ अतिशक्तोऽप्यशक्तेन दुःखाद्दुःखं भयाद्भयम् ॥ हस्ती हस्तिपकेनेव राजन्मौर्ख्येण नीयसे ॥ ३ ॥
यल्लोहरज्जुजालेन वारणः परिवेष्टितः ॥ तदाशापाशजालेन भवानपि समावृतः ॥ ४ ॥ आशा हि लोहर
ज्जुभ्यो विषमा विपुला दृढा ॥ कालेन क्षीयते लोहं तृष्णा तु परिवर्धते ॥ ५ ॥ यद्बभंज गजः शत्रोः श्रृंखलाजा
लबंधनम् ॥ तत्तत्याज भवान्भोगान्भूमिं राज्यमकंटकम् ॥ ६ ॥ यत्तु तालतरोर्भ्रष्टो भूमौ हस्तिपकोऽप
तत् ॥ त्वयि त्यजति तद्राज्यमज्ञानं पतितं कृतम् ॥ ७ ॥ यदा विरक्तः पुरुषो भोगाशां त्यक्तुमिच्छति ॥
तदा प्रकंपतेऽज्ञानं छेद्ये वृक्षे पिशाचवत् ॥ ८ ॥ भोगौघे नूनमुन्मुक्ते पतत्यज्ञानसंस्थितिः ॥ यदा विवेकी
पुरुषो भोगान्संत्यज्य तिष्ठति ॥ ९ ॥ तदा पलायतेऽज्ञानं छिन्ने वृक्षे पिशाचवत् ॥ यदा वनं प्रयातस्त्वं त
दाज्ञानं क्षतं त्वया ॥ पतितं संनिहतं सर्वत्यागमहासिना ॥ १० ॥

लं श्रृंखलाभंगस्तु राज्यभोगत्यागः ॥ ४ ॥ ५ ॥ ६ ॥ हस्तिपकस्य तालतरोर्भ्रंशो नाम त्वया राज्ये त्यज्यमाने त्वदज्ञानस्य भ्रंशः पतितं ह
स्तिपकमुपेक्ष्य हस्तिनो वनगमनं नाम तव सर्वत्यागमहासिना निःशेषमज्ञानस्योच्छेदनेनारण्याश्रयणम् ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥

॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ हस्तिपकेनभूयोहस्तिबंधनायवनेखातकल्पनंअज्ञानेनतपोनियमेननियोजनंखातवलयस्यबालतृणलताभिरवगुंठनंचतपोदुःखस्यसज्जनवृत्तिभिरीषदावरणमितितात्पर्यनिष्कर्षः ॥ १५ ॥ १६ ॥ इतिवासिष्ठविवरणेगजवृत्तांतविवरणंनाम



तेनभूयःसमुत्थायस्मृत्वापरिभवंकृतम् ॥ तपःप्रपंचखातेऽस्मिन्गाहनेत्वंनियोजितः ॥ ११ ॥ तदैवाघातयिष्यस्त्वंयद्यज्ञानंतथागतम् ॥ राज्यत्यागविधौतत्त्वांनाहनिष्यत्क्षयंगतम् ॥ १२ ॥ यत्खातवलयस्तेनवैरिणाहस्तिनःकृतः ॥ तत्तेनदुःखमतुलमज्ञानेनतवार्पितम् ॥ १३ ॥ यातस्यपरिवारश्रीर्गजारेर्नृपसत्तम ॥ सात्वदज्ञाननृपतेश्चित्तभूतिर्विसारिणी ॥ १४ ॥ यत्खातवलयोबाललताभिरवगुंठितः ॥ आवृतंतत्तपोदुःखमीषत्सज्जनवृत्तिभिः ॥ १५ ॥ इत्यद्यापितपःखातेदुःखेह्यस्मिन्सुदारुणे ॥ स्थितोऽसिपातालतलेनृपबद्धोयथाबलिः ॥ १६ ॥ इतिश्रीयोगवासिष्ठसारेगजवृत्तांतविवरणंनामप्रकरणम् ॥ चूडालोवाच ॥ यदुक्तंतवशालिन्यातयाविदितवेद्यया ॥ तदाचूडालयाज्ञानंतत्कस्मान्नोररीकृतम् ॥ १ ॥ साहितत्त्वविदांमुख्यायद्यद्वक्तिकरोतिच ॥ तत्सर्वंसत्यमेवांगतदनुष्ठेयमादरात् ॥ २ ॥ अथचेद्वचनंतस्यास्त्वयानानुष्ठितंनृप ॥ एतत्सर्वपरित्यागःकस्मान्ननिपुणीकृतः ॥ ३ ॥





प्रकरणम् ॥ यदुक्तमिति ॥ शालिन्याश्लाघ्यया ॥ १ ॥ २ ॥ अथेति ॥ तस्याश्चूडालायावचनंनानुष्ठितंचेत्तर्हिसत्वयाक्रियमाणःसर्वपरित्यागोऽपिकस्माद्धेतोर्ननिपुणीकृतःनसंपूर्णीकृतः ॥ ३ ॥

॥ ४ ॥ धनमिति ॥ छत्रंराजचिह्नानांअन्येषामुपलक्षणम् । इतिसर्वंएतत्सर्वंतेत्वदीयंनभवति अतःसर्वत्यागःकोनामत्यागःकथंअस्वकी यस्यत्यागःत्यागोनभवतीत्यर्थः ॥ ५ ॥ तर्हिमदीयःकइत्यतआह ॥ तवेति ॥ सर्वस्माद्वस्तुनःअपरित्यक्तःअनपगतउत्तमोरागःइच्छा विषयस्तवास्तितंरागंनिःशेषंपरित्यज्यपरमामशोकतांयासि ॥ ६ ॥ राज्यमिति ॥ सर्वंराज्यंमममदीयंनोचेत्तर्हिशैलवृक्षादिगुल्माद्यंवन

शिखिध्वजउवाच ॥ राज्यंत्यक्तंगृहंत्यक्तंदेशस्त्यक्तस्तथाविधः ॥ दारास्त्यक्ताःसुतास्त्यक्ताःसर्व त्यागोनकिंकृतः ॥ ४ ॥ कुंभउवाच ॥ धनंदारागृहंराज्यंभूमिश्छत्रंचबांधवाः ॥ इतिसर्वंनतेराजन्स र्वत्यागोहिकस्तव ॥ ५ ॥ तवास्त्येवापरित्यक्तःसर्वस्माद्रागउत्तमः ॥ तंपरित्यज्यनिःशेषंपरमांयास्य शोकताम् ॥६॥ शिखिध्वजउवाच ॥ राज्यंचेन्ममनोसर्वंतत्सर्वंवनमेवमे ॥ शैलवृक्षादिगुल्माद्यंतदप्ये तत्त्यजाम्यहम् ॥ ७ ॥ वसिष्ठउवाच ॥ इतिरामवदन्नेवकुंभवाक्येननोदितः ॥ निमेषांतरमात्रेणवशी धीरःशिखिध्वजः ॥ ८ ॥ प्रममार्जवनास्थांतांहृदासदृढनिश्चयः ॥ प्रावृडोघस्तटगतांरजोरेखामि वात्मनः ॥ ९ ॥ शिखिध्वजउवाच ॥ सवृक्षाद्रिवनश्वभ्राद्विपिनादपिवासना ॥ परित्यक्तामयानूनं सर्वत्यागःस्थितोमम ॥ १० ॥ कुंभउवाच ॥ अद्रिस्तटंवनंश्वभ्रंसलिलंपादपाःस्थलम् ॥ इत्यादि तवनोसर्वंसर्वत्यागःकथंतव ॥ ११ ॥

मेवसर्वंमेमदीयंयदस्तितदेतदपित्यजामीत्यन्वयः ॥ ७ ॥ इतीतिश्लोकद्वयंवाक्यम् ॥ आत्मनस्तांवनास्थांवनाभिमानं प्रममार्जेत्य न्वयः ॥ ८ ॥ ९ ॥ १० ॥ अद्रिरितिसार्धश्लोकत्रयंवाक्यम् ॥ पूर्ववद्व्याख्येयम् ॥ ११ ॥

॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ किंनामेति ॥ संकल्पितक्रमंबुद्धिपरिकल्पितोपयोगंभांडोपस्करस्थानसदनाद्यवलंबनं भांडंभाजनंउपस्करंगृहोपकरणंस्थानंनिवासभूःसदनंगृहंइत्यादीनामवलंबनंपरिग्रहइति यदेतत्किंनामवस्तुनकिंचिद्वस्तु दुःखैकहेतुत्वात्



तवास्त्येवापरित्यक्तःसर्वस्माद्रागउत्तमः ॥ शिखिध्वजउवाच ॥ एतच्चेन्ममनोसर्वंतत्सर्वंभाजनादिमे ॥ वापीस्थललोटजयुतस्तमेवाशुत्यजाम्यहम् ॥ १२ ॥ कुंभउवाच ॥ आश्रमोऽपिनतेतस्मिंस्त्यक्तेत्यागोनसर्वगः ॥ तवास्त्येवापरित्यक्तःसर्वस्माद्रागउत्तमः ॥१३॥ शिखिध्वजउवाच॥एतच्चेन्ममनोसर्वंतत्सर्वंभाजनादिमे ॥ चर्मकुड्यकुशूलादितत्तावत्संत्यजाम्यहम् ॥१४॥ वसिष्ठउवाच ॥ इत्युक्त्वोत्थायतत्सर्वमक्षमालाजिनादिकम् ॥ एकत्रैवसमानीयददाहत्यागबुद्धितः ॥ १५ ॥ भांडजातंदहत्यग्नौसहशुष्केंधनेनतत् ॥ केवलाकृतिरस्नेहस्तुष्टिमानाहभूपतिः ॥ १६ ॥ वासनांतत्रसंत्यज्यसर्वत्यागीस्थितोह्यहम् ॥ अहोरुचिरकालेनदेवपुत्रप्रबोधितः ॥ संपन्नःकेवलःशुद्धःसुखेनोद्बोधवानहम् ॥ १७ ॥ किंनामकिलवस्त्वेतद्भवेसंकल्पितक्रमम् ॥ यद्भांडोपस्करस्थानसदनाद्यवलंबनम् ॥ १८ ॥ यावद्यावत्प्रहीयंतेविविधाबंधहेतवः ॥ तावत्तावत्समायातिपरमांनिर्वृतिंमनः ॥ १९ ॥ शाम्यामिपरिनिर्वामिसुखितोऽस्मिजयाम्यहम् ॥ विबंधाःप्रलयंयाताःसर्वत्यागोमयाकृतः ॥ २० ॥



॥ १८ ॥ यदुक्तंवैष्णवे । यावतःकुरुतेजंतुःसंबंधान्मनसःप्रियान् । तावतोऽस्यनिखन्यंतेहृदयेशोकशंकवः इति ॥ १९ ॥ २० ॥

॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ साधोइतिश्लोकद्वयंवाक्यम् ॥ सर्वगताकारंसर्वजगदा

दिगंबरोभवाम्येवदिक्समोऽयमहंस्थितः ॥ देवपुत्रमहात्यागाद्यदन्यद्वदशिष्यते ॥ २१ ॥ कुंभउवाच ॥
सर्वमेवनसंत्यक्तंत्वयाराजन्शिखिध्वज ॥ सर्वत्यागपरानंदेमामुधाभिनयंकुरु ॥२२॥ वसिष्ठउवाच॥
इत्येवंब्रुवतातेनकिंचित्संचिंत्यभूभृता ॥ इदमुक्तंमहाबाहोरामराजीवलोचन ॥ २३ ॥ शिखिध्वजउ
वाच ॥ इंद्रियव्यालसंघातोरक्तमांसमयाकृतिः ॥ शिष्यतेसर्वसंत्यागेदेहोमेदेवतात्मज ॥ २४ ॥ तद्व
त्थायपुनर्देहंभृगुपाताद्यविघ्नतः ॥ विनाशात्मकतांनीत्वासर्वत्यागीभवाम्यहम् ॥ २५ ॥ वसिष्ठउवा
च ॥ इत्युक्त्वादेहमग्रस्थेश्वभ्रेत्यक्तुमसौजवात् ॥ करोतियावदुत्थानंतावत्कुंभोऽभ्युवाचह ॥ २६ ॥ कुं
भउवाच ॥ राजन्किमितिदेहंत्वंनिरागस्कंमहावटे ॥ त्यजस्यज्ञोहिवृषभोरुषितोहंतितर्णकम् ॥ २७ ॥
त्यक्तेनापिशरीरेणकिलतामरसेक्षण ॥ सर्वत्यागोनतेयातिनिष्पत्तिंविषमोहिसः ॥ २८ ॥ येनायंक्षोभ्य
तेदेहोयद्बीजंजन्मकर्मणाम् ॥ तत्संत्यजसिचेत्त्याज्यंतन्महात्यागवान्भवान् ॥२९॥ शिखिध्वजउवा
च ॥ केनायंचाल्यतेदेहःकिंबीजंजन्मकर्मणाम् ॥ कस्मिंस्त्यक्तेपरित्यक्तंसर्वंभवतिसुंदर ॥ ३० ॥ कुंभउ
वाच ॥ साधोसर्वगताकारंजीवनामादिनामकम् ॥ नजडंनाजडंभ्रांतंचित्तंसर्वमवस्थितम् ॥ ३१ ॥ चि
त्तंविद्धिजगज्जालंबंधश्चित्तमुदीर्यते ॥ तस्मिन्साधोपरित्यक्तेसर्वत्यागोभवेदिति ॥ ३२ ॥

कारेणपरिणतंनजडं संक्रांतचैतन्यतयाप्रकाशकत्वान्नाजडंकल्पितत्वेनात्मव्यतिरिक्तत्वात् ॥ ३१ ॥ ३२ ॥

॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ अहमिति ॥ सर्वानर्थैकभाजनंसर्वस्यानर्थरूपस्यसंसारस्यमूलकारणंयोऽयमहमर्थोदयःअहंकारोदयोऽस्तिएतदेवास्यचित्तद्रुमस्यबीजंनिदानंविद्धि ॥ ३९ ॥ एतस्मादिति ॥ प्रथमोद्भिन्नात्प्रथममुद्भूतात् एतस्मादहंकारानुभवाकृतिः अनुभवरूपोनिश्चयात्मानिश्चयस्वभावोनिराकारःबाह्यविषयाकारानुपरक्तोयोंऽकुरोजातःसैवबुद्धिरित्युदीर्यते ॥ ४० ॥ अस्येति ॥



जन्मनांकर्मणांवापिचित्तंबीजमुदाहृतम् ॥ पादपःपवनेनेवदेहश्चित्तेनचाल्यते ॥ ३३ ॥ चित्तंत्यागंविदुःसर्वत्यागंत्यागविदोजनाः ॥ चित्तेत्यक्तेलयंयातिद्वैतमैक्यंचसर्वतः ॥ ३४ ॥ शिष्यतेपरमंशांतमेकमच्छमनामयम् ॥ सर्वत्यागःपरानंदोदुःखमन्यत्सुदारुणम् ॥ ३५ ॥ इत्योमित्युररीकृत्यययदिच्छसितदाचर ॥ कृत्वासर्वपरित्यागंशांतःस्वस्थोवियत्समः ॥ सौम्योभवसियद्रूपस्तद्रूपोभवभूपते ॥ ३६ ॥ शिखिध्वजउवाच ॥ चित्तस्यादौस्वरूपंमेयथावद्भगवन्वद ॥ ततश्चित्तपरित्यागंवदमेवदतांवर ॥ ३७ ॥ कुंभउवाच ॥ वासनैवसदाराजन्स्वरूपंविद्धिचेतसः ॥ चित्तशब्दस्तुपर्यायोवासनायाउदाहृतः ॥ ३८ ॥ अहमर्थोदयोयोऽयंसर्वानर्थैकभाजनम् ॥ एतच्चित्तद्रुमस्यास्यविद्धिबीजंमहामते ॥ ३९ ॥ एतस्मात्प्रथमोद्भिन्नादंकुरोनुभवाकृतिः ॥ निश्चयात्मानिराकारोबुद्धिरित्येवसोच्यते ॥ ४० ॥ अस्यबुद्ध्यभिधानस्ययांकुरस्यप्रपीनता ॥ संकल्परूपिणीतस्याश्चित्तंचेतोमनोऽभिधाः ॥ ४१ ॥

बुद्ध्यभिधानस्यबुद्धिरूपांकुरस्यसंकल्परूपिणीयाप्रपीनतास्थूलतास्ति तस्याःसंकल्परूपिण्याः स्थूलतायाएव चित्तंचेतःमनइतिवाभिधानाःसंज्ञाभवंति ॥ ४१ ॥

ईदृशेति ॥ ईदृशस्यउक्तप्रकारस्यास्यचित्तरूपस्यदुर्वृक्षस्यशाखाविलवनंकामसंकल्पविचिकित्सादिरूपवासनानांशाखानाविच्छेदंकुर्वन् चित्तस्यमूलकाषेअहंकारात्मनोमूलस्यछेदेभरमास्थातिशयंकुरु ॥ ४२ ॥ तच्छाखाविलवनप्रकारमाह ॥ वासनाइति ॥ विविधंनानाप्रकारंफलंसुखदुःखादिरूपंफलंत्योवितरंत्योवासनारूपाविविधाःशाखाः संविद्वलेनआत्मानुसंधानबलेनअंतः अभाविताउपेक्षिताः सत्योल्लूनाः छिन्नाभवंति ॥४३॥ असंसक्तइति ॥ यःपुमानसंसक्तमनाःविषयेष्वनासक्तःमौनीमौननिष्ठः शांतवादविचारणःशांतानिवृत्तापरेषांवादेषुसं

ईदृशस्यास्यचित्तस्यदुर्वृक्षस्यप्रतिक्षणम् ॥ शाखाविलवनंकुर्वन्मूलकाषेभरंकुरु ॥ मूलाद्धरणमेवाशुत्यागंत्यागविदोविदुः ॥ ४२ ॥ वासनाविविधाःशाखाःफलंत्योविविधंफलम् ॥ अभाविताभवंत्यंतर्लूनाःसंविद्वलेनवै ॥ ४३ ॥ असंसक्तमनामौनीशांतवादविचारणः ॥ संप्राप्तकारीयःसोऽतर्लूनचित्तलतोभवेत् ॥ ४४ ॥ गौणंशाखाविलवनंमुख्यंमूलविकर्तनम् ॥ चित्तवृक्षस्यतेनत्वंमूलकाषपरोभव ॥ ४५ ॥ मुख्यत्वेनमहाबुद्धेमूलदाहमलंकुरु ॥ चित्तकंटकखंडस्यभवत्येवमचित्तता ॥ ४६ ॥ शिखिध्वजउवाच ॥ अहंभावात्मनश्चित्तद्रुमबीजस्यहे मुने ॥ कोऽनलोदहनाख्योऽस्मिन्कर्मण्यर्थकरोभवेत् ॥ ४७ ॥

कथासुविचारणाकिंकेनकथमित्यादिरूपायस्यताद‍ृशःसन्संप्राप्तकारीआवश्यककार्यकारीभवति पुरुषोऽतर्लूनचित्तलतश्छिन्नचित्तशाखोभवेत् ॥४४॥ गौणमिति ॥ गौणमप्रधानं मुख्यंप्रधानम् ॥४५॥ मुख्यत्वेनेति ॥ चित्तकंटकखंडस्यचित्तमेवकंटकसमूहस्तस्यतत्समूलदाहंअलंसम्यक्कुरु । एवंसत्यचित्तताभवति ॥ ४६ ॥ अहमिति ॥ अहंभावात्मनो अहंकाररूपस्यचित्तद्रुमबीजस्यदहनेकोवाअनलोऽर्थकरोऽर्थक्रियाकारीभवेत् ॥ ४७ ॥

राजन्निति ॥ चित्तदुर्द्रुमबीजस्यअहंकारस्यदहने कोवाहमित्येवंरूपआत्मविचारएवदहनःस्मृतः ॥ ४८ ॥ मुनेइतिश्लोकद्वयंवाक्यम् ॥ जगदादिरहंकारांतोवर्गोजडत्वात् नाहमितिस्वयैवबुद्ध्याबहुशःप्रविचारितमित्यन्वयः ॥४९॥ ५० ॥ ५१ ॥ चिदिति ॥ एतेप्रतीयमाना भावाः पदार्थायत्रयस्मिन्वस्तुनिस्वदंतेयदाश्रितारोचंतेयेनचनिर्णीयंते निश्चीयंतेतदच्छात्मनिर्मलंअजंचिन्मात्रंवेदनमेवाहंअहंशब्दस्यमु

कुंभउवाच ॥ राजन्स्वात्मविचारोऽयंकोऽहंस्यामितिरूपकः ॥ चित्तदुर्द्रुमबीजस्यदहनेदहनःस्मृतः ॥ ४८ ॥ शिखिध्वजउवाच ॥ मुनेमयास्वयाबुद्ध्याबहुशःप्रविचारितम् ॥ नाहंजगत्तदादेहोनमांसास्थ्यसृगादिमान् ॥ ४९ ॥ कर्मेंद्रियाण्यपिनचनचबुद्धींद्रियाण्यपि ॥ नमनोनापिचमतिर्नाहंकारश्चजाडयतः ॥ कटकत्वंयथाहेम्नितथाहंत्वंचिदात्मनि ॥ ५० ॥ कुंभउवाच ॥ एतावन्मात्रकंद्वंद्वंयदिनत्वंमहीपते ॥ जडत्वात्तन्महाबुद्धेर्योऽसितंवदमेऽनघ ॥ ५१ ॥ शिखिध्वजउवाच ॥ चिन्मात्रमजमच्छात्मवेदनंविदुषांवर ॥ यत्रभावाःस्वदंत्येतेनिर्णीयंतेचयेनवा ॥ ५२ ॥ एवंरूपस्यमेलग्नंनूनंमलमकारणम् ॥ चित्तद्रुमस्ययद्बीजमहंभावात्मकंहृदि ॥ ५३ ॥ तच्चत्यक्तुंनशक्नोमित्यक्तंत्यक्तमुपैतिमाम् ॥ मुनेयस्मान्नशक्नोमितेनतप्येसुदारुणम् ॥ ५४ ॥ कुंभउवाच ॥ कारणाज्जायतेकार्यमहंभावात्मकस्यतत् ॥ मुनेकारणमन्विष्यकथयाशुममाधुना ॥ ५५ ॥

ख्योऽर्थः ॥ ५२ ॥ एवमिति ॥ यच्चित्तद्रुमस्यबीजंतदहंभावात्मंकमलंएवंरूपस्यविशुद्धचिन्मात्ररूपस्यमेहृदिअकारणमेवलग्नम् ॥ ५३ ॥ तच्चेति ॥ तच्चअहंभावात्मकंमलंभूयोभूयस्त्यक्तमपिमामुपैतिअतस्त्यक्तुंनशक्नोमि । यस्माच्चनशक्नोमितेनहेतुनासुदारुणंतप्येतप्तोभवामि ॥ ५४ ॥ कारणमिति ॥ कार्यंवस्तुकारणादेवजायतेतत्तस्मात्कारणादहंभावात्मकस्यकार्यस्यकारणमन्विष्यात्मनैवकथय ॥ ५५ ॥

मुनेइति ॥ अहमितिदोषस्यअहंकारस्यवेदनंचितश्चेत्योन्मुखत्वमेवकारणंवेद्मि तच्चवेदनंयथोपशमंयातितन्मेवद ॥ ५६ ॥ एतदेवविवृणो
ति ॥ चितइति ॥ चितश्चैतन्यस्यचेत्योन्मुखत्वंदृश्यानुसंधानंतेनहेतुनाअयमहंकारोदुःखायस्थितः अतोदुःखोपशांतयेचेत्योपशमनंदृश्य
स्यास्फुरणंब्रूहि ॥ ५७ ॥ कारणमिति ॥ त्वंकारणज्ञोऽसिअतोवेदनस्यकारणंवद अतोवेदननिमित्तनिरूपणानंतरंत्वांकारणाकारणक्रमं
कारणस्यकारणाभावस्यचक्रमंप्रकारंबोधयिष्यामिइदमस्यकारणंभवति इदमस्यकारणंनभवत्येतद्बोधयिष्यामीत्यर्थः ॥ ५८ ॥ देहेति ॥ वे

शिखिध्वजउवाच ॥ मुनेऽहमितिदोषस्यवेदनंवेद्मिकारणम् ॥ तद्यथोपशमंयातितन्मेवदमुनी
श्वर ॥ ५६ ॥ चितश्चेत्योन्मुखत्वेनदुःखायायमहंस्थितः ॥ चेत्योपशमनंब्रूहिमुनेदुःखोपशांत
ये ॥ ५७ ॥ कुंभउवाच ॥ कारणंकारणज्ञोऽसिवेदनस्यवदाशुमे ॥ अतस्त्वांबोधयिष्यामिकार
णाकारणक्रमम् ॥ ५८ ॥ शिखिध्वजउवाच ॥ देहादिरूपयोदेतिवेदनंवस्तुसत्तया ॥ असत्याभा
सयास्पंदोयथापवनलेखया ॥ ५९ ॥ असत्तांवस्तुसत्तायानावगच्छाम्यहंयया ॥ अहंत्ववेदनं
चित्तबीजंसमनुशाम्यति ॥ ६० ॥ कुंभउवाच ॥ विद्यतेयदिदेहादिवस्तुसत्तातदस्तिते ॥ अभा
वाद्देहसत्तादेःकिंनिष्ठंतववेदनम् ॥ ६१ ॥

दनंकर्तृ देहादिरूपयाअसत्याभासयामिथ्याभूतस्फुरणयावस्तुसत्तयापदार्थःरूपसत्तयाउदेतिपवनलेखयास्पंदःकंपइव ॥ ५९ ॥ असत्ता
मिति ॥ ययाअसत्तयाचित्तबीजंअहंत्ववेदनंअहंकारस्तत्कारणंचवेदनंसमनुशाम्यतितांवस्तुसत्तायाअसत्तांमिथ्यात्वंनावगच्छामि ॥ ६० ॥
विद्यतइति ॥ देहादिवस्तुसत्तायदिविद्यतेतत्तर्हितेवेदनमस्तिसंभवति युज्यतइति यावद्देहसत्तादेरभावात् तववेदनंकिंनिष्ठंनिरालंबन
मित्यर्थः ॥ ६१ ॥

हस्तेति ॥ सावयवोऽर्थक्रियाकारीसदानुभूयमानश्चदेहःकथमपलपितुंशक्यतइत्यर्थः ॥ ६२ ॥ कारणमिति ॥ कारणंविनाप्रतीयमानंकार्यंनास्त्येव तत्संवित्तिस्तुविभ्रमोभ्रांतिरित्यर्थः ॥ ६३ ॥ अविद्यमानमिति ॥ भ्रमोदितंभ्रांतिकल्पितंसर्वंअविद्यमानमेवविद्धि हियस्मात्कारणाद्यद्वस्तुअकारणंउत्पत्तिकारणंविनैवप्रतीयतेतत्कार्यंरज्जुसर्पवन्मिथ्या ॥ ६४ ॥ आद्यइति ॥ इदंजगत्पितामहेनसृष्टमितिकृत्वासएवपितामहोऽस्यकारणंकथंनस्यात् ॥ ६५ ॥ सर्गादाविति ॥ सर्गादौकेवलंअद्वितीयंब्रह्मास्तितत्तुनकारणंनिर्विकारत्वात् अन्यदपिकारणभूतं

शिखिध्वजउवाच ॥ हस्तपादादिसंयुक्तक्रियाफलविलासवान् ॥ सदानुभूयमानोऽयंदेहोनास्तिकथंमुने ॥ ६२ ॥ कुंभउवाच ॥ कारणंयस्यकार्यस्यभूमिपालनविद्यते ॥ विद्यतेनहितत्कार्यंतत्संवित्तिस्तुविभ्रमः ॥ ६३ ॥ अविद्यमानमेवत्वंविद्धिसर्वंभ्रमोदितम् ॥ अकारणंहियद्वस्तुतन्मिथ्यारज्जुसर्पवत् ॥ ६४ ॥ शिखिध्वजउवाच ॥ आद्यःपितामहोयःस्यात्तेनसृष्टमिदंजगत् ॥ सएवास्यकथंनस्यात्कारणंवदमेमुने ॥ ६५ ॥ कुंभउवाच ॥ सर्गादौकेवलंशांतंब्रह्मैवास्तिमहीपते ॥ द्वितीयकलनाभावाद्वेधसोऽस्तिनकारणम् ॥ ६६ ॥ शिखिध्वजउवाच ॥ वेधसःपरमंब्रह्मकारणंकिंनहेमुने ॥ अकारणकर्तासाधोतन्नप्रत्येमिवेधसः ॥ ६७ ॥ कुंभउवाच ॥ अनंतमजमव्यक्तंयदाद्यमुपलंभनम् ॥ अप्रतर्क्यमविज्ञेयमक्षरंशांतमच्युतम् ॥ अद्वितीयमनाद्यंतंतच्छिवंशांतमव्ययम् ॥ ६८ ॥

वस्तुनास्ति द्वितीयकलनाभावात् द्वितीयस्यब्रह्मव्यतिरिक्तस्यवस्तुनःप्रतीत्यभावात् । आत्मावाइदमेकएवाग्रआसीन्नान्यत्किंचनमिषदितिश्रुतेः । अतोवेधसःकारणंनास्तीत्यन्वयः ॥ ६६ ॥ ६७ ॥ अनंतमितिसार्धश्लोकत्रयंवाक्यम् ॥ अनंतत्वादिलक्षणंयदाद्यमुपलंभनं ज्ञानस्वरूपंवस्त्वस्तितद्वस्तुशिवंशांतंअव्ययंचेतिकृत्वा ॥ ६८ ॥

तत्कथंकेनप्रकारेणकर्तृभवेत् नकथंचित्कस्यचित्कर्तृत्वं व्यतिरिक्तस्यकार्यस्याभावात् केनवाउपकरणेननकेनचित्तस्याप्यभावात् एवंकर्तृत्वाभावात् भोक्तृत्वमपिनास्तीत्यर्थः । अतःकर्त्रभावादिदंजगत्किंचिदपिनकृतंअतश्चैतज्जगन्नविद्यतेवस्तुतोनास्तिच ॥ ६९ ॥ अतश्चवेधाश्चिन्मात्रकल्पितत्वाच्चिदेवसर्गश्चचिन्मात्रजनितश्चिन्मात्ररूपिणावेधसैवजनितत्वात्तदात्मकश्चिन्मात्रात्मकइत्येवंस्थितोनिश्चितः ॥ ७० ॥ नेति ॥ सर्वंइदंतयाअहंतयाचप्रतीयमानंसर्वंवस्तुशांतंअजंशिवंचअतोनकर्ताभोक्ताचास्मिइत्येवंनिश्चयवान्सन्अंतस्थमज्ञानंतनुतांकृशतांनय ॥ ७१ ॥ अज्ञानमिति ॥ एवंपूर्वोक्तरीत्याशिथिलीभूतमज्ञानंनष्टंविदुः यस्मान्नाशेनविनापूर्वसंस्थानविच्युतिर्नोदेति असमवायिका

तत्कथंकस्यकेनैवकर्तृभोक्तृकदाभवेत् ॥ अतोनेदंकृतंकिंचिज्जगदेतन्नविद्यते ॥ ६९ ॥ चिन्मात्रकल्पितोवेधाश्चिदेवेतिविनिश्चितः ॥ तन्मात्रजनितःसर्गस्तदात्मकइतिस्थितिः ॥ ७० ॥ नकर्तास्मिनभोक्तास्मिसर्वंशांतमजंशिवम् ॥ इतिनिश्चयवानंतरज्ञानंतनुतांनय ॥ ७१ ॥ अज्ञानंशिथिलीभूतमेवंनष्टंविदुर्बुधाः ॥ ननाशेनविनोदेतिपूर्वसंस्थानविच्युतिः ॥ ७२ ॥ तानवंदृश्यतेयस्यतस्यानुक्रमतःस्वयम् ॥ पूर्वसंस्थानविगमात्प्रशमोऽप्युपपद्यते ॥ ७३ ॥ तस्माच्चिदात्मकतयात्मनिचित्ततोऽयंनित्यंस्वयंकचतिभूमिपदेवदेवः॥तेनैवपद्मजइतिस्वयमात्मनात्माप्रोक्तःस्वरूपमितिशांतमिदंसमस्तम् ॥७४॥

रणनाशेकार्यद्रव्यनाशस्यन्याय्यत्वात्पूर्वसंस्थानविच्युतेश्चासमवायिनाशरूपत्वादितिभावः ॥ ७२ ॥ तानवमिति ॥ सएवार्थप्रशमस्तेजोद्रव्यविनाशोनिर्विकारतावा ॥ ७३ ॥ तस्मादिति ॥ तस्माद्धेतोःदेवदेवःपरमात्मास्वयंस्वात्मनिचिदात्मकतयाइत्थंभूतएवचित्ततःस्वसंकल्पवशादयंप्रतीयमानप्रपंचरूपःकचतिस्फुरति तेनैवदेवदेवेनात्मास्वयंस्वस्वरूपमेवपद्मजइत्यात्मनैवप्रोक्तइति अतोहेतोरिदंसमस्तंदेवदेवस्यशांतस्वरूपम् ॥ ७४ ॥

बुद्धइति ॥ बुद्धः प्रबुद्धोऽस्मिकर्त्रभावात्कार्यंजगन्नास्तितेनजगदभावेनचपदार्थदृङ्नास्तिइतित्वयायुक्तियुक्तमुक्तम् ॥ ७५ ॥ एवमिति ॥ यतोऽहमतःपरंचेत्यंकिंचिदपिनास्तीतिबोधितःचिन्मात्ररूपोऽहमेवसर्वात्मास्फुरामीतिबोधवानस्मि अतःकारणादेवंचिन्मात्रएवस्थितोविशुद्धोनिर्मलोऽस्मि विशुद्धस्वरूपावबोधवानस्मितेनचशिवःपरमात्मैवास्मिततश्चमह्यमेवनमः नंतव्यस्यदेवतांतरस्याभावात् ॥ ७६ ॥ पदार्थेति ॥ पदार्थवेदनाद्धेदेनपदार्थानुसंधानाद्धेतोःअसदेवेदंजगदित्थमनेनप्रकारेणावभासते । अतएतेनपदार्थवेदनेनालंपर्याप्तं अद्येदानीमहं

शिखिध्वजउवाच ॥ बुद्धोऽस्मिभगवन्युक्तियुक्तमुक्तंत्वयोत्तम ॥ कर्तृभावाज्जगन्नास्तितेननास्तिपदार्थदृक् ॥ ७५ ॥ एवंस्थितेविबुद्धोऽस्मिप्रबुद्धोऽस्मिशिवोऽस्मिच ॥ नमोमह्यंपरंचेत्यंनकिंचिदितिबोधितः ॥ ७६ ॥ पदार्थवेदनादित्थमसदेवावभासते ॥ अहमद्यालमेतेनशांतमासेखकोशवत् ॥ ७७ ॥ जगत्पदार्थप्रविभागदृष्टिःसदेशदिक्कालकलाक्रियौघा ॥ अहोनुकालेनचिरेणशांताब्रह्मैवशांतंस्थितमव्ययात्मा ॥ ७८ ॥ वसिष्ठउवाच ॥ कुंभेनबोधितस्त्वेवंसबभूवावबोधवान् ॥ विनिर्गतोरराजाथमहामोहसमुद्गकात् ॥७९॥ एवंकुंभवचोराजाभावयंस्तदकृत्रिमम् ॥ स्वएवात्मपदेतस्मिन्क्षणंपरिणतोऽभवत् ॥ ८० ॥ बभूवामीलितमनोलोचनःशांतवाङ्मुनिः ॥ शिलातलादिवोत्कीर्णोनिष्पंदावयवाकृतिः ॥ ८१ ॥ ततोमुहूर्तमात्रेणप्रबुद्धस्फुरितेक्षणम् ॥ तमुवाचमहाबाहोचूडालाकुंभरूपिणी ॥ ८२ ॥

खकोशवदाकाशगर्भवच्छांतमासे ॥ ७७ ॥ जगदिति ॥ सदेशदिक्कालकलाक्रियौघादेशादिसंवित्सहिताजगत्पदार्थप्रविभागदृष्टिर्जगद्विषयापदार्थभेदविषयाचसंविच्चिरेणशांतानिवृत्ता अव्ययात्माशांतंब्रह्मैवस्थितंअवस्थितम् ॥ ७८ ॥ ७९ ॥ ८० ॥ बभूवेति ॥ आमीलितमनोलोचनोमनोमीलनंनामवृत्तिनिरोधः शिलातलादुत्कीर्णइवटंकादिभिःशिलातलेउत्कीर्यनिर्मितइव ॥ ८१ ॥ ८२ ॥

कच्चिदिति ॥ निर्विकल्पानांसमाधिभाजांसुतल्पेविश्रांतिस्थाने ॥ ८३ ॥ ८४ ॥ भगवन्निति ॥ महाविभवभूषितामहाविभवाअणिमादयः महतीपदवीजीवन्मुक्तमार्गः ॥ ८५ ॥ ८६ ॥ ८७ ॥ ८८ ॥ मनसीतिश्लोकत्रयंवाक्यम् ॥ त्यक्तभोगैषणेत्यक्तविषयाभिलाषेकषा

कुंभउवाच ॥ कच्चिदस्मिन्पदेस्फारेशुद्धेमृदुनिनिनिर्मले ॥ सुतल्पेनिर्विकल्पानांसुखंविश्रांतवानसि ॥ ८३ ॥ कच्चिदंतःप्रबुद्धोऽसिकच्चिद्भ्रांतिस्त्वयोज्झिता ॥ कच्चिज्ज्ञेयंपरिज्ञातंदृष्टंद्रष्टव्यमेववा ॥ ८४ ॥ शिखिध्वजउवाच ॥ भगवंस्त्वत्प्रसादेनमहाविभवभूषिता ॥ महतीपदवीदृष्टासर्वस्योर्ध्वंस्थितामया ॥ ८५ ॥ सतांविदितवेद्यानामहोबतमहात्मनाम् ॥ अपूर्वैकामृतमयःसंगःसारफलप्रदः ॥ ८६ ॥ जन्मनापिमयालब्धंयन्ननाममहामृतम् ॥ तदद्यत्वत्समासंगात्तेनैवासादितंमया ॥ ८७ ॥ अनंतमाद्यममृतमेतत्कमललोचन ॥ कथंनासादितमभूत्पूर्वमात्मपदंमया ॥ ८८ ॥ कुंभउवाच ॥ मनस्युपशमंयातेत्यक्तभोगैषणेस्थिते ॥ कषायपाकेनिर्वृत्तेसर्वेंद्रियगणस्यच ॥ ८९ ॥ यांतिचेतसिविश्रांतिंविमलादेशिकोक्तयः ॥ यथासितांशुकेशुद्धेबिंदवःकुसमांभसः ॥ ९० ॥ देहान्मलानिसर्वाणिकालेनकमलेक्षण ॥ साधोवृक्षात्फलानीवपाकेनविगलंत्यधः ॥ ९१ ॥ द्वित्वैकत्वदृशौचित्तंतदेवाज्ञानमुच्यते ॥ एतयोर्योलयोदृष्टयोस्तज्ज्ञानंसापरागतिः ॥ ९२ ॥

यपाकेअंतःकरणपाकेसर्वेंद्रियगणस्यचपाके ॥ ८९ ॥ आनुकूल्येनिवृत्तेनिष्पन्ने कुसुमांभसःकुसुंभकुसुमादिरसस्य ॥ ९० ॥ कालेनयःपाकःतेनवृक्षात्फलानीवदेहात्सर्वाणिमलानिविगलंति ॥ ९१ ॥ द्वित्वेति ॥ द्वित्वैकत्वदृशौद्वित्वैकत्वविषयेदृष्टीतदेवचित्तंतदेवाज्ञानंएत

योर्दृष्ट्योर्योलयःतदेवज्ञानंसैवपरागतिःकैवल्यम् ॥ ९२ ॥ ९३ ॥ ९४ ॥ पुनरिति ॥ पूर्वोक्तामलिनावासनैवचित्तंसातुतज्ज्ञस्यनास्तीत्यर्थः ॥ ९५ ॥ ययेति ॥ तज्ज्ञस्यव्यवहारहेतुःशुद्धवासनासत्वमभिधीयतेनचित्तमिति ॥ ९६ ॥ तदेवाह मूढंमलिनवासनानुविद्धंप्रबुद्धं

प्रबुद्धोऽसिविमुक्तोऽसित्यक्तंचित्तंत्वयानृप ॥ महोदयोमुनिर्मौनीस्वरूपेतिष्ठनिर्मलः ॥ ९३ ॥ शिखिध्वजउवाच ॥ प्रबुद्धस्यनतज्ज्ञस्यचित्तंनामाकिलप्रभो ॥ जीवन्मुक्तास्तदेतेहिविहरंतिकथंवद ॥ ९४ ॥ कुंभउवाच ॥ पुनर्जननयोग्यायावासनाघनवासना ॥ साप्रोक्ताचित्तशब्देननसातज्ज्ञस्यविद्यते ॥ ॥ ९५ ॥ ययावासनयातज्ज्ञाविहरंतीहकर्मसु ॥ तांत्वंसत्वाभिधांविद्धिपुनर्जननवर्जिताम् ॥ ९६ ॥ मूढंचित्तंचित्तमाहुःप्रबुद्धंसत्वमुच्यते ॥ अप्रबुद्धाहिचित्तस्थाःसत्वस्थाःसुमहाधियः ॥ ९७ ॥ स्वर्गमोक्षादिफलदंयत्किंचित्सर्वमेवतत् ॥ त्यक्त्वासमस्तमाभासोयोऽस्यसावेववैभवान् ॥ ९८ ॥ पदार्थौघमगृह्णानस्तिष्ठास्पंदिताचित्तभूः ॥ अपरिस्पंदचित्तस्यसंसृतिर्नेहधावति ॥ ९९ ॥ यानियानीहदुःखानिप्रस्फुरंतिजगत्त्रये ॥ चेतश्चापलजान्येवतानितानिमहीपते ॥ १०० ॥ अथचैतसितत्त्वज्ञस्पंदास्पंदौत्वमेकताम् ॥ नीत्वातिष्ठयथाकाममैक्यमागत्यशाश्वतम् ॥१॥ शिखिध्वजउवाच ॥ कथमैक्यंविभोयातःस्पंदास्पंदाविमावुभौ ॥ सर्वसंशयविच्छेदकारणंतद्वदाशुमे ॥ २ ॥



शुद्धवासनम् ॥ ९७ ॥ ९८ ॥ ९९ ॥ १०० ॥ अथेति ॥ स्पंदःचित्तस्यबहिःप्रसरःअस्पंदःसमाधिःतावेकतांनीत्वासर्वदास्वरूपानुसंधानेनविक्षेपाविक्षेपावभेदंनीत्वाशाश्वतंनित्यमैक्यंब्रह्माद्वैतमागत्ययथाकामंतिष्ठ ॥ १ ॥ कथमिति ॥ यातइतिलटिद्विवचनं । विभोकुंभ ॥ २ ॥

एकमिति ॥ सर्वंजगच्चिन्मात्रमेकंवस्तुयथांबुधिःसर्वोवार्मात्रंतद्वत्तदेवचिन्मात्रंवस्तुवीचिभिःशुद्धवारीवधीभिर्बुद्धिवृत्तिभिःस्पंदते ॥ ३ ॥ ब्रह्मेति ॥ ब्रह्मैवमूढजगत्तयापश्यंतीत्यर्थः ॥ ४ ॥ सर्गइति ॥ चित्स्पंदमात्रमेषसर्गः । सचसम्यग्दृष्टौअधिष्ठानयाथात्म्यज्ञानेविलीयते । असम्यग्दृष्ट्यातुरज्ज्वांसर्पभ्रमइवोदेति ॥ ५ ॥ शास्त्रेतिश्लोकद्वयंवाक्यम् ॥ स्वानुभूतिमयंस्वप्रकाशम् ॥ ६ ॥ ७ ॥ इतीतिश्लोकद्वयंवा

कुंभउवाच ॥ एकंवस्तुजगत्सर्वंचिन्मात्रंवारिवांबुधिः ॥ तदेवस्पंदतेधीभिःशुद्धवारीववीचिभिः ॥ ३ ॥ ब्रह्मचिन्मात्रममलंसत्यमित्यादिनामकम् ॥ यद्गीतंतदिदंमूढाःपश्यंत्यंगजगत्तया ॥ ॥४॥सर्गचित्स्पंदमात्रात्मासम्यग्दृष्टौविलीयते ॥ उदेत्यसम्यग्दृष्ट्यातुरज्ज्वांसर्पभ्रमोयथा ॥५॥ शास्त्रसज्जनसंपत्तिःसंतताभ्यासयोगतः ॥ कालेनामलतांयातेचेतसींदाविवोदिते ॥ ६ ॥ एतत्केवलमाभासंस्वानुभूतिमयंततम् ॥ उदेत्यंतर्महाबुद्धेस्स्वयमेवमहात्मनाम् ॥ ७ ॥ इतितेकथितंसर्वंशिखिध्वजमहीपते ॥ यथेदमुत्थितंसर्वंयथाचप्रविलीयते ॥ ८ ॥ एतत्कृत्वाचमत्त्वा चबुद्ध्वाचमुनिनायक ॥ यथेच्छसितथातिष्ठदृष्टस्पष्टपदेपदे ॥ ९ ॥ स्वर्गंगच्छाम्यहंपर्वकालेऽस्मिन्नारदोमुनिः ॥ ब्रह्मलोकात्समायातोभवत्यमरसंसदम् ॥ १० ॥ नमांपश्यतिचेत्तत्रसकोऽपमुपगच्छति ॥ नोद्वेजनीयाभव्येनगुरवोहिकदाचन ॥ ११ ॥

क्यम् ॥ एतत्कृत्वाचेतसिकृत्वामत्त्वायुक्तिभिरनुसंधायबुद्ध्वातत्त्वतोऽवगम्य दृष्टस्पष्टपदेदृष्टस्फुटस्वरूपेपदेजीवन्मुक्तिपदेयथेच्छसितथातिष्ठेत्यन्वयः ॥ ८ ॥ ९ ॥ स्वर्गमितिश्लोकत्रयंवाक्यम् ॥ अमरसंसदंदेवसभाम् ॥ १० ॥ तत्रदेवसभायांनोद्वेजनीयाःविक्षेपंनप्रापणीयाः ॥ ११ ॥

त्यक्तसंकल्पलेखेननकिंचिदभिवांछता ॥ त्वयासदैववस्तव्यंदृष्टिरेषाहिपावनी ॥ १२ ॥ वसिष्ठउवाच ॥ इत्युक्त्वाभगवान्कुंभःक्षणादंतर्धिमाययौ ॥ गतेकुंभेमहीपालःपरंविस्मयमाययौ ॥ १३ ॥ शिखिध्वजउवाच ॥ अहोनुशीतलाशुद्धाशांतेयंपदवीनिजा ॥ रसायनोद्भवाकारासत्वंशांतयतीवमे ॥ ॥ १४ ॥ वसिष्ठउवाच ॥ एवंसंचिंतयन्राजानूनंनिर्वासनाशयः ॥ शैलादिवसमुत्कीर्णोमौनमेवावतस्थिवान् ॥ १५ ॥ तस्मिन्नेवततोमौनेनिःसंकल्पेनिराश्रये ॥ प्रतिष्ठांनिश्चलांप्राप्यसतस्थौगिरिशृंगवत् ॥ १६ ॥ वसिष्ठउवाच ॥ निर्विकल्पसमाधानात्काष्ठकुड्योपमस्थितिः ॥ एवंशिखिध्वजोराजाच्चूडालामधुनाशृणु ॥ १७ ॥ शिखिध्वजंतंभर्तारंकुंभवेषेणतेनसा ॥ प्रबोध्यांतर्धिमागत्यततारतरसानभः ॥ १८ ॥ विदग्धमुग्धमाकारंस्त्रैणंजग्राहसुंदरम् ॥ स्वपत्तनमथोगत्वाविवेशांतःपुरंक्षणात् ॥ १९ ॥ दृश्याबभूवलोकस्यनृपकर्मचकारच ॥ वत्सरत्रितयेनाथपुनरंबरमेत्यसा ॥ २० ॥ बभूवकुंभोयोगेनशिखिध्वजवनंययौ ॥ ततस्तत्रैवतंभूपमपश्यद्वनभूमिगम् ॥ २१ ॥ निर्विकल्पसमाधिस्थंतत्रापश्यन्महीपतिम् ॥ राजानंतावदेतस्माद्बोधयामिपरात्पदात् ॥ २२ ॥ इतिसंचिंत्यचूडालासिंहनादंचकारसा ॥ भूयोभूयःप्रभोरग्रेवनेचरभयप्रदम् ॥ २३ ॥

साचूडाला ॥ २४ ॥ २५ ॥ अहोइतिश्लोकचतुष्टयंवाक्यम् । देहमालोकयामि जीवितशेषवद्भवतिनवेतिविचारयामीत्यर्थः । सत्वशेषोजीवि तशेषः ॥ २६ ॥ २७ ॥ २८ ॥ स्पर्शेनप्राणसंचारसूचकेनशरीरगतसर्वमर्मस्थानसंस्पर्शेन नयनेनचजीवितसूचकेनागलितगोलकेन र

नचचालशिलेवाद्रौयदानादेनतेनसः ॥ भूयोभूयःकृतेनापितदासातंऽयचालयत् ॥ २४ ॥ चालितः पातितोऽप्येषयदानबुबुधेनृपः ॥ सातदाचिंतयामासचूडालाकुंभरूपिणी ॥ २५ ॥ अहोऽप्युपरतःसा धुःस्वपदेभगवानयम् ॥ आलोकयामिवैतावदेनंदेहंमहीपतेः ॥ २६ ॥ यद्यस्यसत्वशेषोऽस्तिबोधबी जंहृदंतरम् ॥ तदाहमपिजीवामिप्रभोर्दांपत्यासिद्धये ॥ २७ ॥ अन्यथात्वंगनादेहमिमंत्यक्त्वापरंप दम् ॥ अपुनर्जननायैवगच्छामीहहिकिंमम ॥ २८ ॥ वसिष्ठउवाच ॥ इतिसंचिंत्यचूडालास्पर्शेनन यनेनच ॥ पतिमालोक्यसाशंकमुवाचवरवर्णिनी ॥ २९ ॥ अस्त्येवसत्वशेषोऽस्यहृदिसंबोधकारण म् ॥ संबोधहेतूदयनेसत्वशेषंऽयबुद्धयत ॥ ३० ॥ श्रीरामउवाच ॥ भृशंप्रशांतचित्तस्यकाष्ठलोष्टसम स्थितेः ॥ सत्वशेषःकथंब्रह्मन्ज्ञायतेध्यानशालिनः ॥ ३१ ॥ वसिष्ठउवाच ॥ प्रबोधकारणंज्ञस्यदुर्ल क्ष्याणुवपुर्हृदि ॥ विद्यतेसत्वशेषोंऽतर्बीजेपुष्पफलंयथा ॥ ३२ ॥ चित्तस्पंदविमुक्तस्यतस्याचलसम स्थितेः ॥ कायःसमसमाभोगोनग्लायतिनहृष्यति ॥ ३३ ॥

क्तरेखायुक्तेननेत्रद्वयेनचसत्त्वशेषंऽयबुद्धयतेत्यन्वयः ॥ २९ ॥ ३० ॥ ३१ ॥ प्रबोधेतिश्लोकत्रयंवाक्यम् ॥ ज्ञस्यसमाधिस्थस्यदुर्लक्ष्याणुव पुर्हृदिदुर्दर्शसूक्ष्मरूपेहृदिअंतःसत्त्वशेषोबीजेपुष्पफलमिवविद्यते ॥ ३२ ॥ चित्तस्पंदविमुक्तस्य अचलसमस्थितेस्तस्यकायःसमसमाभोगला

तूनग्लायतिनहृष्यति ॥ ३३ ॥ नास्तमेतिनचोदेतिकिंतुसाम्येनतिष्ठति पृष्टमेवंकथितंसांप्रतंप्रकृतंश्टृणिवत्यन्वयः ॥ ३४ ॥ इतीतिश्लोकद्व



यंवाक्यम् ॥ चूडालाइतिसत्वशेषस्यसत्तांनिर्णीयपरकायप्रवेशप्रवीणतयास्वदेहंसंत्यज्यचित्तत्त्वेस्थितिमाप तत्रचस्वपरसाधारणेचित्तत्त्वे



नास्तमेतिनचोदेतिसममेवावतिष्ठते ॥ पृष्टंतेकथितंरामसांप्रतंप्रकृतंशृणु ॥ ३४ ॥ इतिनिर्णीयचू डालास्वदेहंतंतथास्थितम् ॥ संत्यज्यप्रापचित्तत्त्वेस्थितिमाद्यंतवर्जिते ॥ ३५ ॥ तत्रसाचेतसःस्पंदं कृत्वासत्ववतःप्रभोः ॥ स्वंविवेशपुनर्देहंखान्नीडमिवपक्षिणी ॥ ३६ ॥ कुंभाकृतिरथोत्थायप्रविष्टा निजविष्टरे ॥ सामगातुंप्रवृत्तासाभ्रमरीवृंदनिःस्वना ॥ ३७ ॥ तंसामस्वनमाकर्ण्यचित्सत्वगुणशा लिनी ॥ बुबुधेभूपतेर्देहेवसंतइवपद्मिनी ॥ ३८ ॥ दृशंविकाशयामासतांतदार्कइवाब्जिनीम् ॥ अपश्य त्कुंभमग्रस्थंस्वस्थचेताःशिखिध्वजः ॥ ३९ ॥ अहोबतवयंधन्याःपुनःप्राप्तोमुनीश्वरः ॥ इत्येवोदाह रन्राजाकुंभायकुसुमंददौ ॥ ४० ॥ दिष्ट्यादृष्टोऽसिभगवन्नागतोऽसिपुनर्वनम् ॥ अस्मत्पवित्रीकरणंतवा गमनकारणम् ॥ ४१ ॥ कुंभउवाच ॥ यतःप्रभृतियातोऽस्मित्वत्सकाशादनिंदितम् ॥ ततःप्रभृतिचेतोमे त्वय्येवेहसमंस्थितम् ॥ ४२ ॥ नरमेस्वर्गलीलासुनिवत्स्यामिसमंत्वया ॥ त्वादृशोबंधुराप्तश्चसुहृन्मि त्रंतथासखा ॥ ४३ ॥



स्थितासतीप्रभोःशिखिध्वजस्यचेतसःस्पंदंकृत्वा नीडंपक्षिणीवस्वंदेहंपुनर्विवेश ॥ ३५ ॥ ३६ ॥ ३७ ॥ तमिति ॥ भूपतेश्चिच्चेतनाबुबुधे ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥

॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥ ५० ॥ ५१ ॥ निःसंसृतिरिति ॥ शमसमाशयसर्वसौम्यःशमसमेनशमप्रकारेणआशयेना भिप्रायेणसर्वत्रसौम्योहर्षविषादरहितःसकलसंकलनाविमुक्तः संकलनाःकलत्रपुत्रादिममतापाशाःसममागतोऽस्मिसमंसर्वगतंब्रह्मतत्प्राप्तो

विश्वास्योवापिशिष्यश्चमन्येजगतिनास्तिमे ॥ शिखिध्वजउवाच ॥ अहोनुफलितंपुण्यपादपैर्नश्चिरार्जितैः ॥ यस्माद्भवानसंगोऽपिवांछत्यस्मत्समागमम् ॥ ४४ ॥ भवद्वितीर्णयायोगयुक्त्याविश्रांतवानहम् ॥ यथासाधोतथामन्येस्वर्गेविश्रमणंकुतः ॥ ४५ ॥ तामेवंस्वांस्थितिंस्वच्छामवलंब्यप्रकाशिनीम् ॥ विहरेयंयथाकामंस्वर्गेभूमितलेतथा ॥ ४६ ॥ कुंभउवाच ॥ परेपदेमहानंदेकच्चिद्विश्रांतवानसि ॥ इदंभेदमयंदुःखंकच्चित्संत्यक्तवानसि ॥ ४७ ॥ कच्चिदापातरम्येभ्यःसंकल्पेभ्योरतिर्भृशम् ॥ निर्मूलतांगताराजन्तवतत्त्वार्थदर्शिनः ॥ ४८ ॥ हेयादेयदशातीतंशांतंसममवस्थितम् ॥ यथाप्राप्तेष्वनुद्वेगंकच्चित्तवमनःस्थितम्॥४९॥शिखिध्वजउवाच॥त्वत्प्रसादेनभगवन्दृष्टाद्दृश्यातिगागतिः ॥ प्राप्तःसंसारसीमांतोलब्धोलब्धव्यनिश्चयः ॥५०॥ नोपदेष्टव्यमस्माकंकिंचिदप्युपयुज्यते ॥ सर्वत्रैवातितृप्ताःस्मःस्थिताःस्मोविगतज्वराः ॥५१॥ निःसंसृतिर्विगतमोहभयोविरागोनित्योदितःशमसमाशयसर्वसौम्यः ॥ सर्वात्मकःसकलसंकलनाविमुक्तआकाशकोशविशदःसममागतोऽस्मि ॥ ५२ ॥ वसिष्ठउवाच॥इत्यध्यात्मविचित्राभिःकथाभिस्तौपरस्परम् ॥ आसातांवेद्यवेत्तारौचरंतौविपिनेततः ॥५३॥

ऽस्मीत्यर्थः ॥ ५२ ॥ ५३ ॥

॥ ५४ ॥ ५५ ॥ ५६ ॥ ५७ ॥ ५८ ॥ ५९ ॥ ६० ॥ निजइतिश्लोकचतुष्टयंवाक्यम् ॥ निजःपतिःसचउदारात्माउदारचित्तोनिराधिर्नि श्चिंतउभयोर्नवंवयःपुष्पजालानिपुष्पलतासमूहाएवगृहाणि एवंविधेसुखसाधनसंदेहेसत्यपियाकामिनीभोगेच्छावतीनभवतिसाहता अनि



वनान्यनेकरूपाणिजंगलानितटानिच ॥ सरांसिगुल्मजालानिमृगादिगहनानिच ॥ ५४ ॥ सममेवसमस्नेहौसमेतौतौस्थितावुभौ ॥ समसत्वौसमोत्साहौचरंतौतस्थतुःसह ॥ ५५ ॥ आ नर्चतुःपितृन्देवान्बुभुजातेचराघव ॥ इदंग्राह्यमिदंनेतिविकल्पकलनांमनः ॥ ५६ ॥ नाजहा रतयोरामवात्येवविबुधाचलम् ॥ विचेरतुस्तौसुहृदौक्वचिद्धूलिविधूसरौ ॥ ५७ ॥ क्वचिच्चंदनदि ग्धांगौक्वचिद्भस्मानुरंजितौ ॥ दिनैःकतिपयैरेवंसमचित्ततयातया ॥ ५८ ॥ सत्वोदारतयाचै वराजाकुंभवदाबभौ ॥ अथतंसुरगर्भाभंचूडालासाशिखिध्वजम् ॥ ५९ ॥ दृष्ट्वाशोभामुपगतं चिंतयामासभामिनी ॥ ६० ॥ चूडालोवाच ॥ निजःपतिरुदारात्मानिराधिश्चनवंवयः ॥ गृ हाणिपुष्पजालानिसाहतायानकामिनी ॥ ६१ ॥ समुज्झतायथाप्राप्तमपिवेद्यविदासदा ॥ अनिं द्यंसमुदारार्थंकिंतुज्ज्ञेनकृतंभवेत् ॥ ६२ ॥ तत्किंचिद्रचयाम्याशुप्रपंचंप्रज्ञयानवम् ॥ येनायंभूप तिर्भर्तारमेतमायिमानदः ॥ ६३ ॥



षिद्धसुखत्यागात् ॥ ६१ ॥ समुज्झतेति ॥ यथाप्राप्तमपिअनिंद्यंस्वमात्मीयंउदारार्थंमहत्सुखंसमुज्झतात्यजतावेद्यविदावेद्यंब्रह्मप्राप्तवताज्ज्ञे नकिंतुकृतंभवेत्किंवाप्रयोजनंसाधितंस्यात्नकिंचिदित्यर्थः न्यायसुखत्यागोऽनर्थएवस्यातइतिपूर्वोक्तएवार्थः ॥ ६२ ॥ तदिति ॥ तत्तस्मा

त्कारणात्प्रज्ञयास्वप्रज्ञयाविशेषेणनवंप्रपंचंकिंचिद्रचयामिकल्पयामि । येनकल्पितप्रपंचहेतुनाअयंभर्तामयिरमेत ॥ ६३ ॥ इतिसंचिंत्यचूडालापतिंप्राहेत्यन्वयः ॥ ६४ ॥ चैत्रेतिश्लोकपंचकंवाक्यम् ॥ ६५ ॥ ६६ ॥ ध्यानपुष्पाभ्यांसमाधौध्यानेनअसमाधौपुष्पेणचक्रीडता पुष्पशब्दोजातिवाचीअतोद्विवचनम् ॥ ६७ ॥ ६८ ॥ ६९ ॥ शरन्मुखपयोदवत् यथाशरदादौपयोदोमेघःतरसाव्योमप्लवतेलघुत्वात्तद्वदित्यर्थः

इतिसंचिंत्यचूडालाकुंभवेषधरापतिम् ॥ प्राहकाननमध्यस्थाकोकिलंकोकिलायथा ॥ ६४ ॥ कुंभउवाच ॥ चैत्रमासस्यशुक्लोऽयंप्रतिपद्दिवसोमहान् ॥ अद्यास्थानंमहारंभंस्वर्गेभवतिवैहरेः ६५ संनिधानंमयातत्रकर्तव्यंपितुरग्रतः ॥ यथास्थिताहिनियतिर्नसंत्याज्याकदाचन ॥ ६६ ॥ प्रतिपालयितव्यंतत्त्वयेहचरतावनौ ॥ क्रीडताध्यानपुष्पाभ्यांसमुद्वेगमगच्छता ॥ ६७ ॥ आगच्छामिदिनांतेऽद्यनिर्विकल्पंनभस्थलात् ॥ स्वर्गादतितरामेवत्वत्संगोममतुष्टये ॥ ६८ ॥ इत्युक्त्वामंजरींकुंभोददौमित्रायकौसुमीम् ॥ प्रीतयेस्वामिवत्प्रीतिंकांतांनंदनवृक्षजाम् ॥ ६९ ॥ आगंतव्यंत्वयाशीघ्रमेवंवदतिभूपतौ ॥ पुप्लुवेतरसाव्योमशरन्मुखपयोदवत् ॥ ७० ॥ शिखिध्वजदृशामंतेव्योम्निकुंभवपुर्जहौ ॥ शांतावर्तेववारिश्रीर्मुग्धास्वंरूपमाययौ ॥ ७१ ॥ प्राप्यमंजरिताकारंकल्पवृक्षोपमंपुरम् ॥ अंतःपुरमदृश्येवविवेशललनाकुलम् ॥ ७२ ॥

॥ ७० ॥ शिखिध्वजेति ॥ दृशोनयनरश्मयः शांतावर्तेववारिश्रीर्यथावारिसमृद्धिःआवर्तशांतौस्वरूपमादत्तेतद्वत् ॥ ७१ ॥ प्राप्येति ॥ मंजरिताकारंमंजर्यःकृतामंजरिताःताद‍ृशाआकाराःप्रासादादिसन्निवेशायस्मिन्नतएवकल्पवृक्षोपमम् ॥ ७२ ॥

॥ ७३ ॥ तत्रेति ॥ तत्रशिखिध्वजस्यपुरोभागेचचूडालाअखिन्नमानसैवकलनयाशुमुखंम्लानद्युतिचकार श्यामारात्रिःसायथाइंदुंसनीहा
रंकरोति अंबुजंवाखिन्नंमुकुलितंकरोतितद्वत् ॥ ७४ ॥ ७५ ॥ ७६ ॥ संतइति ॥ पद्माजलार्द्रतांयथाहिपद्माःकमलानिजलेवसंतोऽपितज्ज
न्यामार्द्रतांनाश्रयंतितद्वत् ॥ ७७ ॥ ७८ ॥ यावदिति ॥ अवस्थासुसुखदुःखदशासुयेयावद्देहंसमचित्ततयैवनिर्विकारचित्ततयैवकर्मेंद्रियै





राजकार्याण्यशेषाणितत्रसंपाद्यसत्वरम् ॥ शिखिध्वजस्यपुरतःकुंभरूपधरापतत् ॥ ७३ ॥ तत्रम्ला
नद्युतिमुखंचकाराखिन्नमानसा ॥ इंदुंसनीहारमिवश्यामाखिन्नमिवांबुजम् ॥ ७४ ॥ तंदृष्ट्वाताद्दशाका
रंसमुत्तस्थौशिखिध्वजः ॥ बभूवखिन्नचेताश्चसमुवाचेदमादरात् ॥ ७५ ॥ देवपुत्रनमस्तेऽस्तुविमना
इवलक्ष्यसे ॥ कुंभसंत्यज्यसंरंभमिदमासनमास्यताम् ॥ ७६ ॥ संतोविदितवेद्यायेतेहिहर्षविषादजा
म् ॥ नाश्रयंतिस्थितिंस्वस्थाःपद्माइवजलार्द्रताम् ॥ ७७ ॥ वसिष्ठउवाच ॥ तेनक्ष्मापतिनेत्युक्तेकुंभ
आहासनेविशन् ॥ गिराविषण्णयाशीर्णवंशस्वनसमानया ॥ ७८ ॥ कुंभउवाच ॥ यावद्देहमवस्था
सुसमचित्ततयैवये ॥ कर्मेंद्रियैर्नतिष्ठंतिनतेतत्त्वविदःशठाः ॥ ७९ ॥ येह्यतत्त्वविदोमूढाराजन्बालत
यैवते ॥ अवस्थाभ्यःपलायंतेगृहीताभ्यःस्वभावतः ॥ ८० ॥ यावत्तिलंतथातैलंयावद्देहंतथादशा ॥
योनदेहदशामेतिसच्छिनत्त्यसिनांबरम् ॥ ८१ ॥



र्नतिष्ठंतितेतत्त्वविदोनभवंतिकिंतुशठावंचकाएव ॥ ७९ ॥ येपुनरतत्त्वविदोमूढाःसंतितेबालतयैवहेतुनास्वभावतोगृहीताभ्योऽवस्थाभ्यःसु
खदुःखदशाभ्यःपलायंते अवस्थाभिर्विकारंनीयंतइत्यर्थः ॥ ८० ॥ यावदिति ॥ तिलेषुसकलेषुतैलमिवदेहेष्वपिसर्वेषुसुखदुःखदशास्त्येवअ

तोयोदेहदशांनैतिनवाप्नोतिसःअसिनाअंबरंछिनत्ति अंबरच्छेदकवद्देहदशारहितोऽपिनास्तीत्यर्थः ॥ ८१ ॥ एषइति ॥ योगात्समाधेर्हेतो
श्चेतसोयत्साम्यंनिर्विकारताएषएवानुत्तमोदेहदशादुःखपरित्यागःकर्मेंद्रियस्थितेः साम्येतुदेहदशादुःखपरित्यागइतिनोच्यतेज्ञानिनामपितद
संभवात् ॥८२॥ यावदिति ॥ तस्माद्विजानतापुरुषेणयावद्देहंदेहदशासुयथाचारंस्ववर्णाश्रमोचिताचारानुसारेणकर्मेंद्रियैरेवसहस्थातव्यंन
तुबुद्धींद्रियैःबुद्धींद्रियप्रवृत्तेर्बुद्धिपूर्वकत्वात्निवृत्तौनिवृत्तेःकर्मेंद्रियाणांत्वबुद्धिपूर्वमपिप्रवृत्तेःबुद्धिनिवृत्तौनिवृत्त्यसंभवात् ॥ ८३ ॥ परमे

एषदेहदशादुःखपरित्यागोह्यनुत्तमः ॥ यत्साम्यंचेतसोयोगान्नतुकर्मेंद्रियस्थितेः ॥ ८२ ॥ यावद्देहं
यथाचारंदशास्वंगविजानता ॥ कर्मेंद्रियैर्हिस्थातव्यंनतुबुद्धींद्रियैःक्वचित् ॥ ८३ ॥ परमेष्ठिप्रभृतयः
सर्वएवोदिताशयाः ॥ देहावस्थासुतिष्ठंतिनियतेरेषनिश्चयः ॥ ८४ ॥ अज्ञतत्त्वज्ञभूतानिदृश्यजात
मिदंहियत् ॥ तत्सर्वमेवनियतिंधावत्यंबुयथांबुधिम् ॥ ८५ ॥ तज्ज्ञाबुद्ध्यादिसाम्येनपाण्यादिचलने
नच ॥ नियतिंयापयंतीमांयावद्देहमखंडिताम् ॥ ८६ ॥ अज्ञास्तुसर्वक्षोभेनसुखदुःखदशाहताः ॥ निय
तिंयापयंत्यंगदेहलक्षैर्विखंडिताम् ॥८७॥ शिखिध्वजउवाच ॥ एवंस्थितेमहाभागकथमुद्वेगमीदृशम् ॥
लब्धवानसिदेवोऽपिवदवेद्यविदांवर ॥ ८८ ॥

ष्ठीति ॥ परमेष्ठिप्रभृतयोब्रह्मादयः ॥ ८४ ॥ अज्ञेति ॥ अज्ञतत्त्वज्ञभूतानिअज्ञाःतत्त्वज्ञाश्चप्राणिनःतर्ह्यज्ञतत्त्वज्ञयोः कोविशेषइत्याशंक्यश्लो
कद्वयेनविशेषंदर्शयन्नाह ॥ ८५ ॥ तज्ज्ञाइति ॥ तज्ज्ञास्तावद्बुद्ध्यादिसाम्येनबुद्धींद्रियादिसाम्येनपाण्यादिचलनेनचकर्मेंद्रियाणामायासे
नचयावद्देहंतावद्देहपर्यंतमेवनियतिमखंडितांयापयंति ॥ ८६ ॥ अज्ञास्तुसर्वेंद्रियक्षोभेणसुखदुःखदशाहताःसंतोदेहलक्षैरनंतैःदेहैर्नियतिं
विखंडितांविविधंखंडितांयापयंतीतिशेषः ॥ ८७॥ ८८ ॥

कुंभउवाच ॥ कथयामितवाशेषंस्वर्गेयद्वृत्तमद्यमे ॥ सुहृद्यावेदितंदुःखंपरमायातितानवम् ॥ ८९ ॥
अहंतावदितोयातोभवतेपुष्पमंजरीम् ॥ दत्वागगनमुल्लंघ्यसंप्राप्तश्चत्रिविष्टपम् ॥ ९० ॥ ततःपित्रा
सहेंद्रस्यसभास्थानेयथाक्रमम् ॥ स्थित्वास्थायतदोत्थानकालेपित्राविसर्जितः ॥ ९१ ॥ इहागंतुमहं
स्वर्गेत्यक्त्वासंप्राप्तवान्नभः ॥ दिवाकरहयैःसाकंवहाम्यनिलवर्त्मनि ॥ ९२ ॥ अथैकत्रगतोभानुरेके
नान्येनवर्त्मना ॥ आगच्छाम्यहमाकाशसागरात्पतिताकृतिः ॥ ९३ ॥ अथाग्रेवारिपूर्णानांमेघानां
मध्यवर्त्मना ॥ अपश्यन्मुनिमायांतमहंदुर्वाससंजवात् ॥ ९४ ॥ कृत्वातस्यनमस्कारमुक्तंखेवहता
मया ॥ मुनेलीलाभ्रवस्त्रस्त्वमभिसारिकयासमः ॥ ९५ ॥ इत्याकर्ण्यमुमोचासौमयिमानदशापकम् ॥
स्तनकेशवतीकांताहावभावविकारिणी ॥ ९६ ॥ गच्छानेनदुरुक्तेनरात्रौयोषाभविष्यसि ॥ इतिश्रुत्वा
शुभंवाक्यमुत्थितंजर्जरद्विजात् ॥ ९७ ॥ विमृशामिमनाग्यावत्तावदंतर्हितोमुनिः ॥ इत्युद्विग्नमनाः
साधोप्राप्तोऽहंनभसस्तलात् ॥ ९८ ॥ अतिवाह्यंदिनांतेषुस्त्रीत्वमेकंमयाकथम् ॥ गुरुदेवद्विजातीनांल
ज्जापरवशात्मना ॥ ९९ ॥ कथमग्रेमयासम्यग्वस्तव्यंयामिनीस्त्रिया ॥ १०० ॥ शिखिध्वजउवाच ॥
परिदेवनयाकार्यंदेवपुत्रनविद्यते ॥ यदायातितदायातुदेहस्यात्मानलिप्यते ॥ १ ॥ यदित्वमत्रविद्वा
न्सन्नखेदार्होऽपिखिद्यसे ॥ तदान्येषामुपायःस्यात्कइवागमभूषण ॥ २ ॥

॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ पतामीवेति ॥ लज्जयैवतावत्अंगयिष्टिभिः तनुतरैरंगैः पतामीवभूमावितिशेषः स्फुरामीवद्रवामीव वनेबंधुमित्रादिर हितेमध्येनतुजन्मादौस्त्रीत्वंव्रजामि ॥ ७ ॥ ८ ॥ आगुल्फमिति ॥ अंबराणिबाह्यानिआभ्यंतराणिचानेकानीतिबहुवचनं इमेनितंबजघ

वसिष्ठउवाच ॥ तावेवमादिभिर्वाक्यैरन्योन्याश्वासनंस्वयम् ॥ कृत्वास्थितौवनेस्निग्धौसुहृदौखेदि नौयथा ॥ ३ ॥ अथार्कोऽप्ययस्यकुंभस्यस्त्रीत्वमुत्पादयन्निव ॥ जगामास्तंजगद्दीपोदीपः स्नेहक्षयादिव ४ सुहृदौतावदुत्थायसंध्यामुद्यन्निशाकरम् ॥ वंदयित्वातथाकृत्वाजप्यंगुल्मांतरेस्थितौ ॥ ५ ॥ ततःकुं भःशनैस्तत्रस्त्रैणमभ्याहरद्वपुः ॥ शिखिध्वजंपुरःसंस्थंप्रोवाचगलदक्षरम् ॥ ६ ॥ पतामीवस्फुरामीव द्रवामीवांगयष्टिभिः ॥ लज्जयैववनेराजन्मध्येस्त्रीत्वंव्रजाम्यहम् ॥ ७ ॥ पश्येमेपरिवर्धंतेराजन्ममशिरो रुहाः ॥ पश्येमौममजायेतेप्रोन्मुखावुरसिस्तनौ ॥ ८ ॥ आगुल्फमवलंबानिसंपद्यंतेंऽबराणिमे ॥ संवि दानुभवाम्येतंनितंबजघनेत्विमे ॥ ९ ॥ वसिष्ठउवाच ॥ विपिनेकुंभइत्युक्त्वातूष्णींखिन्नोबभूवह ॥ रा जापिचतमालोक्यखिन्नचित्तोऽभ्युवाचह ॥ १० ॥ शिखिध्वजउवाच ॥ साधोविदितवेद्यस्त्वंजानासि नियतेर्गतिम् ॥ अवश्यभाविन्यर्थेऽस्मिन्माखिन्नहृदयोभव ॥ ११ ॥ कुंभउवाच ॥ एवमस्त्वनुतिष्ठा मिनृपतेस्त्रीत्वमात्मनः ॥ नखेदमनुगच्छामिनियतिःकेनलंघ्यते ॥ १२ ॥

नेनितंबःस्त्रीकट्याःपश्चाद्भागःतेउभेअपिसंविदाअंतरनुभवामि ॥ अत्रनितंबस्यजघनस्यचमायाकल्पितत्वेनदेहारंभकत्वाभावात्प्राण्यंगत्वं नास्तीत्येकवद्भावोनकृतइत्यनुसंधेयम् ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥

॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ यद्येवमिति ॥ श्लोकचतुष्टयंवाक्यम् ॥ २२ ॥ राकापूर्णचंद्रयुक्त्या पूर्णिमायाः पूर्वस्मिन्नहनि जन्यत्रोजन्यावरस्यस्निग्धाः संबंधबांधवास्तांस्त्रायतेपालयतिवांछितार्थसाधनेनेतिजन्यत्रशब्देनविवाहउच्यते नौ



इतिनिर्णीयतौखेदंतंनीत्वातनुतामिव ॥ एकतल्पेनिशांतूष्णींनीतवंतौचिरेणतौ ॥ १३ ॥ अथप्रभातेतत्स्त्रैणंवपुरुत्सृज्ययौवनम् ॥ बभूवकुंभःकुंभाभःकुचप्रोज्झितमूर्तिमान् ॥ १४ ॥ इतिसाराजमहिषीचूडालावरवर्णिनी ॥ कुंभत्वमाश्रिताभर्तुःपश्चात्स्त्रीत्वमुपागता ॥ १५ ॥ विजहारवनांतेषुकुमारीधर्मिणीनिशि ॥ कुंभरूपधराचाह्निभर्त्रामित्रेणसंयुता ॥ १६ ॥ ततःकतिपयेष्वेवंगतेषुदिवसेषुसा ॥ इदंप्रोवाचभर्तारंकुंभरूपधरासती ॥ १७ ॥ राजन्राजीवपत्राक्षममेदंवचनंशृणु ॥ निशायांप्रत्यहंतावद्भवाम्येवाहमंगना ॥ १८ ॥ तदिच्छाम्यंगनाधर्मेनिपुणीकर्तुमीदृशम् ॥ भर्त्रेकस्मैचिदात्मानंविवाहेनददाम्यहम् ॥ १९ ॥ तद्भवानेवमेभर्तारोचतेभुवनत्रये ॥ गृहाणमांविवाहेनभार्यांतेनिशिसर्वदा ॥ २० ॥ शिखिध्वजउवाच ॥ कृतेनानेनकार्येणनशुभंनाशुभंसखे ॥ पश्यामितन्महाबुद्धेयथेच्छसितथाकुरु ॥ २१ ॥ कुंभउवाच ॥ यद्येवंतन्महीपाललग्नमद्यैवशोभनम् ॥ राकेयंश्रावणस्यास्यह्यःसर्वंगणितंमया ॥ २२ ॥ रात्रावुद्द्योतितेचंद्रेपरिपूर्णकलामले ॥ जन्यत्रोनौमहाबाहोद्वयोरेवभविष्यति ॥ २३ ॥



आवयोरेवविवाहोभविष्यति ॥ २३ ॥

॥ २४ ॥ २५ ॥ तथेति ॥ जन्यत्रसंभारंविवाहोपयुक्तरत्नकुसुमादिद्रव्यसंभारं महामित्रेअतिप्रियसखौ ॥ २६ ॥ पूजयामासतुरिति ॥ यथाक्रियाफलेऽनिच्छौक्रियायाःसत्कर्मणःफलेयथाइच्छारहितौतथाक्रियात्यागेऽप्यनिच्छौतत्रवैराग्याक्रियाफलेनिच्छौ लोकसंग्रहार्थंक्रिया

उत्तिष्ठात्मविवाहार्थेकुर्वन्कमललोचन ॥ राजंश्चंदनपुष्पादिसंभारंरत्नसंयुतम् ॥ २४ ॥ वसिष्ठउवाच ॥ इत्युक्त्वाकुंभउत्थायसहतेनमहीभृता ॥ कुसुमावचयंचक्रेतथारत्नादिसंचयम् ॥ २५ ॥ तथाजन्यत्रसंभारंकृत्वाकांचनकंदरे ॥ ययतुस्तौमहामित्रेस्नातुंमंदाकिनींनदीम् ॥ २६ ॥ पूजयामासतुःस्नातौतत्रदेवपितॄन्मुनीन् ॥ यथाक्रियाफलेऽनिच्छौक्रियात्यागेतथैवतौ ॥ २७ ॥ कल्पवृक्षदुकूलानिपरिधायसितानितौ ॥ फलानिभुक्त्वाजन्यत्रस्थानमाययतुःक्रमात् ॥ २८ ॥ एतावताथकालेनरविरस्ताचलंययौ ॥ सांध्येकर्मणिनिर्वृत्तेवधूत्वंकुंभआययौ ॥ २९ ॥ उवाचेदंचहेनाथत्वंमांभूषयभूषणैः ॥ क्रमेणाग्निंचसंज्वाल्यमत्पाणिग्रहणंकुरु ॥ ३० ॥ अहंमदनिकानामभार्यातेपद्मलोचन ॥ एवमुक्तोमहीपालस्तत्सर्वंसमवर्तयत् ॥ ३१ ॥ एवंमहेंद्रदयाँताबुभौकुंभशिखिध्वजौ ॥ स्वयंविवाहिताविष्टौसंपन्नौस्निग्धदंपती ॥ ३२ ॥ विलेसतुर्विचित्रासुप्रत्यहंवनराजिषु ॥ प्रपक्वफलभारासुपुष्पपल्लविनीषुच ॥ ३३ ॥ दिनैस्त्रिभिस्त्रिभिर्गत्वानिद्रांयातेशिखिध्वजे ॥ चूडालाराजकार्याणिकृत्वास्वान्याययौपुनः ॥ ३४ ॥

त्यागे ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ तेमदनस्यमदनतुल्याय ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥

॥ ७९ ॥

ततोयातेषुमासेषुशनैःकतिपयेषुसा ॥ चूडालाचिंतयामासदेवपुत्रकरूपिणी ॥ ३५ ॥ कुंभउवाच ॥ सांप्रतंभोगभारेणपरीक्ष्येऽहंशिखिध्वजम् ॥ माकदाचनचेतोऽस्यभोगेषुरतिमेष्यति ॥ ३६ ॥ वसिष्ठउवाच ॥ इतिसंचिंत्यचूडालासाययौविपिनावनौ ॥ आगतंदर्शयामाससंसुराप्सरसंहरिम् ॥ ३७ ॥ इंद्रमभ्यागतंदृष्ट्वापरिवारसमन्वितम् ॥ यथाचपूजयामासवनसंस्थःशिखिध्वजः ॥ ३८ ॥ शिखिध्वजउवाच ॥ आत्मनःकिंकृतादूरादभ्यागमकदर्थना ॥ देवराजयथावन्मेप्रसादाद्वक्तुमर्हसि ॥ ३९ ॥ इंद्रउवाच ॥ इमेवयमिहानीतास्त्वद्गुणातिशयेनच ॥ हृदिलग्नेनसूत्रेणखगावनगताइव ॥ ४० ॥ उत्तिष्ठस्वर्गमागच्छतत्रसर्वेत्वदुन्मुखाः ॥ त्वद्गुणश्रवणाश्चर्याःस्थितादेवांगनागणाः ॥ ४१ ॥ आकल्पंविविधाभोगास्त्वयाविबुधसद्मनि ॥ जीवन्मुक्तेनभोक्तव्यास्तेनत्वामहमागतः ॥ ४२ ॥ शिखिध्वजउवाच ॥ सर्वंस्वर्गसमाचारंवेद्मिदेवाधिनायक ॥ किंतुसर्वत्रमेस्वर्गोनियतोनतुकुत्रचित् ॥ ४३ ॥ सर्वत्रैवतुतुष्यामिसर्वत्रैवरमेप्रभो ॥ अवांछनत्वान्मनसःसर्वत्रानंदवानहम् ॥ ४४ ॥ नियतंकंचिदेकत्रस्थितंस्वर्गकमीदृशम् ॥ शक्रगंतुंनजानामित्वदाज्ञांनकरोम्यहम् ॥ ४५ ॥ वसिष्ठउवाच ॥ एवमुक्तेक्षितिभृतासुरवृंदमशेषतः ॥ कल्याणंतेऽस्तुकुंभेतिवददंतर्धिमाययौ ॥ ४६ ॥

॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥

तांमायांशममानीयचूडालासमचिंतयत् ॥ दिष्ट्याभोगेच्छयानायंह्रियतेवसुधाधिपः ॥ ४७ ॥ शांतः समसमाभोगएवंशक्रसमागमे ॥ असंभ्रममहेलंचकृतवान्व्यावहारिकम् ॥ ४८ ॥ भूयएवप्रपंचेनवि मृशाम्येवसादरम् ॥ रागद्वेषप्रधानेनकेनचिद्बुद्धिहारिणा ॥ ४९ ॥ इतिसंचिंत्यसारात्राविंदावभ्युदि तेवने ॥ संध्याजप्यपरेनद्यास्तीरसंस्थेशिखिध्वजे ॥ ५० ॥ संजातकलनागेहंनीरंध्रापुष्पगुच्छकैः ॥ शु द्धांतंवनदेवीनांप्रविश्यमदनान्विता ॥ ५१ ॥ तत्रसंकल्पितेपुष्पशयनेमाल्यमालिना ॥ कंठेसंकल्पि तेकांतंस्वागमादायसंस्थिता ॥ ५२ ॥ आगत्यान्विष्यकुंजांतःसंध्यांतेसशिखिध्वजः ॥ मिथुनंतद्द्द शाथमिथःप्रहसिताननम् ॥ तदालोक्याविकारेणचेतसालंतुतोषसः ॥ ५३ ॥ अहोस्थितौसुखंखिंगावि त्याहचशिखिध्वजः ॥ तिष्ठतोंऽगयथाकामंसुखंखिंगौयथासुखम् ॥ ५४ ॥ विघ्नंमाकुरुतंभीतावित्युक्त्वा निर्जगामसः ॥ ततोमुहूर्तमात्रेणप्रपंचंतमुपेत्यसा ॥ ५५ ॥ निर्ययौदर्शयंतीस्वंरतियुद्धाकुलंवपुः ॥ उ पविष्टंददर्शैनंनृपंहेमाशिलातले ॥ ५६ ॥ समाधिसंस्थमेकांतेमनाग्विकसितेक्षणम् ॥ तत्प्रदेशमुपागम्यल ज्जावनमिताननना ॥ ५७ ॥ तूष्णीमासीत्क्षणंखिन्नाम्लानामदनिकांगना ॥ क्षणाच्छिखिध्वजोध्याना द्विरतस्तामुवाचह ॥ ५८ ॥ प्रसन्नोमधुरंवाक्यमिदमक्षुब्धयाधिया ॥ तन्विकिंशीघ्रमेवत्वंविघ्नितानंद मागता ॥ ५९ ॥ भूयस्तोषयितुंगच्छकांतंप्रणयवानिभिः ॥ परस्परेसितस्नेहोदुर्लभोहिजगत्त्रये ॥ ६० ॥

मदनिकाउवाच ॥ एवमेषमहाभागस्त्रीस्वभावोहिचंचलः ॥ कामोह्यष्टगुणःस्त्रीणानकोपंकर्तुमर्हसि ६१
अबलास्त्रीतथाबालामूढाहमपराधिनी ॥ क्षंतुमर्हसिनाथत्वंक्षमावंतोहिसाधवः ॥ ६२ ॥ शिखिध्वजउ
वाच ॥ मन्युर्ममनबालेहिविद्यतेखइवद्रुमः ॥ केवलंसाधुनिंद्यत्वान्नेच्छामित्वामहंवधूम् ॥ ६३ ॥ वसि
ष्ठउवाच ॥ एवंसमतयातत्रस्थितेतस्मिन्शिखिध्वजे ॥ चूडालाचिंतयामासतत्साम्येनोदिताशया६४
अहोबतपरंसाम्यंभगवानयमागतः ॥ नैनंहरंतिभोगाशानमहत्योऽपिसंपदः ॥ ६५ ॥ आत्मवृत्तांतम
खिलंतदेनंस्मारयाम्यहम् ॥ त्यक्त्वामदनिकारूपंचूडालैवभवाम्यहम् ॥ ६६ ॥ वसिष्ठउवाच ॥ इति
संचिंत्यचूडालाचूडालावपुराददे ॥ तांददर्शानवद्यांगींपुरःप्रणयपेशलाम् ॥ ६७ ॥ अथतांदयितांदृष्ट्वा
विस्मयोत्फुल्ललोचनः ॥ शिखिध्वजउवाचेदमाश्चर्याकुलयागिरा ॥ ६८ ॥ कात्वमुत्पलपत्राक्षिकुतः
प्राप्तासिसुंदरि ॥ किमिहासिकियत्कालंकिमर्थमिहतिष्ठसि ॥ ६९ ॥ अंगेनव्यवहारेणस्मितेनानुनयेन
च ॥ ममजायाविलासेनचूडालेवोपलक्ष्यसे ॥ ७० ॥ चूडालोवाच ॥ एवमेवप्रभोविद्धिचूडालास्मिनसं
शयः ॥ अकृत्रिमेणदेहेनलब्धोऽस्यद्यमयास्वयम् ॥ ७१ ॥ कुंभादिदेहनिर्माणैस्त्वांबोधयितुमेवमे ॥
प्रपंचशतशाखात्वमिहयातोवनांतरे ॥ ७२ ॥ बुद्धिविदितवेद्यस्त्वंध्यानेनैतदखंडितम् ॥ सर्वंपश्यसि
तत्त्वज्ञध्यानेनाथावलोकय ॥ ७३ ॥

वसिष्ठउवाच ॥ अथचूडालयेत्युक्तोबध्वापरिकरंनृपः ॥ आत्मोदंतमशेषेणध्यानेनालमवैक्षत ॥ ७४ ॥
आस्वराज्यपरित्यागाच्चूडालादर्शनावधि ॥ सर्वमालोक्यभूपालोविररामसमाधितः ॥ ७५ ॥ विस्ता
र्यंतरसाबाहूपुलकोज्वलतांगतौ ॥ आलिलिंगचिरंकांतांसमाधिविरतोनृपः ॥ ७६ ॥ घनानंदंक्षणं
स्थित्वातूष्णींप्रणयपेशलम् ॥ तामथांकंसमारोप्यप्रोवाचसशिखिध्वजः ॥ ७७ ॥ एवंदुरुत्तरादस्मा
त्संसारकुहरादहम् ॥ उत्तारितोययायुक्त्यासाहिकेनोपमीयते ॥ ७८ ॥ मोहादनादिगहनादनंतविष
मादपि ॥ पतितव्यवसायिन्यस्तारयंतिकुलांगनाः ॥ ७९ ॥ निरिच्छायाःप्रयातायाःपारंसंसारवा
रिधेः ॥ कथमस्योपकारस्यकरिष्येतेप्रतिक्रियाम् ॥ ८० ॥ चूडालोवाच ॥ देवशुष्कक्रियाजालपरेत्व
य्याकुलात्मनि ॥ भूयोभूयोभृशमहंत्वदर्थंदुःखिताभवम् ॥ ८१ ॥ तेनत्वदवबोधान्मेस्वार्थएवोपपा
दितः ॥ मयातत्रकथंदेवःकरोतिममगौरवम् ॥ ८२ ॥ तास्तुच्छतृष्णाकलनास्ताःसंकल्पकुकल्पनाः ॥
त्वयिनाद्यावलोक्यंतेदेवव्योम्नीवपर्वताः ॥८३॥ शिखिध्वजउवाच ॥ निरीहोऽस्मिनिरंशोऽस्मिनभः
स्वच्छोऽस्मिनिःस्पृहः ॥ शांताहमर्थरूपोऽस्मिचिरायाहमहंस्थितः ॥ ८४ ॥ अकिंचिन्मात्रचिन्मात्र
निष्ठोऽस्मिस्वस्थआस्थितः ॥ नतुष्टोऽस्मिनखिन्नोऽस्मिनायमस्मिनचेतरत् ॥ ८५ ॥

तेजोबिंबाच्चंद्रमंडलादेःप्रयातेननिर्गतेनभित्तौकुड्यादावाश्रयांतरेअपतितेनक्षयातिशयमुक्तेननित्येननिरतिशयेनचप्रकाशेनसमोऽस्मि ८६ यदिति ॥ अस्मीत्येतदव्ययमहमित्यर्थे । तत्प्रसिद्धंयद्वस्त्वस्ति अहंतदेवास्मितत्तद्वस्तुवक्तुंनशक्नोमि नामजात्याद्यभावात् ॥ ८७ ॥ ८८ ॥



॥ ८१ ॥

तेजोबिंबात्प्रयातेनभित्तावपतितेनच ॥ क्षयातिशयमुक्तेनप्रकाशेनास्म्यहंसमः ॥ ८६ ॥ यदस्तितत्तदेवास्मिवक्तुंशक्नोमिनैवतत् ॥ तरंगतरलापांगेगुरुस्त्वंमेनमोऽस्तुते ॥ ८७ ॥ प्रसादेनविशालाक्ष्यास्तीर्णोऽस्मिभवसागरात् ॥ सर्वातीतःसर्वगश्चखमिवायमहंस्थितः ॥ ८८ ॥ चूडालोवाच ॥ एवंस्थितेमहासत्वप्राणेशहृदयप्रियम् ॥ किमिदानींप्रभोब्रूहिरोचतेतेमहामते ॥ ८९ ॥ शिखिध्वजउवाच ॥ प्रतिषेधंनजानामिनजानाम्यभिवांछितम् ॥ यदाचरसितन्वित्वंकदाचिद्देह्मितत्तथा ॥ ९० ॥ यदेवकिंचिज्जानासितदेवकुरुसुंदरि ॥ तदेवधारयिष्यामिप्रतिबिंबंयथामणिः ॥ नस्तौमिनचनिंदामियथेच्छासितथाकुरु ॥ ९१ ॥ चूडालोवाच ॥ यद्येवंतन्महाबाहोसमाकर्णयमन्मतम् ॥ आकर्ण्यजीवन्मुक्तात्मंस्तदेवाहर्तुमर्हसि ॥ ९२ ॥ सर्वत्रैक्यावबोधेनमौर्ख्यक्षयभयान्विताः ॥ निरिच्छास्तावदाकाशविशदाःसंस्थितावयम् ॥ ९३ ॥ तस्मादाद्यंतमध्येषुयेवयंपुरुषोत्तम ॥ मौर्ख्यमेकंपरित्यज्यगत्वातद्रूपतांपुनः ॥ ९४ ॥ राज्येनप्रकृतेनेमंकालंनीत्वाक्रमेणवै ॥ विदेहतांप्रयास्यामःप्रभोकालेनकेनचित् ॥ ९५ ॥

॥ ८१ ॥

॥ ८९ ॥ ९० ॥ ९१ ॥ ९२ ॥ ९३ ॥ ९४ ॥ ९५ ॥

स्वएवनगरेराजाभवत्वंस्वासनेस्थितः ॥ उत्तमाहंतुकामानांमहिषीतेभवाम्यहम् ॥ ९६ ॥ इदंसुख
मिदंनेतिमिथुनेक्षयमागते ॥ सममेवपदेशांतेतिष्ठत्वंविगतेषणः ॥ ९७ ॥ शिखिध्वजउवाच ॥ युक्त
मुक्तंविशालाक्षित्वयैतत्समयाधिया ॥ कोवार्थःकिलराज्यस्यग्रहेत्यागेऽपिवाभवेत् ॥ ९८ ॥ सुख
दुःखदशाचिंतांत्यक्त्वाविगतमत्सरम् ॥ यथासंस्थानमेवेमौतिष्ठावःस्वच्छमागतौ ॥ ९९ ॥ वसिष्ठ
उवाच ॥ अथोत्थायतुचूडालारत्नकुंभंपुरःस्थितम् ॥ कांतंसंकल्पयामासपूर्णसप्ताब्धिवारिभिः ॥१००॥
तेनमंगलकुंभेनतंपूर्वाभिमुखंस्थितम् ॥ भार्याभर्तारमेकांतेस्वराज्येऽभिषिषेचसा ॥ १ ॥ तथासने
समास्थाप्यमहादेवींपदेतथा ॥ अभिषिक्तांनृपःकृत्वाचूडालामाहतांप्रियाम् ॥ २ ॥ शिखिध्वजउ
वाच ॥ प्रियेकमलपत्राक्षिक्षणात्संकल्पसंभवम् ॥ महाविभवमुद्दामंसैन्यमाहर्तुमर्हसि ॥ ३ ॥ वसिष्ठ
उवाच ॥ इतिकांतवचःश्रुत्वाचूडालावरवर्णिनी ॥ सैन्यंसंकल्पयामासनीरंध्रीकृतकाननम् ॥ ४ ॥
तत्रगंधद्विपवरंकृतपार्थिवमंडनम् ॥ रक्षितंहृष्टसामंतैरारूढौनृपदंपती ॥ ५ ॥ ततःशिखिध्वजोरा
जामहिष्यासममिष्टया ॥ पदातिरप्यसंबाधंकर्षन्नतिबलोबलम् ॥ ६ ॥ तस्मान्महेंद्रशैलेंद्राच्चलितः
स्वांपुरींप्रति ॥ प्रापाल्पेनैवकालेनस्वांपुरींस्वर्गशोभनाम् ॥ ७ ॥ पुरीस्थास्तस्यसामंतास्तदागमन
मादृताः ॥ विविदुर्जयशब्देननिर्जग्मुश्चोदिताशयाः ॥ ८ ॥

॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ ततःपरंतावन्योन्यानुमत्यास्वराज्योन्मुखौसंकल्पसिद्धेनसर्वतीर्थजलेनपरस्परमभिषिक्तौमहताराज्यवैभवेन स्वपुरींप्रविश्यदशवर्षसहस्राणिसाम्राज्यसुखमनुभूयभूयोजन्मविमुक्तांविदेहमुक्तिंजग्मतुरितिकथाशेषसंक्षेपः ॥ १३ ॥ इतिश्रीयोगवासिष्ठसारेनिर्वाणप्रकरणेशिखिध्वजोपाख्यानंनामसप्तत्रिंशःसर्गः ॥ ३७ ॥ पूर्वंप्रतिबंधकपापसंक्षयाभावेदुर्लभमपिस्वात्मज्ञानमाचार्यस्यप्रयत्ना

एकतांसंप्रयातेनतारतूर्यादिनासह ॥ प्रत्युद्गतेनपूर्वेणससामंतेनतेनच ॥ ९ ॥ बलद्वयेनतेनासौविवेशनगरंनृपः ॥ दशवर्षसहस्राणिराज्यंकृत्वामहीतले ॥ ११० ॥ सहचूडालयारामविरतोदेहधारणात् ॥ देहमुत्सृज्यनिर्वाणमस्नेहइवदीपकः ॥ ११ ॥ अपुनर्जन्मनेराजाजगामेतिमहामतिः ॥ १२ ॥ भुक्त्वाभोगाननंतान्भुविसकलमहीपालचूडामणित्वेस्थित्वासौदीर्घकालंपरममृतमनंतंगतःशून्यशेषः ॥ एवंरामागतंतंप्रकृतमनुसरन्कार्यजातंविशोकैःस्थित्वातिष्ठत्स्वयंवाप्रसभमनुसरन्भोगमोक्षादिलक्ष्मीम् ॥ १३ ॥ इतिश्रीमोक्षोपायेनिर्वाणप्रकरणेकिरातचिंतामणिगजोपाख्यानत्रयगर्भेशिखिध्वजोपाख्यानंनामसप्तत्रिंशःसर्गः ॥ ३७ ॥ वसिष्ठउवाच ॥ एतत्तेसर्वमाख्यातंशिखिध्वजकथानकम् ॥ अनेनगच्छमार्गेणनकदाचनखिद्यते ॥ १ ॥ शिखिध्वजःक्रमेणैवयथाबोधमवाप्तवान् ॥ कचोबृहस्पतेःपुत्रस्तथाबुध्यस्वराघव ॥ २ ॥

तिशयाल्लभ्यतइतिदर्शयितुंअनेकोपाख्यानगर्भेशिखिध्वजोपाख्यानमाख्यातम् । इदानींचित्तत्यागएवसर्वत्यागोनामइतिकचोपाख्यानेनाभिधीयते ॥ १ ॥ २ ॥

श्रीरामउवाच ॥ बृहस्पतेर्भगवतःपुत्रोऽसौभगवान्कचः ॥ यथाप्रबुद्धोभगवन्समासेनतथावद ॥ ३ ॥
वसिष्ठउवाच ॥ बालभावात्समुत्तीर्णःसंसारोत्तरणोन्मुखः ॥ कचःपदपदार्थज्ञोबृहस्पतिमभाषत ॥ ४ ॥
कचउवाच ॥ भगवन्सर्वधर्मज्ञकथंसंसृतिपंजरात् ॥ अस्मान्निर्गम्यतेब्रूहिजंतुनाजीवतंतुना ॥ ५ ॥
बृहस्पतिरुवाच ॥ अनर्थमकरागारादस्मात्संसारसागरात् ॥ उत्तीर्यतेनिरुद्वेगंसर्वत्यागेनपुत्रक
॥ ६ ॥ वसिष्ठउवाच ॥ इत्याकर्ण्यकचोवाक्यंपितुःपरमपावनम् ॥ सर्वमेवपरित्यज्यजगामैकांतका
ननम् ॥ ७ ॥ बृहस्पतेस्तद्गमनंनोद्वेगायबभूवह ॥ संयोगेचवियोगेचनक्षुभ्यंतिमहाशयाः ॥ ८ ॥ अ
थवर्षेषुयातेषुत्रिषुपंचसुचानघ ॥ पुनःप्रापमहारण्येकस्मिंश्चित्पितरंकचः ॥ ९ ॥ परिपूज्याभिवाद्यै
नंसमालिंगितपुत्रकम् ॥ अपृच्छद्वाक्पतिंभूयःसकचःकांतयागिरा ॥ १० ॥ अद्येदमष्टमंवर्षंसर्वत्या
गःकृतोमया ॥ तथापितातविश्रांतिंनाधिगच्छाम्यनिंदिताम् ॥ ११ ॥ वसिष्ठउवाच ॥ एवमार्तवच
स्तस्मिन्कचेवदतिकानने ॥ सर्वमेवत्यजेत्युक्त्वावाक्पतिर्दिवमाययौ ॥ १२ ॥ गतेतस्मिन्कचोदेहाद्व
ल्कलाद्यप्यथात्यजत् ॥ ततोव्यभ्रार्कतारेणशरद्व्योम्नासमोभवत् ॥ १३ ॥ पुनर्वर्षत्रयेणाथकस्मिंश्चि
त्काननांतरे ॥ दूयमानमनाःप्रापतमेवपितरंगुरुम् ॥ १४ ॥

वःप्राणाधारणंसएवतंतुःचेष्टानिमित्तंसूत्रंयस्यतेन ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥

॥ ८३ ॥

कृतपूजानमस्कारंतमालिंगितपुत्रकम् ॥ अपृच्छत्तमसौभूयःखेदगद्गदयागिरा ॥ १५ ॥ कचउवाच ॥ तातसर्वंपरित्यक्तंकंथांचैवलताद्यपि ॥ तथापिनास्तिविश्रांतिःस्वपदेकिंकरोम्यहम् ॥ १६ ॥ बृहस्पतिरुवाच ॥ चित्तंसर्वमितिप्राहुस्तत्त्यक्त्वापुत्रराजसे ॥ चित्तत्यागंविदुःसर्वत्यागंसर्वविदोजनाः ॥ ॥१७॥ वसिष्ठउवाच ॥ इत्युक्त्वावाक्पतिःपुत्रंपुप्लुवेतरसानभः ॥ अन्विवेषकचश्चित्तंपरित्यक्तुमखिन्नधीः ॥१८॥ चिंतयन्नप्यसौचित्तंनयदावेदकानने ॥ तदासंचिंतयामासधियैवमविखिन्नया ॥ १९ ॥ कचउवाच ॥ पदार्थवृंदंदेहादिनचित्तमितिकथ्यते ॥ तदेतत्किंकवाऽयर्थंनिरागस्कंत्यजाम्यहम् ॥२०॥ पितुःसकाशंगच्छामिज्ञातुंचित्तंमहारिपुम् ॥ ज्ञात्वातावत्त्यजाम्याशुततस्तिष्ठामिविज्वरः ॥ २१ ॥ वसिष्ठउवाच॥चिंतयित्वाजगामेतिकचःस्वंपितरंगुरुम् ॥पप्रच्छप्रयतोभूत्वाचित्तंतातकिमुच्यते ॥ २२ ॥ बृहस्पतिरुवाच॥चित्तंनिजमहंकारंविदुश्चित्तविदोजनाः ॥ अंतर्योऽयमहंभावोजंतोस्तच्चित्तमुच्यते॥२३॥ कचउवाच॥मन्येऽस्यदुष्करस्त्यागोनसिद्धिमुपगच्छति॥कथमेषकिलत्यक्तुंशक्यतेयोगिनांवर ॥ २४ ॥ बृहस्पतिरुवाच ॥ अपिपुष्पावदलनादपिलोचनमीलनात ॥ सुकरोऽहंकृतेस्त्यागोनक्लेशोऽत्रमनागपि ॥ २५ ॥ एकमाद्यंतरहितंचिन्मात्रममलंततम् ॥ खादप्यतितरामच्छंविद्यतेसर्ववेदनम् ॥ २६ ॥

॥ ८३ ॥

विद्यतइत्यन्वयः ॥ २६ ॥

तदिति ॥ तत्त्वभावनाच्चित्स्वरूपभावनात् ॥ २७ ॥ चिदिति ॥ २८ ॥ अप्सुजातोरजोराशिरिवअनलेजलमिवचित्स्वरूपेऽप्यहंभावो नयुज्यतइत्यर्थः । अयंअहंसोऽहमिति ॥ २९ ॥ दिक्कालविवशीकृतंपरिमिताकारंतुच्छंप्रत्ययंत्यज ॥ ३० ॥ दिगिति ॥ सर्वार्थमयमपि यदेकार्थमेकरूपंतदमलंचिन्मात्रंभवानित्यन्वयः ॥ ३१ ॥ ३२ ॥ ३३ ॥ अहमिति ॥ शशशृंगवदसंतमहंकारंमाश्रयमात्यजेत्यर्थः ॥३४॥

तदेवभावयन्साधुःशांतस्तिष्ठगतव्यथः ॥ मिथ्यारूपोह्यहंभावोलीयतेतत्त्वभावनात् ॥ २७ ॥ चितिको ऽयमहंभावःकोवानुकथमुत्थितः ॥अंतःकोऽयमहंभावःकुतोनुकथमुत्थितः ॥२८॥ क्वाप्सुजातोरजोराशिः क्वानलाद्वुत्थितंजलम् ॥ अयंसोऽहमितिव्यर्थंप्रत्ययंत्यजपुत्रक ॥ २९ ॥ तुच्छंपरिमिताकारंदिक्कालविव शीकृतम् ॥३०॥ दिक्कालाद्यनवच्छिन्नंस्वच्छंनित्योदिततंततम् ॥ सर्वार्थमयमेकार्थंचिन्मात्रममलंभवा न् ॥ ३१ ॥ वसिष्ठउवाच ॥ इतिप्राप्यपरंयोगमुपदेशमनुत्तमम् ॥ जीवन्मुक्तोबभूवासौततोदेवगुरोः सुतः ॥३२॥ निर्ममोनिरहंकारश्छिन्नग्रंथिःप्रशांतधीः ॥कचोयथास्थितोरामतथातिष्ठाविकारवान् ॥३३॥ अहंकारमसद्विद्धिमैनमाश्रयमात्यज ॥ असतःशशशृंगस्यकिलत्यागग्रहौकुतः ॥ ३४ ॥ इतिश्रीयो गवासिष्ठसारेनिर्वाणप्रकरणेकचोपाख्यानंनामअष्टत्रिंशःसर्गः ॥ ३८ ॥ वसिष्ठउवाच ॥ द्वित्वैकत्वम तोत्यक्त्वाशेषस्थःसुखितोभव ॥ मादुःखितोभवव्यर्थंत्वंमिथ्यापुरुषोयथा ॥ १ ॥

इतिश्रीयोगवासिष्ठविवरणेनिर्वाणप्रकरणेकचोपाख्यानंनामाष्टत्रिंशःसर्गः ॥ ३८ ॥ पूर्वंचित्तत्यागएवसर्वत्यागइत्युक्तम् । इदानीमवि चारितरम्योऽयमहंकारःसंसारेवृथैवशोचतीत्यत्रदृष्टांततयामिथ्यापुरुषवृत्तांतोनिरूप्यते ॥ द्वित्वेति ॥ द्वित्वमतेर्भेदविषयत्वात्एकत्वमतेश्चभे

दप्रतियोगित्वेनभेदोल्लेखित्वात्तेउभेअपित्यक्त्वाशेषस्थः भेदाभेदाभ्यामव्यपदेश्येचिन्मात्ररूपेवस्तुनिस्थितः सन्सुखितोभवव्यर्थनिर्निमित्तमेवमिथ्यापुरुषवद्दुःखितोमाभव ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ अस्तीति ॥ मायायंत्रमयःपुमान्अहंकाररूपःबालपेलवधीर्बालवदल्पबुद्धिः ॥ ५ ॥ सइति ॥ पुमानेकांतेनिःप्रपंचेशून्येनिर्विशेषेक्वचिदव्यपदेश्येचिदाकाशरूपेवस्तुनिजातःतत्रैववस्तुनिव्योम्निकेशोंऽडकमिवकुंडलिनःकेशसंचयमिवमरौमृगतृष्णेवचभ्रांतिमात्रसिद्धस्तिष्ठति ॥ ६ ॥ तस्मादितितत्रचिदाकाशेतस्मान्मायापुरुषादहंकारादन्यन्नास्ति यच्चास्तितत्सए

श्रीरामउवाच॥परमामागतोऽस्म्यंतस्तृप्तिंज्ञानामृतेनते॥ तृप्तोऽपिभूयःपृच्छामित्वांप्रश्नमिममीश्वर॥२॥किमुच्यतेमुनिश्रेष्ठमिथ्यापुरुषनामकम् ॥वस्त्ववस्तुकृतंजगद्वस्तुजातंवदाशुमे॥३॥ वसिष्ठउवाच॥मिथ्यापुरुषबोधायशृणुराघवशोभनाम्॥ इमामाख्यायिकांहासजननींमदुदीरिताम् ॥ ४ ॥ अस्तिकश्चिन्महाबाहोमायायंत्रमयःपुमान्॥ बालपेलवधीर्मूढोमानीमौर्ख्येणकेवलम् ॥ ५॥ सएकांतेक्वचिज्जातःशून्येतत्रैवतिष्ठति ॥ केशोंऽडकमिवव्योम्निमृगतृष्णैववामरौ ॥ ६ ॥ तस्मादन्यन्नतत्रास्तियदस्तिचसएवतत् ॥ यच्चान्यत्तत्तदाभासंनचपश्यतिदुर्मतिः ॥७॥ संकल्पस्तस्यसंजातस्तत्रवृद्धिमुपेयुषः ॥ स्वंस्थापयित्वारक्षामिवस्त्विष्टंरक्ष्यमादरात् ॥ ८ ॥ इतिसंचितयन्व्योमरक्षार्थंसोऽकरोद्गृहम् ॥ अस्यकोशेचबंधास्थांरक्षितंखंमयेत्यसौ ॥ ९ ॥

वसर्वस्याप्यहंकारिकत्वात् तत्तदाभासंतेनतेनवियदादिरूपेणभासमानमन्यत्प्रपंचातिरिक्तंयच्चवस्त्वस्तितच्चनपश्यतिनानुसंधत्तेदुर्मतित्वात्मंदमतित्वात् ॥७॥ संकल्पइतिश्लोकद्वयंवाक्यम् । तत्रचिदाकाशेवृद्धिमुपेयुषस्तस्यमायापुंसःखंआकाशंस्थापयित्वाक्वत्रचिदाश्रयेप्रतिष्ठाप्यरक्षामियस्मादिष्टंवस्त्वादराद्रक्ष्यंरक्षणीयमितिसंकल्पोजातः ॥ ८ ॥ इतिएवंचसंचितयन्व्योमरक्षार्थंसपुमान्गृहमकरोत्अस्यचगृहस्यको

शेभ्यंतरेखंमयारक्षितमित्यास्थामादरमकरोत् ॥ ९ ॥ अथेति ॥ ऋत्वंतरेणशरदाख्येनवर्षकोऽब्दोयथानाशमुपयातितद्वत् ॥ १० ॥ हागृ
हेत्यादि ॥ आदौगृहंतन्नाशेकूपम् ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ ततःकुंभंततःकुंडंगर्तविशेषंस्थालींवा ॥ १६ ॥ १७ ॥ ततो

अथकालेनतत्तस्यगृहंनाशमुपाययौ ॥ ऋत्वंतरेणाब्दइववातेनेवतरंगकः ॥ १० ॥ हागृहाका
शनष्टस्त्वंहाकयातमसिक्षणात् ॥ गृहेभग्नेगृहाकाशमित्यथैनंशुशोचसः ॥ ११ ॥ इतिशोकशतं
कृत्वापुनस्तत्रैवदुर्मतिः ॥ कूपंचक्रेखरक्षार्थंकूपाकाशपरोऽभवत् ॥ १२ ॥ ततोनाशंसकालेननीतः
कूपोऽपितस्यवै ॥ कूपाकाशेगतेशोकेनिमग्नोऽसौततोऽभवत् ॥ १३ ॥ कूपाकाशप्रलापांतेकुंभंशी
घ्रमथाकरोत् ॥ कुंभाकाशपरोभूत्वास्वयंनिर्वृतिमाययौ ॥ १४ ॥ कुंभोऽपितस्यकालेननाशंनी
तोरघूद्वह ॥ यामेवदिशमादत्तेदुर्भगःसाहिनश्यति ॥ १५ ॥ कुंभाकाशप्रलापांतेखरक्षार्थंचका
रसः ॥ कुंडंतत्रैवतेनासौकुंडाकाशपरोऽभवत् ॥ १६ ॥ कुंडमप्यस्यकालेनकेनचिन्नाशमाययौ ॥
तेजसेवतमस्तेनकुंडाकाशंशुशोचसः ॥ १७ ॥ कुंडाकाशस्यनाशांतेखरक्षार्थंचकारसः ॥ चतुः
शालंमहाशालंतदाकाशपरोऽभवत् ॥ १८ ॥ तदप्यवजहाराशुकालःकवलितप्रजः ॥ जीर्णपर्णंय
थावातस्ततःशोकपरोऽभवत् ॥ १९ ॥ सचतुःशालशोकांतेखरक्षार्थंचकारह ॥ कुशूलमंबुदाकारं
तदाकाशपरःस्थितः ॥ २० ॥

महाशालंविशालगृहयुक्तंचतुःशालंचतुर्णांशालानांसमाहारम् ॥ १८ ॥ १९ ॥ ततःकुशूलंधान्यावपनस्थानंचकृत्वातत्तन्नाशेशुशोचेतिसं

क्षेपः ॥ २० ॥ २१ ॥ २२ ॥ एवमिति ॥ दुःखमयतयास्थितः सकुमतिर्गुहायांस्थितंगगनंगृहेणकेनचिदावासस्थानेनचगृह्णन्संगृह्णन्गग
नेनजनितायात्मबुद्धिःतयागगनविषयात्मबुद्ध्याघनतराद्दुःखांतरात्घनदुःखजातमायातिगतागतिसंगमूढःउपाधीनांगमनागमनसंबंधेनमू
ढःसन्स्वयंचयाति ॥ २३ ॥ २४ ॥ मायेति ॥ मायायंत्रमयोयःपुमान्प्रोक्तःतमेनंशून्यांबरोत्थितंचिदाकाशोत्थमहंकारंविद्धि ॥ २५ ॥
यस्मिन्निति ॥ अनंतमपरिच्छिन्नंशून्यंसर्वोपाधिरहितंअतश्चासत्व्यवहारस्याविषयः । असद्वाइदमग्रआसीत्ततोवैसदजायतेतिश्रुतेः । ई

तदप्यस्यजहाराशुकालोवातइवांबुदम् ॥ कुशूलाकाशशोकेनतेनासौपर्यतप्यत ॥ २१ ॥ एवंगृहचतुःशालकुं
भकुंडकुशूलकैः ॥ तस्यापर्यवसानात्माकालोदुःखमयोगतः ॥ २२ ॥ एवंस्थितःसगगनंकुमतिर्गुहायांगृह्णन्
गृहेणगगनेनकिलात्मबुद्ध्या ॥ दुःखांतराद्घनतराद्घनदुःखजातमायातियातिचगतागतिसंगमूढः ॥ २३ ॥
श्रीरामउवाच ॥ मिथ्यानरप्रसंगेनकिंमायापुरुषःप्रभो ॥ कथितोऽयंत्वयाव्योमरक्षणंचकिमुच्यते ॥२४॥ व
सिष्ठउवाच॥मायायंत्रमयःप्रोक्तोयःपुमान्रघुनंदन॥एनंचत्वमहंकारंविद्धिशून्यांबरोत्थितम् ॥२५॥ यस्मि
न्नाकाशकोशेऽस्मिन्साधोजगदिदंस्थितम् ॥ तदनंतमसच्छून्यंसर्गादौतिष्ठतिस्वयम् ॥ तस्मादुदेत्यहंका
रःपूर्वंस्पंदइवानिलात॥२६॥अनात्मात्मैकरक्षार्थंदेहान्नानाविधानसौ ॥ भूयोभूयोविनाशेऽपिसृजत्याकुल
तांगतः ॥२७॥ कूपकुंडचतुःशालकुंभादीन्देहकानसौ ॥ कृत्वारक्षितआत्मेतियातितद्वयोम्निभावनाम् ॥२८॥

दृशंयद्वस्तुसर्गादौतिष्ठतितस्माद्वस्तुनःपूर्वंप्रथममेवाहंकारउदेदिअनिलात्स्तिमितवायोःसकाशात्स्पंदश्चलनमिवेति ॥ २६ ॥ अनात्मेति ॥
अनात्मावस्तुतआत्मनोऽन्यःसोऽयमहंकारःआत्मैकरक्षार्थंचिदाकाशरूपस्यात्मनः एवरक्षणायनानाविधान्देहान्भूयोभूयोविनाशेऽपिसति
सृजति ॥ २७ ॥ कूपेति ॥ असावहंकारःकूपादिवत्प्रान्देहकान्कृत्वाआकाशरूपआत्मारक्षितइतितद्व्योम्नितस्मिंश्चिदाकाशेभावनांया

ति ॥ २८ ॥ २९ ॥ आकाशादिति ॥ यआत्माआकाशादपिविस्तीर्णःसकथंगृह्यतेकेनवागृह्यतेचरक्ष्यतेतद्व्यतिरिक्तस्यवस्तुनएवाभावा दितिभावः ॥ ३० ॥ हृदयेति ॥ हृदयाकाशमात्रस्यहृत्पुंडरीकावच्छिन्नस्याकाशस्यशरीरक्षयसंक्षयेशरीरक्षयेसतिभूतानिआत्मानष्टइति शंकयाव्यर्थमेवशोचंति ॥ ३१ ॥ घटादिष्विति ॥ आकाशादीत्यादिशब्देनदिगाद्यमूर्तद्रव्यसंग्रहः ॥ ३२ ॥ शुद्धेति ॥ यआत्माशुद्धचि न्मात्रःअणोःसूक्ष्मादाकाशादप्यणुःसूक्ष्मोनिरवयवत्वात्आत्मास्वानुभूत्यंशमात्रत्वात्स्वानुभवमात्ररूपत्वात्खवत्आकाशवन्ननश्यति॥३३॥

यथैवमिथ्यापुरुषोरक्षन्व्योमात्मशंकया ॥ घटाकाशादिषुक्लिष्टएवंमाक्लेशवान्भव ॥ २९ ॥ आकाशा दपिविस्तीर्णःशुद्धःसूक्ष्मःशिवःशुभः ॥ यआत्मासकथंकेनगृह्यतेरक्ष्यतेऽथवा ॥ ३० ॥ हृदयाकाशमात्र स्यशरीरक्षयसंक्षये ॥ व्यर्थंभूतानिशोचंतिनष्टआत्मेतिशंकया ॥ ३१ ॥ घटादिषुप्रनष्टेषुयथाकाशो ह्यखंडितः ॥ तथादेहेषुनष्टेषुदेहीनित्यमलेपकः ॥ ३२ ॥ शुद्धचिन्मात्रआत्मायमाकाशादप्यणोरणुः ॥ स्वानुभूत्यंशमात्रत्वात्खवद्रामननश्यति ॥ ३३ ॥ नजायतेनम्रियतेक्वचित्किंचित्कदाचन ॥ जग द्विवर्तरूपेणकेवलंब्रह्मजृंभते ॥ ३४ ॥ सर्वमेकमिदंशांतमादिमध्यांतवर्जितम् ॥ भावाभावविनिर्मुक्त मितिमत्वासुखीभव ॥ ३५ ॥ सर्वापदांनिलयमध्रुवमस्वतंत्रमासन्नपातमविवेकममानमज्ञम् ॥ बोधा दहंकृतिपदंसकलंविमुच्यशेषेसुबुद्धपदउत्तमतांप्रयाहि ॥ ३६ ॥

नेति ॥ किंचिदपिवस्तुक्वचिद्देशेकदाचिदपिनजायतेनम्रियतेचकिंतर्हिब्रह्मैवकेवलंजगद्विवर्तरूपेणजगदाकारेणजृंभतेपरिस्फुरति ॥ ३४ ॥ सर्वमिति ॥ इदंसर्वंजगतआदिमध्यांतवर्जितंअतएवभावाभावाभ्यांजन्मनाशाभ्यांविनिर्मुक्तंशांतमेकमद्वितीयंब्रह्मेतिमत्वासुखीभव ॥ ३५ ॥ सर्वेति ॥ सर्वापदांनिलयंअध्रुवंअस्वतंत्रंआसन्नपातंअविवेकंअमानंअप्रामाणिकंअज्ञंजडंअहंकृतिपदंअहंकाररूपंवस्तुसकलमपिबो

धादात्मतत्त्वरूपादवबोधात्विमुच्यशेषेअहंकृतिरहितेसुबुद्धपदेज्ञानपदेस्थिताउत्तमांजीवन्मुक्ततांप्रयाहि ॥ ३८ ॥ इतिश्रीयोगवासिष्ठविवरणेनिर्वाणप्रकरणेएकोनचत्वारिंशःसर्गः ॥ ३९ ॥ पूर्वमहंकृतिरेवमिथ्याशोकहेतुरित्युक्तंइदानींकथंतर्हिधीविश्रांतिरित्याकांक्षायांसमाधिनाविनापिमहताकर्तृत्वादिनाधियोविश्रांतिःसिध्यतीतिभृंगीशोपाख्यानेननिरूप्यते ॥ तस्येति ॥ इदंजगत्तस्यसर्वप्रपंचाधिष्ठानस्यआत्मतत्त्वस्यविस्मृत्यैवअननुसंधानेनैवस्थितिंप्रामाणिकबुद्धिंगतंअन्यस्मात्तुकारणान्नागतंरज्जुभुजंगवत् यथाहिरज्ज्वारोपितोभुजंगोरज्जु

इतिश्रीनिर्वाणप्रकरणेमिथ्यापुरुषोपाख्यानंनामएकोनचत्वारिंशःसर्गः ॥३९॥ वसिष्ठउवाच ॥
तस्यात्दृश्यात्मतत्त्वस्यविस्मृत्यैवगतंस्थितिम् ॥ नान्यस्मादागतंरामजगद्रज्जुभुजंगवत् ॥ १ ॥
आदित्यव्यतिरेकेणयोभावयतिराघव ॥ रश्मिजालमिदंह्येतत्तस्यान्यादिवभास्वतः ॥ २ ॥ कनकव्यतिरेकेणकेयूरंयेनभावितम् ॥ केयूरमेवतत्तस्यनतस्यकनकंहितत् ॥ ३ ॥ आदित्याव्यतिरेकेणरश्मयोयेनभाविताः ॥ आदित्याएवतेतस्यनिर्विकल्पःसउच्यते ॥ ४ ॥ कनकाव्यतिरेकेणकेयूरंयेनभाव्यते ॥ कनकैकमहाबुद्धिर्निर्विकल्पःसउच्यते ॥ ५ ॥ नानातामखिलांत्यक्त्वाशुद्धचिन्मात्रकोटरे ॥ संवेद्येनविनिर्मुक्तेसंवित्तत्त्वेस्थिरोभव ॥ ६ ॥

स्वरूपाज्ञानादेवसिद्धोनान्यस्मात्कारणात्तद्वत् ॥ १ ॥ आदित्येति ॥ यःपुमानिदंरश्मिजालंआदित्यव्यतिरेकेणभावयतिआदित्याद्भेदेनभावयतितस्यएतद्रश्मिजालंभास्वतोऽन्यदिवभवति ॥ २ ॥ कनकेति ॥ पूर्वोक्तएवार्थः ॥ ३ ॥ इदानीमभेदभावनामाह ॥ आदित्येति ॥ येनपुंसारश्मयआदित्याव्यतिरेकेणभाविताःतस्यतेरश्मयोऽप्यादित्याएवसपुमानभेददर्शीनिर्विकल्पउच्यते ॥ ४ ॥ कनकेति ॥ कनकैकमहाबुद्धिःकेयूरादिषुकनकमित्येकैवमहतीबुद्धिर्यस्यसपुमान्निर्विकल्पउच्यते ॥ ५ ॥ नानातामिति ॥ अखिलांनानातांत्यक्त्वाशुद्धचि

न्मात्रकोटरेशुद्धस्यचिन्मात्रस्यकोटरेगर्भेस्थितंयत्संवेद्येनविनिर्मुक्तंसंवित्तत्त्वंतत्रैवस्थिरःसमाहितोभव ॥ ६ ॥ स्वयमिति ॥ श्लोकद्वयंवा क्यम् । आत्मास्वयमेवयदासंकल्पनामिकांशक्तिंअनिलःस्पंदशक्तिमिव आत्मनैवनकारणांतरेणस्फुरितांकार्योन्मुखींकरोति तदापृथगि वाभासंआत्मनोऽन्यदिवाभासमानंसंकल्पकलनामयंविश्वात्मासर्वप्रपंचकारणंस्वाकृतिंस्वाकारमेवस्वयंभावयन्मनोभवति ॥ ७॥ ८ ॥ सं कल्पेति ॥ अतःकारणादिदंआभोगिविस्तीर्णंजगत्संकल्पमयमेवदृश्यतांनसत्यंतत्त्वज्ञानेनबाध्यत्वात्नचमिथ्यैवव्यवहार्यत्वात् किंतर्हिस्व

स्वयमात्मात्मनैवाशुशुक्तिंसंकल्पनामिकाम् ॥ यदाकरोतिस्फुरितांस्पंदशक्तिमिवानिलः ॥ ७॥ तदा पृथगिवाभासंसंकल्पकलनामयम् ॥ मनोभवतिविश्वात्माभावयन्स्वाकृतिंस्वयम् ॥ ८ ॥ संकल्पमात्र मेवेदंजगदाभोगिदृश्यताम् ॥ नसत्यंनचमिथ्यैवस्वप्नजालमिवोत्थितम् ॥ ९ ॥ पश्यन्शृण्वन्स्पृशन् जिघ्रन्वदन्व्यवहरन्स्वपन् ॥ नापूर्वंविद्यतेसर्वंसत्यामित्येवभावयन् ॥१०॥ यद्यत्करोतितात्तद्विद्धिचिन्मा त्रममलंततम् ॥ ब्रह्मप्रबृंहिताकारंतस्मादन्यन्नविद्यते ॥ ११ ॥ पदार्थजातेसर्वस्मिन्संवित्सारतयास्थि ते ॥ संविदेवेदमखिलंजगन्नान्यास्तिकल्पना ॥१२॥ संभवादखिलाकारेणैकस्याएवसंविदः ॥ संवेद्यम पिनास्त्येवबंधमोक्षावतःकथम् ॥ १३ ॥ मोक्षोयमेषखलुबंधइतिप्रसह्यचिंतांनिरस्यसकलांविकलाभिमा नः ॥ मौनीवशीविगतमानमदोमहात्माकुर्वन्स्वकार्यमनहंकृतिरेवतिष्ठ ॥ १४ ॥

प्नजालमिवानिर्वचनीयत्वेनोत्थितं ॥ ९ ॥ १० ॥ ११ ॥ पदार्थेति ॥ पदार्थजातेवस्तुसमूहेसर्वस्मिन्नपिसंवित्सारतयासंविन्मात्रतयासं विन्मात्रेप्रमाणतयास्थितेसतिसंविदेवहिभवतिविषयसत्त्वोपशमेशरणमितिन्यायात् ॥ १२ ॥ इदमखिलंजगत्संविदेवेतिनिश्चीयतां अत्रा न्याकल्पनाभेदकल्पनानास्तिअखिलाकारेणएकस्याएवसंविदःसंभवाद्धेतोः ॥ १३ ॥ १४ ॥

महाकर्तामहाभोक्तामहात्यागीभवानघ ॥ सर्वाःशंकाःपरित्यज्यधैर्यमालंब्यशाश्वतम् ॥ १५ ॥ श्रीरामउवाच ॥ किमुच्यतेमहाकर्तामहात्यागीकिमुच्यते ॥ किमुच्यतेमहाभोक्तासम्यक्कथयमेप्रभो ॥ १६ ॥ वसिष्ठउवाच ॥ एतद्व्रतत्रयंरामपुराचंद्रार्धमौलिना ॥ भृंगीशायतुसंप्रोक्तंयेनासौविज्वरःस्थितः ॥ १७ ॥ सुमेरोरुत्तरेशृंगेपूर्वंशशिकलाधरः ॥ अतिष्ठदग्निसंकाशेसमग्रपरिवारवान् ॥ १८ ॥ तमपृच्छन्महातेजास्तत्त्वंजिज्ञासुरादरात् ॥ भृंगीशःप्रणतोरामबद्धांजलिरुमापतिम् ॥ १९ ॥ भृंगीशउवाच ॥ संसाररचनांनाथतरंगतरलामिमाम् ॥ अवलोक्यविमुह्यामितत्त्वविश्रांतिवर्जितः ॥ २० ॥ कमंतर्निश्चयंकांतमुररीकृत्यसुस्थिरम् ॥ अस्मिन्जगज्जीर्णगृहेतिष्ठामिविगतज्वरः ॥ २१ ॥ ईश्वरउवाच ॥ सर्वाःशंकाःपरित्यज्यधैर्यमालंब्यशाश्वतम् ॥ महाकर्तामहाभोक्तामहात्यागीभवानघ ॥ २२ ॥ भृंगीशउवाच ॥ किमुच्यतेमहाकर्तामहाभोक्ताकिमुच्यते ॥ किमुच्यतेमहात्यागीसम्यक्कथयमेप्रभो ॥ २३ ॥ ईश्वरउवाच ॥ रागद्वेषौसुखंदुःखंधर्माधर्मौफलाफले ॥ यःकरोत्यनपेक्षैवमहाकर्तासउच्यते ॥ २४ ॥ मौनवान्निरहंभावोनिर्मानोमुक्तमत्सरः ॥ यःकरोतिगतोद्वेगंमहाकर्तासउच्यते ॥ २५ ॥ सर्वत्रविगतस्नेहोयःसाक्षिवदवस्थितः ॥ निरिच्छंवर्ततेकार्येमहाकर्तासउच्यते ॥ २६ ॥ उद्वेगानंदरहितःसमयास्वच्छयाधिया ॥ नशोचतिनचोदेतिमहाकर्तासउच्यते ॥ २७ ॥

जन्मास्थितिविनाशेषुसोदयास्तमयेष्वलम् ॥ सममेवमनोयस्यमहाकर्तासउच्यते ॥ २८ ॥ नकिंचनद्वेष्टितथानकिंचिदभिकांक्षति ॥ भुंक्तेचप्रकृतंसर्वंमहाभोक्तासउच्यते ॥ २९ ॥ सुखैर्दुःखैःक्रियायोगैर्भावाभावैर्भ्रमप्रदैः ॥ भुक्तैर्नसंक्षुभ्यतियोमहाभोक्तासउच्यते ॥ ३० ॥ जरामरणमापच्चराज्यंदारिद्र्यमेवच ॥ रम्यमित्येवयोभुंक्तेमहाभोक्तासउच्यते ॥ ३१ ॥ कट्वम्ललवणंतिक्तममृष्टंमृष्टमुत्तमम् ॥ अंधःसंयातिसाम्येनमहाभोक्तासउच्यते ॥ ३२ ॥ सरसंनीरसंचैवसुरतंविरतंतथा ॥ यःपश्यतिसमंसौम्योमहाभोक्तासउच्यते ॥ ३३ ॥ क्षीरेखंडप्रकारेचशुभेवाप्यशुभेतथा ॥ समतासुस्थिरायस्यमहाभोक्तासउच्यते ॥ ३४ ॥ इदंभोज्यमभोज्यंचेत्यवंत्यक्त्वाविकल्पितम् ॥ गताभिलाषंयोभुंक्तेमहाभोक्तासउच्यते ॥ ३५ ॥ आपदंसंपदंमोहमानंदमपरंपरम् ॥ योभुंक्तेसमयाबुद्ध्यामहाभोक्तासउच्यते ॥ ३६ ॥ धर्माधर्मौसुखंदुःखंतथामरणजन्मनी ॥ धियायेनेतिसंत्यक्तंमहात्यागीसउच्यते ॥ ३७ ॥ सर्वेच्छाःसकलाःशंकाःसर्वेहाःसर्वनिश्चयाः ॥ धियायेनपरित्यक्तामहात्यागीसउच्यते ॥ ३८ ॥ येनधर्ममधर्मंचमनोमननमीहितम् ॥ सर्वमंतःपरित्यक्तंमहात्यागीसउच्यते ॥ ३९ ॥ यावतीदृश्यकलनासकलेयंविलोक्यते ॥ सायेनसुष्ठुसंत्यक्तामहात्यागीसउच्यते ॥ ४० ॥

॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ अंतर्मुखःअनुसंधाननिष्ठोबहिष्ठंशारीरंकार्यजातंकुर्वन्नखेदंनायासिनिराकृताहंकृतितांचउपैषि ॥ ४५ ॥ इतिश्रीयोगवासिष्ठविवरणेनिर्वा० भृंगीशोपाख्यानंनामचत्वारिंशःसर्गः ॥४०॥ पूर्वंसमाधिनाविनापिमहाकर्तृत्वादिनैवधीविश्रांतिःसिद्ध्यतीत्युक्तं इदानींस्वविचारेणबोद्धुमशक्यमपितत्त्वंगुरूक्तितोबोद्धुंशक्यतएवेति इक्ष्वाकूपाख्यानेनाख्यायते ॥ भगवन्निति ॥ अहंकारनाम



वसिष्ठउवाच ॥ इत्युक्तंदेवदेवेनभृंगीशायपुरानघ ॥ एतांदृष्टिमवष्टभ्यतिष्ठरामगतज्वरः ॥ ४१ ॥ नित्योदितंविमलरूपमनंतमाद्यंब्रह्मास्तिनेतरकलाकलनंहिकिंचित् ॥ इत्येवभावयनिरंजनतामुपेतो निर्वाणमेहिसकलामलशांतवृत्तिः ॥ ४२ ॥ अनामयंब्रह्मसमस्तकल्पकार्यैकबीजंपरमात्मरूपम् ॥ बृहच्चतद्बृंहितसर्वभावंखमस्तिभातीवयदंगकिंचित् ॥ ४३ ॥ अन्यत्क्वचित्किंचिदिदंकदाचिन्नसंभवत्येवसदप्यसच्च ॥ इत्येवसाधोदृढनिश्चयोऽतःस्थित्वागताशंकविलासमास्व ॥ ४४ ॥ अंतर्मुखः सन्सततंसमस्तंकुर्वन्बहिष्ठंखलुकार्यजातम्॥नखेदमायासिकदाचिदेवनिराकृताहंकृतितामुपैषि ॥४५॥

इतिश्रीनिर्वाणप्रकरणेभृंगीशोपाख्यानंनामचत्वारिंशःसर्गः ॥ ४० ॥ श्रीरामउवाच ॥ भगवन्सर्वतत्त्वज्ञचित्तेऽहंकारनामनि ॥ गलितेवागलद्रूपेलिंगंसत्वस्यकिंभवेत् ॥ १ ॥ वसिष्ठउवाच ॥ बलादपिहिसंजातानलिंपंत्याशयंसितम् ॥ लोभमोहादयोदोषाःपयांसीवसरोरुहम् ॥ २ ॥



निचित्तेगलितेगलद्रूपेवासतिसत्वस्यप्राणिनःकिंलिंगंचिह्नंभवेत् ॥१॥ बलादितिश्लोकषट्कंवाक्यम् । अहंकारमयेचित्तेगलतिशिथिलीभवति दुष्कृतेचगलतिसतिबलात्परेषांयत्नविशेषात्संजाताअपिलोभमोहादयोदोषाः पयांसिचसरोरुहमिवसितंविमलमाशयंनलिंपंतिनस्पृशंति २

मुदिताद्यामैत्र्यादयः श्रियःशोभाहेतवोवक्रंकदाचिदपिनमुंचंति ॥ ३ ॥ वासनारूपाग्रंथयोविच्छिन्नाइवशनैस्त्रुटयंतिभ्रश्यंतेकोपादयोऽपिक्षी यंते ॥ ४ ॥ इंद्रियाणिउच्चैर्नोल्लसंतिनहिस्फुरंतिखेदोदैन्यंचतथापूर्ववन्नस्फुरति ॥ ५ ॥ दुःखानिनोपबृंहंतिनवर्धंतेसुखानिचनवल्गंतिपार वश्यहेतवोनभवंतिहृदिशैत्यप्रदायिनीसर्वविषयासमताउदेति ॥ ६ ॥ सुखदुःखादयोमुखेदृश्यमानाअपितत्तद्विकारैरभिनीयमानाअपितु

मुदिताद्याःश्रियोवक्रंनमुंचंतिकदाचन ॥ गलत्यहंकारमयेचित्रेगलतिदुष्कृते ॥ ३ ॥ वासनाग्रं थयश्छिन्नाइवत्रुटयंत्यलंशनैः ॥ कोपस्तानवमायातिमोहोमांद्यंहिगच्छति ॥ ४ ॥ कामःक्लमंग च्छतिचलोभःक्वापिपलायते ॥ नोल्लसंतींद्रियाण्युच्चैःखेदःस्फुरतिनोच्चकैः ॥ ५ ॥ नदुःखान्युप बृंहंतिनवल्गंतिसुखानिच ॥ सर्वत्रसमतोदेतिहृदिशैत्यप्रदायिनी ॥ ६ ॥ सुखदुःखादयस्त्वेते दृश्यंतेयदिवामुखे ॥ दृश्यंतएवतुच्छत्वान्नतुलिंपंतितेमनः ॥ ७ ॥ चित्तेगलतिगीर्वाणगणस्य स्पृहणीयताम् ॥ साधुर्गच्छत्युदेत्यस्यसमताशीतचंद्रिका ॥ ८ ॥ उपशांतंचकांतंचसेव्यमप्र तिरोधिच ॥ निभृतंचोर्जितंस्वच्छंभवतीत्यमलंवपुः ॥ ९ ॥ भावाभावावरुग्णोऽपिविचित्रोऽपि महानपि ॥ नानंदायनखेदायसतांसंसृतिविभ्रमः ॥ १० ॥

च्छत्वात्कल्पितत्वात्मनोनलिंपंति ॥ ७ ॥ चित्तइति ॥ श्लोकद्वयंवाक्यम् । किंचिच्चित्तेगलितेसतिससाधुर्गीर्वाणानांगणस्यापिस्पृहणीय तांअभिलषणीयतांगच्छति ॥ ८ ॥ तस्यचवपुरुपशांतंकांतंकांतिमत् अप्रतिरोधिसमाधेरप्रतिबंधकंनिभृतंनिर्विकारंऊर्जितंदैन्यरहितंस्व च्छंनिर्मलंचसतइत्थमनेनप्रकारेणसेव्यंभवति ॥ ९ ॥ भावेति ॥ संसृतिविभ्रमःभावाभावावरुग्णोऽपिभावाभावाभ्यामुत्पत्तिविपत्तिभ्यांअ

वरुग्णोऽपिभंगयुक्तोऽपिविचित्रोऽपिमहानपिसतांतत्वज्ञानिनानानंदायनखेदायहर्षविषादहेतुर्नभवतीत्यर्थः ॥ १० ॥ बुध्येति ॥ बुध्यायदा लोकनंविचारःतन्मात्रसाध्येअस्मिन्मोक्षलक्षणेअस्तमितापदिवस्तुनियोमोहान्नप्रवर्ततेतंधिगस्तु ॥ ११ ॥ विश्रांतिमिति ॥ उचितांवि श्रांतिंतत्त्वनिष्ठामाप्तुंचिरसंगनिमित्तानांदुःखरत्नानांआकरंजननसागरमुत्तितीर्षोःपुंसः किंभोगकैरितिवैराग्यपूर्वंकोऽहंइदंजगच्चकथंकेनप्र



बुध्यालोकनसाध्येऽस्मिन्वस्तुन्यस्तमितापदि ॥ प्रवर्ततेनयोमोहात्तंधिगस्तुनराधमम् ॥ ११ ॥
विश्रांतिमाप्तुमुचितांचिरसंगदुःखरत्नाकरंजननसागरमुत्तितीर्षोः॥कोऽहंकथंजगदिदंचपरश्चकः
स्यात्किंभोगकैरितिमतिःपरमोऽभ्युपायः ॥ १२ ॥ वसिष्ठउवाच ॥ भवतामादिपुरुषइक्ष्वाकुर्ना
मभूपतिः ॥ इक्ष्वाकुवंशप्रभवोयथामुक्तस्तथाशृणु ॥ १३ ॥ इक्ष्वाकुर्नामभूपालःस्वराज्यंपरिपा
लयन् ॥ कदाचिदेकांतगतोमनसासमचिंतयत ॥ १४ ॥ जरामरणसंक्षोभसुखदुःखभ्रमस्थितेः ॥
अस्यदृश्यप्रपंचस्यकोहेतुःस्यादितिस्वयम् ॥ १५ ॥ जगतोनविवेदासौकारणंचिंतयन्नपि ॥
अथैकदापृच्छदसौब्रह्मलोकागतंमनुम् ॥ पूजितंस्वसभासंस्थंभगवंतंप्रजापतिम् ॥ १६ ॥ इक्ष्वा
कुरुवाच ॥ मांयोजयतिधाष्टर्येनभगवन्करुणानिधे ॥ भवत्प्रसादएवायंभवंतंप्रष्टुमंजसा ॥ १७ ॥
कुतःसर्गोऽयमायातःस्वरूपंचास्यकीदृशम् ॥ कियदेतज्जगत्कस्यकदाकेनेतिकथ्यताम् ॥ १८ ॥



कारेणोत्पन्नंपरःपरमात्माचकःकीदृशःस्यादितिविचारात्मिकामतिःपरमोमोक्षोपायः ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ कु तइति ॥ एतज्जगत्कियत्किंपरिमाणंकस्यकिंईश्वरस्यउतजीवानांकदाकस्मिन्कालेप्रादुर्भूतं केनवाकारणेनजातमितिकथ्यताम् ॥ १८ ॥

अहमिति ॥ घनास्तीर्णात्घनंनिरंतरंयथातथाआस्तीर्णात्प्रसारितात् ॥ १९ ॥ २० ॥ २१ ॥ मनइति ॥ यत्तुवस्तुक्वचिदपिनोदृश्यते इदं तयानप्रतीयते मनःषष्ठेंद्रियातीतंमनःषष्ठंयेषामिंद्रियाणांचक्षुरादीनांतान्यतीतंअविनाशंतदेववस्त्वस्तिसद्रूपंतद्वस्तुआत्मेतिकथ्यते ॥ २२ ॥ इयमिति ॥ तस्मिन्नेवआत्मन्येवमहादर्शेमहतिदर्पणे ॥२३॥ भाःस्वभावसमुत्पन्नाःतेजसःस्वभावाद्उत्पन्नाःतेजसःस्फुरणस्वभावत्वात्ब्राह्म्यः

अहंकथंचविषमादस्मात्संसृतिविभ्रमात् ॥ विमुच्येयंघनास्तीर्णाज्जालादिवविहंगमः ॥ १९ ॥
मनुरुवाच ॥ अहोनुचिरकालेनविवेकेसुविकाशिनि ॥ विततार्थपरिच्छेत्तासारःप्रश्नस्त्वयाक्त
तः ॥ २० ॥ यदिदंदृश्यतेकिंचित्तन्नास्तिनृपकिंचन ॥ यथागन्धर्वनगरंयथावारिमरुस्थले ॥
॥ २१ ॥ मनःषष्ठेन्द्रियातीतंयत्तुनोदृश्यतेक्वचित् ॥ अविनाशंतदस्तीहतत्सदात्मेतिकथ्यते
॥ २२ ॥ इयंतुसर्वदृश्याद्याराजन्सर्गपरंपरा ॥ तस्मिन्नेवमहादर्शेप्रतिबिंबमुपागता ॥ २३ ॥
भाःस्वभावसमुत्पन्नाब्राह्म्यःस्फुरणशक्तयः॥काश्चिद्ब्रह्मांडतांयांतिकाश्चिद्गच्छंतिभूतताम् ॥२४॥
नबंधोऽस्तिनमोक्षोऽस्तिब्रह्मैवास्तिनिरामयम् ॥ नैक्यमस्तिनचद्वित्वंसंवित्सारंविजृंभते॥२५॥
एकंयथास्फुरतिवारितरंगभंगैरेवंपरिस्फुरतिचिन्नचकिंचिदेतत् ॥ त्वंबंधमोक्षकलनेप्रविमुच्य
दूरेस्वस्थोभवाभवभयोऽभयसारएव ॥ २६ ॥

ब्रह्मसंबंधिन्यःस्फुरणशक्तयःविक्षेपशक्तयःकाश्चिद्ब्रह्मांडतांयांतिब्रह्मांडतया विवर्ततेकाश्चित्स्फुरणशक्तयोभूततांप्राणिरूपतांगच्छंति ॥ २४ ॥ ॥ २५ ॥ एकमिति ॥ एकंवारिअनेकैस्तरंगभंगैर्यथास्फुरतिएवंचिदेकैवपरितःस्फुरतिएतद्दृश्यंकिंचिदेवनास्ति अतःकाणात्त्वंबंधमोक्षक

ल्पनेद्दूरेप्रविमुच्य अभवभयः संसारभयरहितः अभयसारः अभयंब्रह्मतत्सारएवभूत्वास्वस्थोभव ॥ २६ ॥ संकल्पोन्मुखतामिति ॥ तस्याश्चि न्मात्ररूपायाः संविदएवसंकल्पोन्मुखतांयाताःसत्यः आपस्तरंगत्वमिवजीवतांयांति ॥ २७ ॥ तइति ॥ तेजीवाःपूर्वमुत्थितेसंसारेसंसरंति सुखदुःखदशामोहश्चमनस्येवास्तिआत्मनितुनास्ति ॥ २८ ॥ अदृश्यइति ॥ अदृश्यःद्रष्टुमशक्योऽपिराहुर्गृहीतेनइंदुनोपाधिनायथादृश्यते

मनुरुवाच ॥ संकल्पोन्मुखतांयाताःसत्याश्चिन्मात्रसंविदः ॥ आपस्तरंगत्वमिवयांतिभूमिपजीवताम् ॥ २७ ॥ तेजीवाःसंसरंतीहसंसारेपूर्वमुत्थिते ॥ सुखदुःखदशामोहोमनस्येवास्तिनात्मनि ॥ २८ ॥ अदृश्योदृश्यतेराहुर्गृहीतेनयथेंदुना ॥ तथानुभवमात्रात्मादृश्येतात्मावलोक्यते ॥ २९ ॥ नशास्त्रेणापिगुरुणादृश्यतेपरमेश्वरः ॥ दृश्यतेस्वात्मनैवात्मास्वयासत्वस्थयाधिया ॥ ३० ॥ पथिगाःपथिदृश्यंतेरागद्वेषविमुक्तया ॥ यथाधियातथैवैतेद्रष्टव्याश्चेन्द्रियारयः ॥ ३१ ॥ एतेषुनादरःकार्यःसतानैवावधीरणम् ॥ पदार्थमात्रताविष्टास्तिष्ठंत्वेतेयथास्थितम् ॥ ३२ ॥ पदार्थजातंदेहादिधियासंत्यज्यदूरतः ॥ आशीतलांतःकरणोनित्यमात्ममयोभव ॥ ३३ ॥ देहोहमितियाबुद्धिःसासंसारनिबंधिनी ॥ नकदाचिदियंबुद्धिरादेयाहिमुमुक्षुभिः ॥ ३४ ॥

तथा अनुभवमात्ररूपोऽप्यात्मादृश्येनदेहाद्युपाधिनावलोक्यते ॥ २९ ॥ नेति ॥ स्वात्मनैवस्वपौरुषेणैवस्वयासत्वगुणनिष्ठयाधियाआत्मापरमेश्वरोदृश्यते ॥ ३० ॥ ३१ ॥ एतेष्विति ॥ सताविदुषाएतेषुदेहेंद्रियादिषुआदरोनकार्यः । अवधीरणंअवज्ञापकंनैवकार्यं एतेदेहादयःपदार्थमात्रताविष्टाःपदार्थमात्रतामितिबुद्धिविषयाःसंतोयथास्थितंतिष्ठंतु ॥ ३२ ॥ ३३ ॥ ३४ ॥

नेति ॥ नकिंचिन्मात्रचिन्मात्ररूपःनकिंचिन्मात्रंविश्वविलक्षणंयच्चिन्मात्रंतद्रूपः ॥ ३५ ॥ यथेति ॥ भानवंसूर्यसंबंधितेजोविमलतो यानांबहिरंतश्चसर्वत्रयथातिष्ठति तथैवात्मासर्ववस्तुषुबहिरंतश्चसर्वत्रतिष्ठति ॥ ३६ ॥ सन्निवेशेति ॥ यथाहेम्नःसन्निवेशांशवैचित्र्यंसन्निवेशः संस्थानंअंशाएकदेशाः तेषांवैचित्र्यंनानारूपतैवअंगदादिनाकेयूरादिभूषणभावेन नचवस्त्वंतरं तथैवआत्मनोमायासहायस्यसंनिवेशांशवै चित्र्यं एवंतदतद्रूपाचेतनाचेतनात्मिकाजगदादिनालोकलौकिकप्रपंचभावः ॥ ३७ ॥ विनाशेति ॥ भूततरंगिकाःभूतानिप्राणिनएवतरंगा

नकिंचिन्मात्रचिन्मात्ररूपोऽस्मिगगनादणुः ॥ इतियाशाश्वतीबुद्धिःसानसंसारबंधनी ॥ ३५ ॥
यथाविमलतोयानांबहिरंतश्चभानवम् ॥ तेजस्तिष्ठतिसर्वत्रतथात्मासर्ववस्तुषु ॥ ३६ ॥ सन्निवे
शांशवैचित्र्यंयथाहेम्नोऽगदादिना ॥ आत्मनस्तदतद्रूपातथैवजगदादिना ॥ ३७ ॥ विनाशवाड
वाक्रांतंकल्पकालमहार्णवम् ॥ जगज्जालतरंगिण्योयांतिभूततरंगिकाः ॥ ३८ ॥ तस्याप्यद्याप्य
पूर्णस्ययःपाताकालवारिधेः ॥ तमात्मानंमहागस्त्यंराजन्भावयसर्वदा ॥ ३९ ॥ अनात्मन्या
त्मतामस्मिन्देहादौदृश्यजालके ॥ त्यक्त्वासत्वमुपारूढोगूढस्तिष्ठयथासुखम् ॥ ४० ॥ कुचको
टरसंसुप्तंविस्मृत्यजननीसुतम् ॥ यथारोदितिपुत्रार्थंतथात्मार्थमयंजनः ॥ ४१ ॥

यासांताः जगज्जालान्येवतरंगिण्योनद्यःविनाशवाडवाक्रांतंविनाशेनैववाडवाग्निनाव्याप्तंकल्पकालमहार्णवंप्रलयकालमेवमहार्णवंयांति । न द्यःसमुद्रइवजगज्जालानिप्रलयकालेलीयंतइत्यर्थः ॥ ३८ ॥ तस्येति ॥ अद्यापिगतेष्वपिकल्पकोटिष्विदानीमपिअपूर्णस्यतस्यापिसर्व संहर्तुरपिकालवारिधेः कालस्यैवसमुद्रस्ययःपातासंहर्तातंमहागस्त्यमगस्त्यादपिमहाप्रभावमात्मानंसर्वदाभावय ॥ ३९ ॥ अनात्मनी ति ॥ अनात्मनिदेहादौदृश्यजालकेआत्मतामात्माभिमानंत्यक्त्वासत्त्वंज्ञानमुपारूढोगूढः संवृताकारोयथासुखंतिष्ठ ॥ ४० ॥ कुचेति ॥ य

थाहिकाचिज्जननीजनयित्रीनारीकुचकोटरसंसुप्तंकुचयोरंतरेप्रसुप्तंसुतंविस्मृत्यतत्रत्यमबुद्ध्वापुत्रार्थंपार्श्वयोः शयनेचापश्यंतीहंतक्कयातः सुतइ ति तदर्थेरोदितितथात्यंतसन्निहितमप्यात्मानंविस्मृत्यायंजनस्तदर्थंआत्मान्वेषणार्थंरोदितिखिद्यते ॥ ४१ ॥ अजरेति ॥ अयंजनःअजरा मरमात्मानंअबुद्ध्वावपुर्व्ययेदेहनाशेसति हाहतोऽहमनाथोऽहंनष्टोऽस्मीतिचपरिरोदिति ॥ ४२ ॥ यथेति ॥ वारिजलंयथापरिस्पंदवशात्तरंग फेनबुद्बुदादिरूपेणनानाकारंविलोक्यते तथाचिद्रूपंब्रह्मसंकल्पवशतः परिबृंहितंपरितोवियदादिरूपेणविवृद्धंसत्नानाकारंविलोक्यते॥४३॥ संस्थाप्येति॥संकल्पकलंकमुक्तंचित्तमात्मनिसंस्थाप्यउपशांतसंकल्पःसन्स्पंदेऽपिविक्षेपेऽपिअस्पंदइवस्पंदरहितइवस्वस्थोनिर्विकारईश्वरात्मा

अजरामरमात्मानमबुद्ध्वापरिरोदिति ॥ हाहतोऽहमनाथोऽहंनष्टोऽस्मीतिवपुर्व्यये ॥ ४२ ॥ यथावारिपरि स्पंदान्नानाकारंविलोक्यते ॥ तथासंकल्पवशतश्चिद्ब्रह्मपरिबृंहितम् ॥ ४३ ॥ संस्थाप्यसंकल्पकलंक मुक्तंचित्तंत्वमात्मन्युपशांतशंकः ॥ स्पंदेऽप्यविस्पंदइवेश्वरात्मास्वस्थःसुखीराज्यमिदंप्रशाधि ॥४४॥ मनुरुवाच ॥ सर्गात्मभिर्विभुःस्पंदैःक्रीडतेबालवत्स्वयम् ॥ संहारात्मकशक्त्याथसंहृत्यात्मनितिष्ठ ति ॥ ४५ ॥ स्वयमस्यतथाशक्तिरुदेत्याबद्ध्यतेयया ॥ स्वयमस्यतथाशक्तिरुदेत्युन्मुच्यतेयया ॥४६॥ चंद्रार्कवह्नितप्तायोरत्नादीनांयथार्चिषः ॥ यथापत्रादिवृक्षाणांनिर्झराणांयथाकणाः ॥ ४७ ॥

सुखीराज्यमिदंप्रशाधिपालय ॥ ४४ ॥ सर्गेति ॥ विभुर्व्यापकःआत्मासर्गात्मभिः स्पंदैर्बालवत्क्रीडतेअथस्वयमेवसंहारात्मकशक्त्यासं हरणस्वभावयाशक्त्यासर्वंसंहृत्यात्मन्येवतिष्ठति ॥ ४५ ॥ स्वयमिति ॥ अस्यात्मनःस्वयमेवतथाताद‍ृशीशक्तिरुदेति ययाशक्त्याआबध्य तेययाचस्वयमुन्मुच्यते तथाभूताशक्तिरप्यस्यस्वयमेवोदेति बंधमोक्षहेतूशक्तीउभेअप्यात्मनःस्वभावसिद्धेइत्यर्थः ॥ ४६ ॥ चंद्रेति ॥ श्लो कद्वयंवाक्यम् । चंद्रार्कवह्नितप्तायोरत्नादीनांचंद्रश्चअर्कश्चवह्निश्चतप्तायश्चरत्नानिचतान्यादिर्येषांतेषांतेजोद्रव्याणामर्चिषोज्वालायथाअभि

न्नाअपिभिन्नतयाकल्पिताः यथाचवृक्षाणांपत्राणियथानिर्झराणांप्रवाहाणांकणाःशीकराः ॥ ४७ ॥ तथेदंजगद्बुद्ध्यादिजगद्बुद्धिर्भूतबुद्धि भौतिकबुद्धिरित्यादिकंसर्वंस्फारेब्रह्मणिकल्पितंसत्तदेवब्रह्मात्मकमेवअविद्यावशात्तुअवस्थितंअतज्ज्ञानांदुःखदंप्रवर्तते ॥ ४८ ॥ अहोइ ति ॥ इयंचित्रामायाविश्वविमोहिनीअहोयत्यस्मात्कारणात्आत्मापुरुषः सर्वांगप्रोतमपिसर्वेष्ववयवेषुव्याप्तमपिआत्मानंस्वरूपंनपश्यति नावबुद्ध्यते ॥ ४९ ॥ चिदाकाशेति ॥ ब्रह्मकवचःब्रह्मैवपरिपूर्णब्रह्मभावनैवकवचंरक्षकंयस्यसएवसुखीजीवन्मुक्तः ॥ ५० ॥ अहमिति ॥

तथेदंब्रह्मणिस्फारेजगद्बुद्ध्यादिकल्पितम् ॥ दुःखप्रदमतज्ज्ञानांतदेवातदवस्थितम् ॥ ४८ ॥ अहोनुचित्रामायेयंतातविश्वविमोहिनी ॥ सर्वांगप्रोतमप्यात्मायदात्मानंनपश्यति ॥ ४९ ॥ चिदाकाशमयंसर्वंजगदित्येवभावयन् ॥ यस्तिष्ठत्युपशांतोऽतःसब्रह्मकवचःसुखी ॥ ५० ॥ अहमर्थविमुक्तेनभावेनाभावरूपिणा ॥ सर्वंशून्यंनिरालंबंचिद्रूपमितिभावयेत् ॥ ५१ ॥ इदंरम्यमिदं नेतिबीजंतद्दुःखसंततेः ॥ तस्मिन्साम्याग्निनादग्धेदुःखस्यावसरःकुतः ॥ ५२ ॥ राजन्नभावनास्त्रेणरम्यारम्यविभागिना ॥ पौरुषातिशयेनाशुस्वेनैवांतर्विलूयताम् ॥ ५३ ॥ अभावनेनभावनं विलूयकर्मकाननम् ॥ परंसमेत्यतानवंविशोकएवतिष्ठभो ॥ ५४ ॥

अहमर्थोऽहंकारः तद्विमुक्तेनाभावरूपिणानिरुपाधिकत्वव्यपदेशेनभावेनाशयेनसर्वंजगत्कर्मनिरालंबंनिराश्रयंचिद्रूपंशून्यंचिदाकाशमिति भावयेत् ॥ ५१ ॥ इदमिति ॥ इदंरम्यमिदमरम्यमितिभेदभावनंतद्दुःखसंततेर्बीजंतस्मिन्बीजेसाम्याग्निनादग्धेदुःखस्यकुतोऽवसरः ॥ ५२ ॥ राजन्निति ॥ रम्यारम्यविभागिनाअभावनारूपेणास्त्रेणस्वेनपौरुषातिशयेनचअंतरेवविलूयतांछिद्यताम् ॥ ५३ ॥ अभावनेनेति । भाव नंभेदभावनंतन्निबंधनंकर्मकाननंच अभावनेन [illegible] समेत्यविशोकएवतिष्ठ भोइतिसंबोधनम् ॥ ५४ ॥

भरितेति ॥ भरितभुवनाभोगःपरिपूर्णात्मभावनयापूरितभुवनविस्तारोभूत्वाविभागबहिष्कृतोभेदबुद्धिरहितोगलितकलनाभासोल्लासो निर्वासनज्ञानविलासःविवेकविलासवान् अधिगतपरमानंदस्पंदोनिरामयःशमेनसमःसितउज्वलः स्वच्छोनिर्मलश्चाभोगःपरिपूर्णतायस्यता दृशश्चसन् चिरायअभयचिद्वपुःअभयंचिद्रूपंवपुर्यस्यतादृशोभव ॥ ५५ ॥ अथज्ञानभूमिकाःसप्तसंक्षेपेणदर्शयन्नाह ॥ शास्त्रेति ॥ शास्त्र सत्संगादिभिःप्रज्ञाविवर्धनंयोगस्यप्रथमाभूमिकेत्यर्थः पूर्वंतुशुभेच्छेत्युक्ता ॥ ५६ ॥ विचारणेति ॥ विचारणाद्वितीयाअसंगभावनातृतीया

भरितभुवनाभोगोभूत्वाविभागबहिष्कृतोगलितकलनाभासोल्लासोविवेकविलासवान् ॥ अधि
गतपरमानंदस्पंदश्चिरायनिरामयःशमसमसितस्वच्छाभोगोभवाभयचिद्वपुः ॥ ५५ ॥ मनुरुवा
च ॥ शास्त्रसज्जनसंपर्कैःप्रज्ञामादौविवर्धयेत् ॥ प्रथमाभूमिकैषोक्तायोगस्यनवयोगिनः ॥ ५६ ॥
विचारणाद्वितीयास्यात्तृतीयासंगभावना ॥ विलापिनीचतुर्थीस्याद्वासनाविलयात्मिका ॥५७॥
शुद्धसंविन्मयानंदरूपाभवतिपंचमी ॥ अर्धसुप्तप्रबुद्धाभोजीवन्मुक्तोऽत्रतिष्ठति ॥ ५८ ॥ असंवे
दनरूपाचषष्ठीभवतिभूमिका ॥ आनंदैकघनाकारासुषुप्तसदृशस्थितिः ॥ ५९ ॥ तुर्यावस्थोप
शांताचमुक्तिरेवहिकेवलम् ॥ समतास्वच्छतासौम्यासप्तमीभूमिकाभवेत् ॥ ६० ॥

इयमेवमनसःतनुत्वसंपादकत्वात् तनुमानसेतिपूर्वमुक्ताचतुर्थीतुवासनाविलयात्मकत्वातविलापिनीत्युच्यते पूर्वंतुवासनाविलयाच्चित्तस्यस त्वापत्त्यासत्वापत्तिरित्युक्ता ॥ ५७ ॥ शुद्धेति ॥ शुद्धोनिर्वासनःसंविन्मयश्चआनंदःतद्रूपापंचमी । अत्रअस्यांभूमिकायांअर्धसुप्तप्रबुद्धा भःअर्द्धसुप्तोऽर्धप्रबुद्धश्चयःतादृशव्यवहारोजीवन्मुक्तस्तिष्ठति ॥ ५८ ॥ असंवेदनेति ॥ अर्धत्रयंवाक्यम् । षष्ठीत्वसंवेदनरूपाआनंदैकघ नाकारासुषुप्तसदृशस्थितिः ॥ ५९ ॥ उपशांताचसाभूमिकाजाग्रदादित्रयातीतत्वात् तुर्यावस्थाकेवलंमुक्तिरेव ॥ ६० ॥

इयमेवासंवेदनरूपैवपदार्थाभाविनीतिपूर्वमुक्ता । समतेतिअर्द्धत्रयंवाक्यम् । यासमतासर्वत्रपरिपूर्णतायावासौम्यास्वच्छतासासप्तमीभूमि कानिर्वाणरूपिणीतुर्यातीतापराअवस्थापरिप्रौढासासप्तमोजीवतांनविषयाविदेहमुक्तैकविषयेत्यर्थः । इयंतुस्वरूपनिष्ठतारूपास्वच्छतातुर्य गेतिपूर्वमुक्ता ॥ ६१ ॥ पूर्वेति ॥ श्लोकत्रयंवाक्यम् उक्तासुसप्तसुपूर्वावस्थात्रयंजाग्रदितिसंस्थितं चतुर्थीतुस्वप्नइत्युक्ता यस्मात्तत्रजग त्स्वप्नाभंवर्तते ॥ ६२ ॥ पंचमीत्वानंदैकघनीभावासुषुप्ताख्याअसंवेदनरूपाषष्ठीतुर्यपदाभिधा ॥ ६३ ॥ मनोवचोभिरग्राह्यास्वप्रकाशपदा

तुर्यातीतातुयावस्थापरानिर्वाणरूपिणी ॥ सप्तमीसापरिप्रौढाविषयःसान्नजीवताम् ॥ ६१ ॥ पूर्वावस्थात्रयंत्वत्रजाग्रदित्येवसंस्थितम् ॥ चतुर्थीस्वप्नइत्युक्तास्वप्नाभंयत्रवैजगत् ॥ ६२ ॥ आनंदैकघनीभावासुषुप्ताख्यातुपंचमी ॥ असंवेदनरूपातुषष्ठीभवतिभूमिका ॥ ६३ ॥ तुर्यातीतपदावस्थासप्तमीभूमिकोत्तमा ॥ मनोवचोभिरग्राह्यास्वप्रकाशपदात्मिका ॥ ६४ ॥ अंतःप्रत्याहृतिवशाच्चेत्यंचेन्नविभावितम् ॥ मुक्तएवास्यसंदेहोमहासमतयातया ॥ ६५ ॥ यद्भोगसुखदुःखांशैरपरामृष्टपूर्णधीः ॥ आत्मारामोनरस्तिष्ठेत्तन्मुक्तत्वमुदाहृतम् ॥ ६६ ॥ व्यवहार्युपशांतो वागृहस्थोवाथवायतिः ॥ सशरीरोऽशरीरोवाभवत्येवंमतिःपुमान् ॥ ६७ ॥

त्मिका उत्तमासप्तमीभूमिकातुर्यातीतपदावस्था ॥ ६४ ॥ अंतरिति ॥ चित्तस्यांतःप्रत्याहृतिवशात् अंतर्निरोधाद्धेतोश्चेत्यंनविभावितं चेत्तर्हितयामहासमतयाहेतुनामुक्तएवासिअसंदेहः ॥ ६५ ॥ यदिति ॥ भोगसुखदुःखांशैःभोगेषुविषयेषुयेसुखदुःखांशाःतैरपरामृष्टपूर्ण धीःसन्नरःआत्मारामस्तिष्ठेदितियत् तन्मुक्तत्वमुदाहृतम् ॥ ६६ ॥ व्यवहारीति ॥ एवंमतिःपूर्वोक्तप्रकारमतियुक्तोयःपुमान्सव्यवहारीभ वतुउपशांतोवाभवतु गृहस्थोवाभवतुयतिर्वाभवतुसशरीरोऽशरीरोवाभवतुसर्वथापिमुक्तएवेत्यर्थः ॥ ६७ ॥

नेति ॥ अहंनम्रियेनचजीवामिप्राणानांत्यागोधारणंचदेहादिधर्मएवनपुनरात्मधर्मइत्यर्थः । अयमहंसन्नअसन्नपिनअस्तिनास्तिव्यवहार योरविषयत्वात् अहंनकिंचिच्चित्विश्वविलक्षणाचिद्रूपइतिमत्वाजीवन्नपिनशोचति ॥ ६८ ॥ अलेपकइति ॥ अलेपकोजीवोनीरागःशांतवासनोनिरंशश्चाहंचिदाकाशमस्मीतिमत्वानशोचति ॥ ६९ ॥ ७० ॥ ७१ ॥ तिर्यगिति ॥ चिद्रूपस्यानंतविलासस्यमेमहिमातिर्यगूर्ध्वमधस्ताच्चव्यापकोवर्ततइतिज्ञात्वाकइवक्षीयते ॥ ७२ ॥ बद्धेति ॥ योऽर्थोबद्धवासनंप्रगाढसंगंसेव्यतेभुज्यतेअसावर्थःसुखयतिसुखंकरो

नम्रियेनचजीवामिनाहंसन्नाप्यसन्नहम् ॥ अहंनकिंचिच्चिदितिमत्वाजीवन्नशोचति ॥ ६८ ॥ अलेपकोहमजरोनीरागःशांतवासनः ॥ निरंशोऽस्मिचिदाकाशइतिमत्वानशोचति ॥ ६९ ॥ अहंमत्याविरहितःशुद्धोबुद्धोऽजरामरः ॥ शांतःसमसमाभासइतिमत्वानशोचति ॥ ७० ॥ तृणाग्रेष्वंबरेभानौनरनागामरेषुच ॥ यत्तदस्तितदेवेतिमत्वाभूयोनशोचति ॥ ७१ ॥ तिर्यगूर्ध्वमधस्तान्मेव्यापकोमाहिमाचितः ॥ तस्यानंतविलासस्यज्ञात्वेतिकइवक्षयी ॥ ७२ ॥ बद्धवासनमर्थोयःसेव्यतेसुखयत्यसौ ॥ यत्सुखायतदेवाशुवस्तुदुःखायनाशतः ॥ ७३ ॥ अविनाभावनिष्ठत्वंप्रसिद्धंसुखदुःखयोः ॥ तनुवासनमर्थोयःसेव्यतेवाविवासनम् ॥ नासौसुखायतेनासौनाशकालेनदुःखदः ॥ ७४ ॥ क्षीणवासनयाबुद्ध्याकर्मयत्क्रियतेनघ ॥ तद्दग्धबीजवद्भूयोनांकुरंप्रविमुंचति ॥ ७५ ॥

ति यच्चवस्तुसुखायजायतेतदेवाशुनाशताविनाशाद्धेतोःदुःखायस्यात् ॥ ७३ ॥ अविनेति ॥ इत्थंसुखदुःखयोरविनाभावनिष्ठत्वंप्रसिद्धं अतस्तेसहैवप्रवर्तेतेनिवर्तेतेचयस्त्वर्थस्तनुवासनंविगतवासनंवासेव्यते असावर्थःसुखायमदहेतत्वेनभवतिकालेननाशात्दुःखदोऽपिनभवति ॥ ७४ ॥ क्षीणेति ॥ यत्कर्मक्षीणवासनयाबुद्ध्याक्रियतेतत्कर्मदग्धबीजवत्भूयःसुखदुःखादिरूपमंकुरंनप्रविमुंचति ॥ ७५ ॥

देहेति ॥ देहेंद्रियादिनाकरणौघेनकरणकलापेनकर्मकल्पते । अत्रकरणसमूहेकः कर्ताभोक्तावाउपपद्यते ॥ ७६ ॥ भावनामिति ॥ सर्वं भावेभ्यः सर्वपदार्थेभ्यः सकाशात्तद्विषयांभावनांसमुत्सृज्यप्रत्याहृत्यसमुत्थितःसम्यकैवल्यायोद्यतः पुमान्शशांकवच्छीतलः पूर्णश्चभासातेज साभास्करइवभाति ॥ ७७ ॥ क्रियमाणेति ॥ देहशाल्मलेर्देहएवशाल्मलिर्वृक्षविशेषःतस्यसंबंधिनीक्रियमाणाकृतावाकर्मतूलश्रीःपुण्यापु ण्यकर्मरूपातूलसमृद्धिर्ज्ञानानिलसमुद्धतातत्त्वज्ञानमहावायुनाविक्षिप्तासतीप्रोड्डीयक्कापिगच्छति ॥ ७८ ॥ जंतोःसंबंधिनीसर्वैवकलावि

देहेंद्रियादिनाकर्मकरणौघेनकल्पते ॥ एकःकर्तात्रभोक्तावाकइवांगोपपद्यते ॥ ७६ ॥ भावनांसर्वभा वेभ्यःसमुत्सृज्यसमुत्थितः ॥ शशांकशीतलःपूर्णोभातिभासेवभास्करः ॥ ७७ ॥ क्रियमाणाकृताक र्मतूलश्रीर्देहशाल्मलेः ॥ ज्ञानानिलसमुद्धताप्रोड्डीयक्कापिगच्छति ॥ ७८ ॥ सर्वैवहिकलाजंतोरनभ्या सेननश्यति ॥ एषाज्ञानकलात्वंतःसकृज्जातादिनेदिने ॥ ७९ ॥ वृद्धिमेतिबलादेवसुक्षेत्रव्युप्तबीजव त् ॥ ८० ॥ एकःस्फुरत्यखिलवस्तुषुविश्वरूपआत्मासरःसुजलधिष्विवतोयमच्छम् ॥ संशांतसंकल नभूरिकलापमेकंसत्तांशमात्रमखिलंजगदंगविद्धि ॥ ८१ ॥ मनुरुवाच ॥ यावद्विषयभोगाशाजीवा ख्यातावदात्मनः ॥ अविवेकेनसंपत्तायासाप्याशानतुस्वतः ॥ ८२ ॥

द्याअनभ्यासेनपुनःपुनःपरिशीलनाभावेननश्यति । हिशब्दःप्रसिद्धौ प्रसिद्धोऽयमर्थः ॥ ७९ ॥ ज्ञानंतुसुक्षेत्रव्युप्तशालिवत्अंतर्वर्धतएव ॥ ८० ॥ एकइति ॥ सरःसुजलधिषुचतोयमिवाखिलवस्तुषुविश्वरूपएकएवात्मास्फुरति अतःकारणादखिलंजगत्संशांतसंकलनभूरिकला पंप्रशांतसंकल्पभूयिष्ठकलापंसत्तांशमात्रमेकंवस्तुविद्धि ॥ ८१ ॥ यावदितिश्लोकद्वयंवाक्यम् । आत्मनःपुरुषस्ययावत्यावंतंकालंवि षयभोगाशावर्तते तावदेवजीवाख्याजीवभावः साआशाप्यविवेकेनसंपन्नानतुस्वतः ॥ ८२ ॥

यदातुसाआशाविवेकवशतःक्षयंयातातदाअनामयःसन्नात्माजीवत्वमुत्सृज्यब्रह्मतामेति ॥ ८३ ॥ ऊर्ध्वादिति ॥ ऊर्ध्वादूर्ध्वलोकादधःअधो लोकंव्रजन्नधस्ताच्चपुनरूर्ध्वंव्रजन्कर्मवशतया संसारारघट्टस्यसंसाररूपस्यघटीयंत्रस्यचिंतारज्ज्वांसंकल्पनात्मिकबंधनरज्जौमाघटीभव अरघ ट्टघटवद्भ्रमणभाजनंमाभूः ॥ ८४ ॥ इदमिति ॥ इदंपुत्रकलत्रादिकंममममदीयमहंवास्यपित्रादेःसंबंधीतिव्यवहारंघनभ्रमंमोहाद्येसेवंतेतेश ठाःअधस्तादधोयांतिपुनःपुनरधोगतिमेवप्राप्नुवंति ॥ ८५ ॥ अस्येति ॥ अहमस्यपित्रादेःसंबंधीएषपुत्रादिर्मेमदीयःअयमहमेतादृशोऽहमि

विवेकवशतोयाताक्षयमाशायदातदा ॥ आत्माजीवत्वमुत्सृज्यब्रह्मतामेत्यनामयः ॥ ८३ ॥
ऊर्ध्वादधस्त्वधस्ताच्चपुनरूर्ध्वंव्रजंश्चिरम् ॥ मासंसारारघट्टस्यचिंतारज्ज्वांघटीभव ॥ ८४ ॥
इदंममाहमस्येतिव्यवहारंघनभ्रमम् ॥ येमोहात्परिसेवंतेतेऽधस्ताद्यांत्यधःशठाः ॥ ८५ ॥ अ
स्याहमेषमेसोऽयमहमेवंतुयैःकिल ॥ मोहोबुद्ध्यापरित्यक्तऊर्ध्वादूर्ध्वंप्रयांतिते ॥ ८६ ॥ स्वप्र
काशंस्वमात्मानमवलंब्याविलंबितम् ॥ आस्वसंपूरिताकाशंजगंतिनृपपश्यहे ॥ ८७ ॥ यदैवै
वंचितोरूपंततंबुद्धमखंडितम् ॥ तदैवतीर्णसंसारःपरमेश्वरतांगतः ॥ ८८ ॥ ब्रह्मेंद्रविष्णुवरुणा
यद्यत्कर्तुंसमुद्यताः ॥ तदहंचिद्वपुःसर्वंकरोमीत्येवभावयेत् ॥ ८९ ॥

ति एवंतुमोहोयैर्विवेकिभिःबुद्ध्यापरित्यक्तः तेऊर्ध्वादूर्ध्वंप्रयांतिउत्तरोत्तरमुत्कृष्टामेवगतिंप्रयांति ॥ ८६ ॥ स्वप्रकाशमिति ॥ स्वप्रकाशंस्व मात्मानमविलंबितमेवावलंब्यतत्त्वतोनिश्चित्यआस्वसुखेनतिष्ठ । जगंतिचसर्वाणिसंपूरिताकाशमात्मानमेवपश्य ॥ ८७ ॥ यदेति ॥ एवंततं व्याप्तंचितोरूपंयदैवाखंडितंयथातथाबुद्धं तदैवतीर्णसंसारःसन्बोधात्परमेश्वरतांगतः ॥ ८८ ॥ ब्रह्मेति ॥ ब्रह्मादयोयद्यत्सृष्ट्यादिकंक र्तुंसमुद्यतास्तत्सर्वंचिद्वपुरहंकरोमीत्येवभावयेत् चिद्रूपस्यात्मनएकत्वात् ॥ ८९ ॥

येष्विति ॥ येषुयेषुदर्शनेषुवैदिकेष्ववैदिकेषुवायदायस्मिन्कालेयद्यन्मतंनिगद्यतेतत्सर्वंसत्यमेव हियस्मात्कारणाच्चिद्विलासःअनंकुशोनि
रर्गलः ॥ ९० ॥ चिदिति ॥ चिन्मात्रत्वंप्रयातस्यअतएवतीर्णमृत्योःउत्तीर्णसंसारस्यअचेतसःनष्टचित्तस्ययःपरमानंदोभवेत् असावानं
दःकेनवाआनंदेनोपमीयते । ब्रह्मानंदतुल्यस्यानंदस्याभावात् ॥ ९१ ॥ नापीतिअर्धत्रयंवाक्यम् ॥ भुवनंजगत्कर्तृ नापिशून्यंअशू
न्यमपिन आत्मनोऽन्यस्यवस्तुनोऽभावात् । इत्थमनिर्वचनीयंभुवनंभावयन्भव । एतत्एतादृशमनिर्वचनीयंरूपमासाद्यप्रकृतिरविद्याभुव

येषुयेषुयदायद्यद्दर्शनेषुनिगद्यते ॥ सर्वमेवांगतत्सत्यंचिद्विलासोह्यनंकुशः ॥ ९० ॥ चिन्मात्रत्वं
प्रयातस्यतीर्णमृत्योरचेतसः ॥ योभवेत्परमानंदःकेनासावुपमीयते ॥ ९१ ॥ नाप्यशून्यंनशून्यं
चनाचिद्रूपंनचिन्मयम् ॥ नात्मरूपंनान्यरूपंभुवनंभावयन्भव ॥ एतत्स्वरूपमासाद्यप्रकृतिः
परिशाम्यति ॥ ९२ ॥ नदेशोमोक्षनामास्तिनकालोनेतरास्थितिः ॥ अहंकृतेर्विमोहस्यक्षयेणेयं
विलीयते ॥ प्रकृतिर्भावनानाम्नीमोक्षःस्यादेषएवसः ॥ ९३ ॥ प्रशांतशास्त्रार्थविचारचापलोनिवृ
त्तनानारसकाव्यकौतुकः ॥ निरस्तनिःशेषविकल्पविप्लवःसमःसुखंतिष्ठतिशाश्वतात्मकः ॥ ९४ ॥
मनुरुवाच ॥ येनकेनचिदाच्छन्नोयेनकेनचिदाशितः ॥ यत्रक्वचनशायीचससम्राडिवराजते ९५

नादिरूपापरिशाम्यति ॥ ९२ ॥ नेतिअर्धत्रयंवाक्यम् ॥ मोक्षनामामोक्षशब्दवाच्योदेशःकश्चिन्नास्ति । कालश्चमोक्षनामानास्ति । इत
रास्थितिरवस्थावामोक्षनाम्नीनास्ति । किंतुइयंभावनानाम्नीवासनारूपाप्रकृतिरविद्याअहंकृतिरूपस्यविमोहस्यक्षयेणविलीयतेएषएवप्रकृ
तिविलयएवसमोक्षःस्यात् ॥ ९३ ॥ प्रशांतेति ॥ प्रशांतंशास्त्रार्थविचाररूपंचापलंयस्यनिवृत्तंनानारसंकाव्यविषयंकौतुकंयस्य निरस्ता
निःशेषाविकल्पविभ्रमाभ्रांतयोयस्यतादृशःसमःसाम्यनिष्ठःपुमान्शाश्वतात्मकःसुखंतिष्ठति ॥ ९४ ॥ येनेति ॥ येनकेनचिदनियतेनवस्त्र

वल्कलकंबलकंथादिनाआच्छन्नःआच्छादनवान् येनकेनचिदनियतेनभोज्यवस्तुनाआशितोभोजनवान् यत्रकचनस्थंडिलेपर्यंकेवाशायी यःसबाह्यवस्तुनिःस्पृहोब्रह्मवित्सम्राडिवसाम्राज्याधीश्वरइवराजते ॥ ९५ ॥ वर्णेति ॥ वर्णधर्माश्रमाचारशास्त्रयंत्रणया वर्णाब्राह्मणादयः आश्रमाःब्रह्मचर्यादयः वर्णधर्माणामाश्रमाचाराणांचयानिशास्त्राणिबोधकानितेषांयायंत्रणानियमरूपामर्यादातयाउज्झितोदेहाद्यभिमान रहितःपुमान्पंजरात्केसरीसिंहइवजगज्जालान्निर्गच्छति ॥ ९६ ॥ वाचामितिश्लोकद्वयंवाक्यम् ॥ विषयाशादृशोज्झितःअत्यंतविरक्तः पुमान्वाचामतीतविषयःअतीतवाग्विषयःशरदिनभःस्थलमिवकामपिनिरुपाधिकांशोभामुपगतः ॥ ९७ ॥ गिरौस्थितोमहाह्रदइवगंभीरश्च

वर्णधर्माश्रमाचारशास्त्रयंत्रणयोज्झितः ॥ निर्गच्छतिजगज्जालात्पंजरादिवकेसरी ॥ ९६ ॥ वाचामतीतविषयोविषयाशादृशोज्झितः ॥ कामप्युपगतःशोभांशरदीवनभःस्थलम् ॥ ९७ ॥ गंभीरश्चप्रसन्नश्चगिराविवमहाह्रदः ॥ परानंदरसाक्षुब्धोरमतेस्वात्मनात्मनि ॥ ९८ ॥ सर्वकर्मफलत्यागीनित्यतृप्तोनिराश्रयः ॥ नपुण्येननपापेननेतरेणचलिप्यते ॥ ९९ ॥ स्फटिकःप्रतिबिंबेनयथानायातिरंजनम् ॥ तज्ज्ञःकर्मफलेनांतस्तथानायातिरंजनम् ॥ १०० ॥ विहरन्जनतावृंदेदेहकर्तनपूजनैः ॥ खेदाह्लादौनजानातिप्रतिबिंबगतैरिव ॥ १ ॥

प्रसन्नश्चपरानंदरसाक्षुब्धःपरमानंदास्वादनिश्चलःस्वात्मनिस्वात्मनास्वस्वरूपेणरमते ॥ ९८ ॥ सर्वेति ॥ नेतरेणविलिप्यते। पुण्यपापाभ्यामितरेणजात्यायुर्भोगरूपेणतद्विपाकेनापिनलिप्यते ॥ ९९ ॥ स्फटिकइति ॥ स्फटिकोमणिःप्रतिबिंबेननीलपीतादिनाद्रव्येणयथारंजनंतद्वर्णसंक्रांतिंनायातितथातज्ज्ञोब्रह्मविदपिकर्मफलेनअंतःकरणेनरंजनंनायाति ॥ १०० ॥ विहरन्निति ॥ जनतावृंदेजनताःनानाजातीयाःजनसमूहाःतासांवृंदेव्यूहेविहरन्भेदाऽभिमानरहितस्तज्ज्ञोदेहस्यकर्तनैश्छेदनैःपूजनैःगंधपुष्पादिभिरर्चनैः प्रतिबिंबगतैःस्वदेहप्रतिबिंब

गतैश्छेदनपूजनैरिवखेदाह्लादौनजानाति ॥ १ ॥ निस्तोत्रइति ॥ तज्ज्ञःपुमान्निस्तोत्रःस्वविषयात्परविषयाचस्तोत्रान्निष्क्रांतोनिर्विकारश्च पूज्यपूजाविवर्जितःस्वव्यतिरिक्तस्यपूज्यस्याभावात् सर्वाचारनयक्रमैःकदाचित्संयुक्तःकदाचिद्वियुक्तश्चवर्तते ॥ २ ॥ तस्मादिति ॥ तस्मात्तज्ज्ञाल्लोकोनोद्विजतेसर्वभूताभयप्रदानात् सचलोकान्नोद्विजतेभयहेतोःस्वव्यतिरिक्तस्यवस्तुनोभावात् । रागादिभिस्त्यज्यतेकदा

निस्तोत्रोनिर्विकारश्चपूज्यपूजाविवर्जितः ॥ संयुक्तश्चवियुक्तश्चसर्वाचारनयक्रमैः ॥ २ ॥ तस्मान्नोद्विजतेलोकोलोकान्नोद्विजतेचसः ॥ रागद्वेषभयानंदैस्त्यज्यतेपिचयुज्यते ॥ ३ ॥ प्रमेयेकस्यचिदपिनारोहतिमहाशयः ॥ प्रमेयीक्रियतेचापिबालेनाप्यदुराशयः ॥ ४ ॥ तनुंत्यजतिवातीर्थेश्वपचस्यगृहेऽथवा ॥ माकदाचनवाराजन्वर्तमानेचवाक्षणे ॥ ५ ॥ ज्ञानसंपत्तिसमयेमुक्तोऽसौविगताशयः ॥ अहंभ्रांतिर्हिबंधायमोक्षोज्ञानेनतत्क्षयः ॥ ६ ॥ संपन्नोयस्यसोऽयंतुपूजार्होमनुजैःसदा ॥ सपूजनीयःसस्तुत्योनमस्कार्यःसयत्नतः ॥ ७ ॥ सनिरीक्ष्योऽभिवाद्यश्चविभूतिविभवैषिणा ॥ ८ ॥ नयज्ञतीर्थैर्नतपःप्रदानैरासाद्यतेतत्परमंपवित्रम् ॥ आसाद्यतेक्षीणभवामयानांभक्त्यासतामात्मविदांपदंयत् ॥ ९ ॥

चिद्युज्यतेच ॥ ३ ॥ प्रमेयइति ॥ तज्ज्ञोमहाशयत्वात्कस्यचिदपिप्रभोःप्रमेयेप्रमाविषयेनारोहति महतामपिकदाचित्दुर्लभोभवतीत्यर्थः । असौतज्ज्ञोऽदुराशयत्वात्बालेनापिकदाचित्प्रमेयीक्रियते बालस्यापिकदाचित्सुलभोभवतीत्यर्थः ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ नेति ॥ क्षीणभवामयानामात्मविदांसतांभक्त्यासेवयापरमंपदमासाद्यते । तत्पवित्रंपरमंपदंयज्ञतीर्थतपोदानैरपिनासाद्यते ॥ ९ ॥

एवमुक्त्वासभगवानिति ॥ ब्रह्मगृहंब्रह्मलोकं ॥ ११० ॥ इतिश्रीयोगवासिष्ठविवरणेनिर्वाणप्रकरणेइक्ष्वाकूपाख्यानंनामैकचत्वारिंशःसर्गः ॥ ४१ ॥ पूर्वंस्वविचारेणदुर्बोधमपितत्त्वंगुरूपदेशात्सुबोधमितिदर्शितम् । इदानींबुद्धतत्त्वस्यविश्रांतस्यनास्तिप्रायेणलौकिकोव्यवहारइति निदर्शनार्थंमुनिव्याधवृत्तांतोनिरूप्यते ॥ एवमिति ॥ एवंस्थितेजीवन्मुक्तस्यआकाशगमनादयोऽतिशयानसंतीतिपूर्वमुक्तं एवंस्थितेसति अस्यसन्मतेर्जीवन्मुक्तस्यअपूर्वोऽतिशयःकोऽसौभवति ॥ १ ॥ ज्ञस्येति ॥ ज्ञस्यधीःकस्मिंश्चिदेवविश्वविलक्षणेकुत्रचिदेवतत्त्वेअतिशयेनभ

वसिष्ठउवाच ॥ एवमुक्त्वासभगवान्मनुर्ब्राह्मंगृहंययौ ॥ इक्ष्वाकुरपितांदृष्टिमवष्टभ्यस्थिरोऽभवत् ॥ ११० ॥ इतिश्रीनिर्वाणप्रकरणेइक्ष्वाकूपाख्यानंनामएकचत्वारिंशःसर्गः ॥ ४१ ॥ श्रीरामउवाच ॥ एवंस्थितेहिभगवन्जीवन्मुक्तस्यसन्मतेः ॥ अपूर्वोऽतिशयःकोऽसौभवत्यात्मविदांवर ॥ १ ॥ वसिष्ठउवाच ॥ ज्ञस्यकस्मिंश्चिदेवांगभवत्यतिशयेनधीः ॥ नित्यतृप्तःप्रशांतात्मासआत्मन्येवतिष्ठति ॥ २ ॥ मंत्रसिद्धैस्तपःसिद्धैस्तंत्रसिद्धैश्चभूरिशः ॥ कृतमाकाशयानादिकातत्रस्यादपूर्वता ॥ ३ ॥ अणिमाद्यपि संप्राप्तंतादृशैरेवभूरिशः ॥ यत्नेनसाधितत्वात्तैर्नेतरेणात्मदर्शिना ॥ ४ ॥ एषएवविशेषोऽस्यनसमोमूढबुद्धिभिः ॥ सर्वत्रास्थापरित्यागान्नीरागममलंमनः ॥ ५ ॥

वति । सचतावतैवनित्यतृप्तःप्रशांतात्माचसन्नात्मन्येवतिष्ठतिनान्यदाशास्ते ॥ २ ॥ मंत्रेति ॥ कातत्रस्यादपूर्वताआकाशगमनादेःपक्ष्यादिसाधारणत्वात् जीवभावस्यवानिवृत्तेःकोवाअपूर्वातिशयइत्यर्थः ॥ ३ ॥ अणिमाद्यपिअष्टविधमैश्वर्यमपितादृशैर्मंत्रादिसिद्धैरेवभूरिशःसंप्राप्तंइतरेणत्वात्मदर्शिनानसंप्राप्तम् । कुतस्तैरेवमंत्रादिसिद्धैर्यत्नेनसाधितत्वात । आत्मदर्शिनात्वणिमाद्यनपेक्षिणाप्रयत्नेनासाधितत्वात् ॥ ४ ॥ एषएवेति ॥ अस्यज्ञस्यसर्वत्रबाह्यवस्तुनिआस्थापरित्यागाद्धेतोःसर्वत्रमनोनीरागममलंचेतियत् एषएवास्यविशेषोमूढबुद्धिभिःस

मःसाधारणोनभवति ॥ ५ ॥ तमेवविशेषमाह ॥ एतावदिति ॥ अलिंगमूर्तेर्वर्णाश्रमादिलिंगरहितस्यसंशांतसंसृतिचिरभ्रमनिर्वृतस्यसं शांतःसंसृतिरूपःचिरभ्रमोयस्य अतएवनिर्वृतस्यनिश्चिंतस्यतज्ज्ञस्यमदनकोपविषादमोहलोभापदांकामक्रोधादिनिमित्तानांआपदामनुदि नंनिपुणंनिर्विकारंतनुत्वंक्षयइतियत्एतावदेवलिंगविशेषइत्यर्थः ॥ ६ ॥ यथेति ॥ यथाहिकश्चिद्विप्रःस्वमात्मीयंसत्वंजात्यादिभिः प्रशस्त त्वमुपेक्ष्याविचार्यदुरीहयापुत्रोत्पादनपर्यंतशूद्रांगनासंगादिरूपयादुश्चेष्टयाशूद्रत्वमंगीकरोति । तथाचमनुः । शूद्रांशयनमारोप्यब्राह्मणोया त्यधोगतिम् ॥ जनयित्वासुतंतस्यांब्राह्मण्यादेवहीयतइति ॥ तथादुरीहयास्वसंकल्पेनस्वाविद्ययावाईश्वरोऽपिजीवत्वमंगीकरोति । अने

एतावदेवखलुलिंगमलिंगमूर्तेःसंशांतसंसृतिचिरभ्रमनिर्वृतस्य ॥ तज्ज्ञस्ययन्मदनकोपविषाद मोहलोभापदामनुदिनंनिपुणंतनुत्वम् ॥ ६ ॥ वसिष्ठउवाच ॥ यथासत्वमुपेक्ष्यस्वंशनैर्वि प्रोदुरीहया ॥ अंगीकरोतिशूद्रत्वंतथाजीवत्वमीश्वरः ॥ ७ ॥ भूतानिद्विविधान्येवप्रतिसर्गेस्फु रंतिवै ॥ आद्यचित्स्पंदजातानितानिनिष्कारणानिवै ॥ ८ ॥ ईश्वरात्समुपागत्यपुनर्जन्मांतरा णितु ॥ भूतान्यनुभवंत्यंगस्वकृतैरेवकर्मभिः ॥ कार्यकारणभावोऽयमीदृशोजन्मकर्मभिः ॥ ९ ॥

नजीवेनात्मनानुप्रविश्यनामरूपेव्याकरवाणीतिश्रुतेः ॥ ७ ॥ भूतानीतिश्लोकद्वयंसार्धंवाक्यम् ॥ द्विविधान्येवभूतानिचराचररूपाःप्रा णिनःप्रतिसर्गंस्फुरंतिप्रादुर्भवंति । तत्रयानिभूतानिआद्यचित्स्पंदजातानि स्पंदःस्फुरणंसिसृक्षेतियावत् । आद्यचित्स्पंदाज्जातानिभूतानि निष्कारणानिकर्मादेर्जन्मकारणस्याभावात् आत्मनश्चनिर्विकारत्वेनाकारणत्वात् ॥ ८ ॥ ईश्वरात्समुपागत्यतुभूतानिस्वकृतैःकर्मभिरेवपु नःपुनर्जन्मांतराणिअनुभवंति । जन्मकर्मणोरयंकार्यकारणभावईदृशःउक्तप्रकारः प्रथमंजन्मकर्मणःसुकृतदुष्कृतरूपस्यकारणं अनंतरंतुकर्म जन्मनोनामरूपस्यकारणमित्यर्थः ॥ ९ ॥

एतदेवस्पष्टयति । अकारणमितिअर्धत्रयंवाक्यम् ॥ सुखदुःखयोरित्युपलक्षणं जात्यायुषोरपिनानारूपयोःस्वकर्माण्येवकारणंआत्मा ज्ञानातआत्मतत्त्वस्याज्ञानात् समुत्पन्नःसंकल्पस्तुकर्मणांकारणम् ॥ १० ॥ ११ ॥ १२ ॥ सावधानइति ॥ चशब्दोहेत्वर्थे । अतोहेतोःस्व संकल्पदशाःशनैरभ्यासक्रमेणपरिहरन् ग्राह्यग्राहकसंगमेदृश्यदर्शनसंबंधेअजस्रमेवसावधानोभव अव्यवहितोभव ॥ १३ ॥ अवधानप्रका



अकारणमुपायांतिसर्वेजीवाःपरास्पदात् ॥ पश्चात्तेषांस्वकर्माणिकारणंसुखदुःखयोः ॥ १० ॥
आत्माज्ञानात्समुत्पन्नःसंकल्पःकर्मकारणम् ॥ ११ ॥ संकल्पित्वंहिबंधस्यकारणंतत्परित्यज ॥
मोक्षस्तुनिःसंकल्पित्वंतदभ्यासंधियाकुरु ॥ १२ ॥ सावधानोभवत्वंचग्राह्यग्राहकसंगमे ॥ अ
जस्रमेवसंकल्पदशाःपरिहरन्शनैः ॥ १३ ॥ माभवग्राह्यभावात्माग्राहकात्माचमाभव ॥ भाव
नामखिलांत्यक्त्वायच्छिष्टंतन्मयोभव ॥ १४ ॥ अजस्रंयंयमेवार्थंयत्तत्पक्षगणोऽनघ ॥ बध्य
तेतत्ररागेणविरागेणविमुच्यते ॥ १५ ॥ यत्किंचिद्रोचतेचित्तेतद्बद्धोऽसिभवस्थितौ ॥ नकिंचि
द्रोचतेचित्तेतन्मुक्तोऽसिभवस्थितौ ॥ १६ ॥ तस्मात्पदार्थनिचयाद्ग्रामस्थावरजंगमात् ॥ तृणादे
र्देवपर्यंतान्माकिंचित्तवरोचताम् ॥ १७ ॥

रमेवाह ॥ माभवेति ॥ ग्राह्यभावात्मादृश्यभावादात्माऽभिमानीमाभव । ग्राहकात्माद्रष्टृत्वाभिमानीमाभवकिंतर्हि अखिलानांभावानांकर्म कर्त्रादिवासनांत्यक्त्वायच्छिष्टंवस्तुकर्मादिविलक्षणंतन्मयोभव ॥ १४ ॥ अजस्रमिति ॥ अक्षगणःइंद्रियसमूहोऽयंयमेवार्थमजस्रंपततिगच्छ ति तत्ररागेणचेत्पततितर्हिबद्ध्यतेविरागेणचेत्पततिविमुच्यते ॥१५॥ एतदेवाह ॥ यदिति ॥१६॥ तस्मादिति ॥ तवतुभ्यमित्यर्थः ॥१७॥

॥ १८ ॥ १९ ॥ २० ॥ विवेकेनेति ॥ विवेकेनअतितीक्ष्णंयन्मनस्तेनमनसामलिनंमनश्छिधीत्यर्थः ॥ २१ ॥ २२ ॥ २३ ॥
॥ २४ ॥ स्वेति ॥ चित्तमेवास्यजीवस्यआतिवाहिकंलोकांतरगमनागमनयोग्यंसूक्ष्मरूपमित्यर्थः ॥ २५ ॥ २६ ॥ एतदिति ॥ तुरीयं

अरतिःसन्यदश्नासियत्करोषिजहासियत् ॥ नकर्तासिनभोक्तासितत्रमुक्तमतिःशमी ॥ १८ ॥ संतोऽतीतंनशोचंतिभविष्यच्चिंतयंतिनो ॥ वर्तमानंचगृह्णंतिक्रमप्राप्तंसदानघ ॥ १९ ॥ मनसिग्रथिताःपाशास्तृष्णामोहमदादयः ॥ मनसैवमनोनामछेदनीयंविजानता ॥ २० ॥ विवेकेनातितीक्ष्णेनबलादयइवायसा ॥ मनसैवमनश्छिधिसंसारभ्रांतिशांतये ॥ २१ ॥ क्षालयंतिमलेनैवमलंक्षालनकोविदाः ॥ वारयंत्यस्त्रमस्त्रेणविषंप्रतिविषेणच ॥ २२ ॥ जीवस्यत्रीणिरूपाणिस्थूलसूक्ष्मपराणितु ॥ तत्रास्ययत्परंरूपंतद्भजद्वेपरित्यज ॥ २३ ॥ पाणिपादमयोयोऽयंदेहोभोगायवल्गति ॥ भोगार्थमेतज्जीवस्यरूपंस्थूलमिहास्थितम् ॥ २४ ॥ स्वसंकल्पमयाकारेयावत्संसारभावियत् ॥ चित्तंतद्विद्धिजीवस्यरूपंरामातिवाहिकम् ॥ २५ ॥ आद्यंतरहितंसत्यंचिन्मात्रंनिर्विकल्पकम् ॥ यत्तद्विद्धिपरंरूपंजीवस्याद्यंतृतीयकम् ॥ २६ ॥ एतत्तुर्यपदंशुद्धमत्रबद्धपदोभव ॥ संपरित्यज्यपूर्वेद्वेमातत्रात्ममतिर्भव ॥ २७ ॥ श्रीरामउवाच ॥ जाग्रत्स्वप्नसुषुप्तेषुस्थितंत्रिष्वप्यलक्षितम् ॥ तुर्यंब्रूहिविशेषेणाविविच्यमुनिनायक ॥ २८ ॥

स्थूलसूक्ष्मकारणशरीरापेक्षयाचतुर्थम् ॥ २७ ॥ जाग्रदिति ॥ जाग्रदादिषुत्रिषुस्थितं अवस्थितमपिजाग्रदादिभिरलक्षितंअवशेषितंअसं

स्पंदंतुर्यंब्रूहीत्यर्थः ॥२८॥ अहमिति ॥ यच्चैतन्यंअहंभावानहंभावौ अहंनाहमितिचाभिमानसदसती सत्त्वासत्त्वाभिमानंचत्यक्त्वाअसंसक्तं स्वच्छंचस्थितंतत्तादृशचैतन्यंतुर्यमुच्यते ॥ २९ ॥ येति ॥ स्वच्छानिष्कलंका समतयाशांततयाचजीवन्मुक्तस्यस्थितिरूपायांव्यवहृतौसा क्ष्यवस्थाऔदासीन्यावस्थासातुर्यकलनातुर्यावस्थोच्यते ॥ ३० ॥ नैतदिति ॥ एतत्तुर्यपदंजाग्रन्नस्वप्नश्चन संकल्पानामभावात् । एतत्सुषु



वसिष्ठउवाच ॥ अहंभावानहंभावौत्यक्त्वासदसतीतथा ॥ यदसंसक्तमस्वच्छंस्थितंतत्तुर्यमुच्यते २९ यास्वच्छासमताशांताजीवन्मुक्तव्यवस्थितिः ॥ साक्ष्यवस्थाव्यवहृतौसातुर्यकलनोच्यते ॥ ३० ॥ नैतज्जाग्रन्नचस्वप्नःसंकल्पानांमसंभवात् ॥ सुषुप्तभावोनाप्येतदभावाज्जडतास्थितेः ॥ ३१ ॥ शांतसम्यक्प्रबुद्धानांयथास्थितमिदंजगत् ॥ विलीनंतुर्यमित्याहुरबुद्धानांस्थिरंस्थितम् ॥ ३२ ॥ अहंकारकलात्यागेसमतायाःसमुद्गमे ॥ विशरारौकृतेचित्तेतुर्यावस्थोपतिष्ठते ॥ ३३ ॥ वसिष्ठउवाच ॥ अथेमंशृणुदृष्टांतंकथ्यमानंमयाधुना ॥ प्रबुद्धोऽपियथाबोधमुपैषिविबुधोपम ॥ ३४ ॥ कस्मिंश्चित्काननाभोगेमहामौनव्यवस्थितम् ॥ दृष्ट्वाद्भुतमिदंकिंचिन्मुनिंपप्रच्छलुब्धकः ॥ ३५ ॥ पश्चादुपगतोबाणभिन्नंमृगमभिद्रतम् ॥ मुनेमदीयबाणेनविद्धोमृगइहागतः ॥ क्वप्रयातोमृगइतिप्रत्युवाचसतंमुनिः ॥ ३६ ॥

प्तभावोऽपिन जडतास्थितेरभावात् ॥ ३१ ॥ शांतेति ॥ शांतायेसम्यक्प्रबुद्धाःतेषांयथास्थितमेवेदंजगत्ब्रह्मणिविलीनंतत्तुर्यमित्याहुः । अबुद्धानांतुस्थिरमेवस्थितम् ॥ ३२ ॥ अहमिति ॥ विशरारौविशरणशीले ॥ ३३ ॥ ३४ ॥ कस्मिन्निति ॥ महामौनव्यवस्थितं महामौनंनामद्वैतप्रपंचाननुसंधानम् ॥ ३५ ॥ ३६ ॥

समेति ॥ समशीलाःसमंब्रह्मैवशीलयन्त्यनुसंदधतइतिसमशीलाः। शीलसमाधाविति धातुः ॥ ३७ ॥ ३८॥ जाग्रदिति ॥ तुर्येपूर्वोक्तायां तुर्यावस्थायाम् ॥ ३९ ॥ ४० ॥ अतइति ॥ तुर्येतरातुर्यव्यतिरिक्तादशावस्तुतोनास्तिकल्पितत्वात् । हियस्मात्कारणात्निर्विकल्पाचि देवतुर्यम् ॥ ४१ ॥ जाग्रदिति ॥ हियस्मात्कारणात् जाग्रत्स्वप्नसुषुप्ताख्यंत्रयंचेतसएवरूपंअवस्थानात्मनोऽतोघोरंशांतंमूढंचेतिजाग्रदादिषु

समशीलावयंसाधोमुनयोवनवासिनः ॥ नास्माकमस्त्यहंकारोऽव्यवहारेषुयःक्षमः ॥ ३७ ॥ स
र्वाणींद्रियकर्माणिकरोतीहसखेमनः ॥ अहंकारमयंतन्मेनूनंप्रगलितंचिरम् ॥ ३८ ॥ जाग्रत्स्व
प्नसुषुप्ताख्यादशावेद्मिनकाश्चन ॥ तुर्यएवावतिष्ठेऽहंतत्रदृश्यंनविद्यते ॥ ३९ ॥ वसिष्ठउवाच ॥
इतितस्यवचःश्रुत्वामुनिमुख्यस्यराघव ॥ लुब्धकोऽर्थमविज्ञायजगामाभिमतांदिशम् ॥ ४० ॥
अतोवच्मिमहाबाहोनास्तितुर्येतरादशा ॥ निर्विकल्पाहिचित्तुर्यंतदेवास्तीहनेतरत् ॥ ४१ ॥
जाग्रत्स्वप्नसुषुप्ताख्यंत्रयंरूपंहिचेतसः ॥ शांतंघोरंचमूढंचत्र्यात्मचित्तमिहास्थितम् ॥ ४२ ॥
घोरंजाग्रन्मयंचित्तंशांतंस्वप्नमयंस्थितम् ॥ मूढंसुषुप्तभावस्थंत्रिभिर्हीनंमृतंभवेत् ॥ ४३ ॥
यच्चचित्तंमृतंयच्चसत्वमेकंस्थितंसमम् ॥ तदेवयोगिनःसर्वेयत्नात्संपादयंतिहि ॥ ४४ ॥

चित्तंत्र्यात्म त्रयआत्मानःस्वभावायस्यताट्टशंस्थितम् ॥ ४२ ॥ एतदेवविवृणोति ॥ जाग्रन्मयंचित्तंघोरंभवेत्सुखदुःखसंरंभबाहुल्यात् स्वप्न मयंचित्तंशांतंतथाविधसंरंभाभावात् सुषुप्तभावस्थंमूढंजाड्यभूयिष्ठत्वात् । त्रिभिःशांतादिरूपैःहीनंतुचित्तंमृतंभवेत् निर्विकारत्वात् ॥ ४३॥ यच्चेति ॥ यच्चचित्तंमृतमित्युक्तं तच्चतदेवचित्तंसममेकंचसत्वंसत्यमुक्तंयस्थितं अतस्तदेवचित्तंसर्वेयोगिनोयत्नात्संपादयंति ॥ ४४ ॥

समस्तेति ॥ यत्रयस्मिंस्तुर्येपदे ॥ ४५ ॥ इतिश्रीनिर्वाणप्रकरणेमुनिव्याधोपाख्याननामद्विचत्वारिंशःसर्गः ॥ ४२ ॥ पूर्वंविश्रांतस्यबाह्यव्यवहारभारोनास्तीतिदर्शितम् । इदानींसर्वस्यचास्यज्ञानशास्त्रस्यज्ञानभूमिकासारत्वात्तत्स्वरूपंविस्तरेणनिरूपयितुंअंतिममिदमाख्यानमारभ्यते । सिद्धांतइति ॥ शांतमग्रिममिदंब्रह्मैवास्तिअविद्यामायातत्कार्यंचनास्तीतिसर्वप्रपंचापह्नवएवाध्यात्मशास्त्राणांसिद्धांतः ॥ १ ॥ शांतइतिश्लोकद्वयंवाक्यम् । शांतादिलक्षणेब्रह्मेतिकलिताभिधेचिदाकाशएवकेचिद्वादिनःशून्यत्वंकेचित्तुविज्ञानमात्रतांकेचित्पुनरीश्वररूप

समस्तसंकल्पविलाससमुक्तेतुर्येपदेतिष्ठनिरामयात्मा ॥ यत्रस्थिताःसाधुसदैवमुक्ताःप्रशांतभेदामुनयोमहांतः ॥ ४५ ॥ इतिश्रीनिर्वाणप्रकरणेमुनिव्याधोपाख्याननामद्विचत्वारिंशःसर्गः ॥ ४२ ॥ वसिष्ठउवाच ॥ सिद्धांतोऽध्यात्मशास्त्राणांसर्वापह्नवएवहि ॥ नाविद्यास्तीहनोमायाशांतंब्रह्मेदमग्रिमम् ॥ १ ॥ शांतएवचिदाकाशेस्वस्थेसमसमात्मनि ॥ समग्रशक्तिखचितेब्रह्मेतिकलिताभिधे ॥ २ ॥ निर्णीयकेचिच्छून्यत्वंकेचिद्विज्ञानमात्रताम् ॥ चिकेदीश्वररूपत्वंविवदंतेपरस्परम् ॥ ३ ॥ सर्वमेवपरित्यज्यमहामौनीभवानघ ॥ निर्वाणवान्निर्मननःक्षीणचित्तःप्रशांतधीः ॥ ४ ॥ आत्मन्येवप्रशांतात्मामूकांधबधिरोपमः ॥ नित्यमंतर्मुखोभूत्वात्वमास्वान्तःप्रपूर्णधीः ॥ ५ ॥ जाग्रत्येवसुषुप्तस्थःकुरुकर्माणिराघव ॥ अंतःसर्वपरित्यागीबहिःकुरुयथागतम् ॥ ६ ॥

त्वंचनिर्णीयपरस्परंविवदंते ॥२॥ ३ ॥ सर्वमिति ॥ त्वंचसर्वमेवविवादंपरित्यज्यनिर्मननोनिःसंकल्पविकल्पःक्षीणचित्तोनिर्वासनचित्तःप्रशांतधीश्चसन्महामौनीबाह्यमननुसंदधन्निर्वाणवान्जीवन्मुक्तोभव ॥ ४ ॥ आत्मनीति ॥ त्वंनित्यमंतर्मुखोभूत्वाआत्मन्येवप्रशांतात्मानिर्वृतचित्तःमूकांधबधिरोपमःचित्तस्यांतर्मुखत्वात् निष्फलबाह्येंद्रियव्यापारःअंतःप्रपूर्णधीरास्वतिष्ठ ॥ ५ ॥ जाग्रतीति ॥ जाग्रत्येवसत्येवबाह्येंद्रिय

व्यापारेसुषुप्तस्थोनिर्विकारचित्तःकर्माणिकुरु। तदेवस्पष्टयति अंतःसर्वपरित्यागीरागद्वेषादिकंसर्वंपरित्यज्यबहिर्यथागतंयथाप्राप्तंकर्मकुरु ६ चित्तेति ॥ यतश्चित्तसत्तासत्तेएवपरेदुःखसुखे अतश्चिदेकात्माचिदेकरसःसन्अवेदनात्बाह्यानन्नुसंधानाद्धेतोश्चित्तंक्षयंनय ॥ ७ ॥ दृष्टेति ॥ रम्यमरम्यंवादृष्ट्वापाषाणवत्समंनिर्विकारंस्थेयं एतावतैवात्मयत्नेनसंसृतिर्जिताभवति ॥ ८ ॥ संवेदनीयमिति ॥ सुखमेतत्दुःखमेतत्मध्यममनुभवरूपमेतदितित्रितयमपिनसंवेदनीयंनानुसंदधानीयम् एतावतात्मयत्नेनअनंतोदुःखांतःआत्यंतिकोदुःखनिवृत्तिराप्यते ॥ ९ ॥ आपी

चित्तसत्तापरंदुःखंचित्तासत्तापरंसुखम् ॥ अंतश्चित्तंचिदेकात्मानयक्षयमवेदनात् ॥ ७ ॥ दृष्ट्वा रम्यमरम्यंवास्थेयंपाषाणवत्समम् ॥ एतावतात्मयत्नेनजिताभवतिसंसृतिः ॥ ८ ॥ संवेदनीयंनसुखंनासुखंनैवमध्यमम् ॥ एतावतात्मयत्नेनदुःखांतोऽनंतआप्यते ॥ ९ ॥ आपीनमंडलशशांकवदंतरेवश्रीमद्रसायनमयःसुखमेतितज्ज्ञः ॥ विज्ञातसर्वभुवनत्रयवस्तुसारःकुर्वन्ननाम कुरुतेपरमभ्युपेतः ॥ १० ॥ श्रीरामउवाच ॥ सप्तानांयोगभूमीनामभ्यासःक्रियतेकथम् ॥ कीदृशानिचचिह्नानिभूमिकांप्रतियोगिनः ॥ ११ ॥ वसिष्ठउवाच ॥ प्रवृत्तश्चनिवृत्तश्चभवतिद्विविधःपुमान् ॥ स्वर्गापवर्गौन्मुखयोःशृणुलक्षणमेतयोः ॥ १२ ॥ कियत्तन्नामनिर्वाणंवरंसंसृतिरेवमे ॥ इतिनिर्णीयकर्तायःसप्रवृत्तउदाहृतः ॥ १३ ॥

नेति ॥आपीनमंडलशशांकवत्पूर्णेंदुवत्तज्ज्ञःअंतःश्रीमद्रसायनमयःअमृतमयःसुखंस्वरूपसुखमेति। विज्ञातसर्वभुवनत्रयवस्तुसारःतज्ज्ञःपरंपरमात्मानंअभ्युपेतःकर्माणिकुर्वन्नपिननामकुरुतेनकुरुतएव अभिमानाभावात् ॥१०॥११॥ प्रवृत्तइति ॥ स्वर्गापवर्गौन्मुखयोः सकामधर्मानुष्ठानेनस्वर्गोन्मुखःप्रवृत्तः निष्कामधर्मानुष्ठानेनापवर्गोन्मुखोनिवृत्तः ॥ १२ ॥ कियदिति ॥ तत्निर्वाणंनामकियत्अल्पमेव भोक्तव्यस्य

वस्त्वंतरस्याभावात् संसृतिरेवमेवरंप्रार्थनीयंवस्तु भोक्तव्यानांविषयसुखानामानंत्यात्इतिनिर्णीययः प्रवृत्तिहेतुभूतानिकर्माणिकर्तासपुमान्प्र
वृत्तउदाहृतः ॥ १३ ॥ चलेति ॥ चलार्णवयुगच्छिद्रकूर्मग्रीवाप्रवेशवत् चलयोरर्णवयोर्युगस्ययुग्मस्यछिद्रेमध्यवर्तितीरविवरेकूर्मस्यग्रीवया
साधनभूतयाप्रवेशेसति यथापुरतोनिर्गमनेपश्चान्निवर्तनेतथैवछिद्रावस्थानेवानचक्वापिविश्रांतिः तथाप्राक्तनंभवसागरंपरित्यज्यभवांतरंप्र
विविक्षोर्जीवस्यनक्वापिविश्रांतिः। तथाहि। प्राक्तनेजन्मनिजरामरणादिदुःखपरंपरा भाविनिबाल्यादिदुःखसंततिः मध्यवर्तिनियातनादेहेग
र्भवासेचमहत्दुःखमिति। इत्थंदुःखमयानांअनेकेषांजन्मनांअंतेपुमान्कुतश्चित्पुण्यपरिपाकात्विवेकीजायते ॥ १४ ॥ असारेति ॥ संसा

चलार्णवयुगच्छिद्रकूर्मग्रीवाप्रवेशवत् ॥ अनेकजन्मनामंतेविवेकीजायतेपुमान् ॥ १४ ॥ असा
रावतसंसारव्यवस्थालंममैतया ॥ किंकर्मभिःपर्युषितैर्दिनंतैरेवनीयते ॥ १५ ॥ क्रियातिशयनिर्मु
क्तंकिंस्याद्विश्रमणंपरम् ॥ इतिनिश्चयवान्योऽतःसनिवृत्तइतिस्मृतः ॥ १६ ॥ कथंविरागवान्भूत्वा
संसाराब्धितराम्यहम् ॥ एवंविचारणपरोयदाभवतिमन्मतिः ॥ १७ ॥ विरागमुपयात्यंतर्वास
नास्वनुवासरम् ॥ क्रियासूदाररूपासुक्रमतेमोदतेऽन्वहम् ॥ १८ ॥ ग्राम्यासुजडचेष्टासुसततंवि
चिकित्सति ॥ नोदाहरतिमर्माणिपुण्यकर्माणिसेवते ॥ १९ ॥

रव्यवस्थाअसारानिःसाराबत ममएतयासंसारव्यवस्थयाअलम्। पर्युषितैर्गतसारैःकर्मभिरापाकफलं किमितितैरेवपर्युषितैःकर्मभिर्दिनमखि
लंनीयते ॥ १५ ॥ क्रियातिशयेति ॥ क्रियातिशयेननिर्मुक्तंकर्मफलतारतम्यरहितं परमुत्कृष्टंविश्रमणंकिंस्यात् इत्येवमंतर्निश्चयवान् यो
मुमुक्षुःसनिवृत्तइतिस्मृतः ॥ १६ ॥ कथमितिश्लोकषट्कंवाक्यम् ॥ विरागोवैराग्यम् ॥ १७ ॥ अनुवासरंप्रतिदिनंवासनासुविरागमुपया
ति। उदाररूपासुप्रशस्तासुक्रमतेकर्तुमुत्सहते। वृत्तिसर्गतायनेषुक्रमइत्यात्मनेपदम् ॥ १८ ॥ ग्राम्यास्विति ॥ ग्राम्यासुग्रामेभवासु ज

डानांचेष्टासुकृष्यादिषुविचिकित्सतिसंशयेनयुक्तइत्यर्थः। परेषांमर्माणिनोदाहरतिनोद्धाटयति। नकंचिन्मर्मणिस्पृशेदितिनिषेधात् ॥१९॥ अनन्योद्वेगकारीणिअन्येषामभयंकराणि मृदुकर्माणिअहिंस्राणिकर्माणि ॥ २० ॥ स्नेहप्रणयगर्भाणि स्नेहःप्रेमाप्रणयोविश्रंभस्तद्गर्भाणि ॥२१॥ मनसावाचाचसज्जनान् ज्ञानिनउपसेवतेशुश्रूषते। इत्थमाचरन्सन्मतिःप्रथमांशुभेच्छारूपामेकांभूमिकांप्राप्तोभवतीत्यन्वयः ॥२२॥ एवमिति ॥ संसारोत्तरणंप्रतिएवंपूर्वोक्तप्रकारेणयोविचारवान्स्यात्सएवभूमिकावानित्युक्तःप्रथमभूमिकांप्राप्तइत्युच्यते। शेषस्तुसन्मार्गव

अनन्योद्वेगकारीणिमृदुकर्माणिसेवते ॥ पापाद्बिभेतिसततंनचभोगमपेक्षते ॥ २० ॥ स्नेहप्रणयगर्भाणिपेशलान्युचितानिच ॥ देशकालोपपन्नानिवचनान्यभिभाषते ॥ तदासौप्रथमामेकां प्राप्तोभवतिभूमिकाम् ॥ २१ ॥ मनसाकर्मणावाचासज्जनानुपसेवते ॥ यतःकुतश्चिदानीयज्ञान शास्त्राण्यवेक्षते ॥ २२ ॥ एवंविचारवान्यःस्यात्संसारोत्तरणंप्रति ॥ सभूमिकावानित्युक्तःशेषस्त्वार्यइतिस्मृतः ॥ २३ ॥ विचारनाम्नीमितरामागतोयोगभूमिकाम् ॥ श्रुतिस्मृतिसदाचारधारणाध्यानकर्मणः ॥ मुख्ययाव्याख्ययाख्यातान्श्रयतिश्रेष्ठपंडितान् ॥ २४ ॥ पदार्थप्रविभागज्ञःकार्याकार्यविनिर्णयम् ॥ जानात्यधिगतश्रव्योगृहंगृहपतिर्यथा ॥ २५ ॥

र्तीआर्यइतिस्मृतः ॥ २३ ॥ विचारेतिश्लोकपंचकंवाक्यम् ॥ श्रुतिस्मृतिसदाचारधारणाध्यानकर्मणःश्रुत्यादयःकर्माणिकर्तव्यानिअनुसंधेयानिचयेषांतान्। मुख्ययाप्रशस्तयाव्याख्ययाअध्यात्मशास्त्राणांव्याख्यानेनख्यातान्श्रेष्ठपंडितान्श्रयति। ध्यानकर्मणामितिपाठेनिर्धारणेषष्ठी। श्रुत्यादितत्पराणांमध्येयेश्रेष्ठाःपंडितास्तान्श्रयतीत्यर्थः ॥ २४ ॥ पदार्थप्रविभागज्ञःनित्यानित्यवस्तुप्रविभागज्ञःअधिगतश्रव्यःश्रुताध्यात्मशास्त्रःगृहपतिःगृहमिवकार्याकार्यविनिर्णयंतत्त्वतोजानाति ॥ २५ ॥

ईषद्बहिरर्थितांस्फुरितामपिमदाभिमानमात्सर्यदंभमोहातिशायितांमदादीनामतिशयसंपत्तिंअहिस्त्वचमिवत्यजति ॥ २६ ॥ इत्थंभूतमतिःपूर्वोक्तसद्वासनावासितमतिःसःद्वितीयभूमिकांप्राप्तोगुरुसज्जनसेवयासाधनेनशास्त्रेरहस्यंतत्त्वंयथावत्सम्यगधिगच्छति ॥ २७ ॥ असंगेतिश्लोकपंचकंवाक्यम् ॥ अंससंगाभिधांदृतीयांतनुमानसेतियापूर्वोक्तासैवमानमस्य तनुत्वाद्विषयेष्वासंगाभावादसंसंगाभिधासंपन्नेतिनपूर्वोत्तरविरोधः ॥ २८ ॥ शास्त्राणांअध्यात्मविषयाणांवाक्यार्थेआत्माद्वैतलक्षणेयथावन्निश्चलांमतिमाधायतापसाश्रमेषुविश्रांतैरध्यात्म

मदाभिमानमात्सर्यदंभमोहातिशायिताम् ॥ बहिरप्यर्थितामीषत्त्यजत्यहिरिवत्वचम् ॥ २६ ॥
इत्थंभूतमतिःशास्त्रेगुरुसज्जनसेवया ॥ सरहस्यमशेषेणयथावदधिगच्छति ॥ २७ ॥ असंसंगा
भिधामन्यांतृतीयांयोगभूमिकाम् ॥ ततःपतत्यसौकांतःपुष्पशय्यामिवामलाम् ॥ २८ ॥ यथा
वच्छास्त्रवाक्यार्थेमतिमाधायनिश्चलाम् ॥ तापसाश्रमविश्रांतैरध्यात्मकथनक्रमैः ॥ २९ ॥
संसारनिंदकैस्तद्वद्वैराग्यकथनक्रमैः ॥ शिलाशय्यासनासीनोजरयत्यायुराततम् ॥ ३० ॥ वना
वनिविहारेणचित्तोपशमशोभिना ॥ असंगसुखसौख्येनकालंनयतिनीतिमान् ॥ ३१ ॥ अभ्या
सात्साधुशास्त्राणांकरणात्पुण्यकर्मणाम् ॥ जंतोर्यथावदेवेयंवस्तुदृष्टिःप्रसीदति ॥ ३२ ॥

निष्ठैःसहअध्यात्मकथनक्रमैः ॥ २९ ॥ संसारनिंदकैर्वैराग्यकथनैश्चशिलायामेवशय्यायांयत्रैवासनएवासीनःसन्नाततमायुर्जरयतिक्षपयति ॥ ३० ॥ व्युत्थानदशायांवनावनिविहारेणसमाधौपुनश्चित्तोपशमशोभिनाअसंगसुखसौख्येनशब्दादिसंगसुखादन्यत् यत्सौख्यंतेनअविद्यमानंसंगसुखंयेषांतेषांआत्मारामाणांयत्सौख्यंतेनेतिवास्वरूपसुखमुच्यते तेनचकालंजीवितकालंनयति ॥ ३१ ॥ इयंवस्तुदृष्टिःअसंसंगाभिधायांभूमिकायांयाज्ञानकक्षासेयमित्यर्थः ॥ ३२ ॥

तत्रैवावांतरभेदनिरूपणायाह ॥ तृतीयामिति ॥ तृतीयांभूमिकांप्राप्यबुद्धोज्ञानीसामान्यंश्रेष्ठमेवचद्विःप्रकारमसंसंगमनुभवति ॥ ३३ ॥
नेति ॥ अहंकर्तानिष्क्रियत्वात् भोक्ताचननित्यतृप्तत्वात् बाधकश्चननिर्व्यापारत्वात् ॥ ३४ ॥ इत्येवमर्थेष्वयदसंजननंसंगराहित्यंतत्सामा
न्यासंगनामकम् ॥ ३५ ॥ एतदेवप्रपंचयति ॥ प्रागितिश्लोकत्रयंवाक्यम् ॥ सुखंवादुःखंवासर्वंनिरीश्वरवादेप्राक्कर्मनिर्मितं सेश्वरवादेतु
ईश्वराधीनमेव । अत्रास्मिन्पक्षद्वयेऽपिममकैवकर्तृता नकाचिदित्यर्थः ॥ ३६ ॥ भोगा भोगाःविषयविस्तराःमहारोगाःपर्यंतपरितापित्वा

तृतीयांभूमिकांप्राप्यबुद्धोऽनुभवतिस्वयम् ॥ द्विःप्रकारमसंसंगंतस्यभेदमिमंशृणु ॥ ३३ ॥ द्विवि
धोऽयमसंसंगःसामान्यःश्रेष्ठएवच ॥ नाहंभोक्तानकर्ताचनबाध्योनचबाधकः ॥ ३४ ॥ इत्यसंज
नमर्थेषुसामान्यासंगनामकम् ॥ ३५ ॥ प्राक्कर्मनिर्मितंसर्वमीश्वराधीनमेववा ॥ सुखंवायदिवा
दुःखंकैवात्रममकर्तृता ॥ ३६ ॥ भोगाभोगामहारोगाःसंपदःपरमापदः ॥ वियोगायैवसंयोगा
आधयोव्याधयोधियः ॥ ३७ ॥ कालःकवलनोद्युक्तःसर्वभावान्विनाशयन् ॥ तिष्ठतीतिविचारो
यःसामान्योऽसावसंगमः ॥ ३८ ॥ अनेनक्रमयोगेनसंयोगेनमहात्मनाम् ॥ वियोगेनासताम्
तःप्रयोगेणात्मसंविदाम् ॥ ३९ ॥

त् । संपदःसमृद्धयःपरमापदः अर्जनरक्षणादिनिमित्तदुःखहेतुत्वात् । आधयश्चिंताधियोव्याधयःबुद्धिक्लेशहेतुत्वात् ॥ ३७ ॥ कालश्चकवल
नोद्युक्तःसंहारोद्यतःसन्सर्वभावान्विनाशयन्तिष्ठतीतियोविचारःअसौसामान्यासंगमः ॥ ३८ ॥ श्रेष्ठमसंगमाह ॥ अनेनेतिश्लोकचतुष्ट
यंवाक्यम् ॥ अनेनपूर्वोक्तक्रमयोगेनअभ्यासयोगेनमहात्मनांसंयोगेनअसतांदुर्जनानांवियोगेनवर्जनेनआत्मसंविदांआत्मविचाराणां

प्रयोगेणच ॥ ३९ ॥

॥ २६ ॥ इत्थंभूतम ईषद्बहिरर्थितांस्फुरितामपिमदाभिमानमात्सर्यदंभमोहातिशायितांमदादीनामतिशयसंपत्तिंअहिस्त्वचमिवत्यजति ॥ २६ ॥ इत्थंभूतम तिःपूर्वोक्तसद्वासनावासितमतिःसःद्वितीयभूमिकांप्राप्तोगुरुसज्जनसेवयासाधनेनशास्त्रैरहस्यंतत्त्वंयथावत्सम्यगधिगच्छति ॥ २७ ॥ असं गेतिश्लोकपंचकंवाक्यम् ॥ अंससंगाभिधांतृतीयांतनुमानसेतियापूर्वोक्तासैवमानमस्य तनुत्वाद्विषयेष्वासंगाभावादसंसंगाभिधासंपन्नेति नपूर्वोत्तरविरोधः ॥ २८ ॥ शास्त्राणांअध्यात्मविषयाणांवाक्यार्थेआत्माद्वैतलक्षणेयथावन्निश्चलांमतिमाधायतापसाश्रमेषुविश्रांतैरध्यात्म

मदाभिमानमात्सर्यदंभमोहातिशायिताम् ॥ बहिरप्यर्थितामीषत्त्यजत्यहिरिवत्वचम् ॥ २६ ॥
इत्थंभूतमतिःशास्त्रैगुरुसज्जनसेवया ॥ सरहस्यमशेषेणयथावदधिगच्छति ॥ २७ ॥ असंसंगा
भिधामन्यांतृतीयांयोगभूमिकाम् ॥ ततःपतत्यसौकांतःपुष्पशय्यामिवामलाम् ॥ २८ ॥ यथा
वच्छास्त्रवाक्यार्थैमतिमाधायनिश्चलाम् ॥ तापसाश्रमविश्रांतैरध्यात्मकथनक्रमैः ॥ २९ ॥
संसारनिंदकैस्तद्वद्वैराग्यकथनक्रमैः ॥ शिलाशय्यासनासीनोजरयत्यायुराततम् ॥ ३० ॥ वना
वनिविहारेणचित्तोपशमशोभिना ॥ असंगसुखसौख्येनकालंनयतिनीतिमान् ॥ ३१ ॥ अभ्या
सात्साधुशास्त्राणांकरणात्पुण्यकर्मणाम् ॥ जंतोर्यथावदेवेयंवस्तुदृष्टिःप्रसीदति ॥ ३२ ॥

निष्ठैःसहअध्यात्मकथनक्रमैः ॥ २९ ॥ संसारनिंदकैर्वैराग्यकथनैश्चशिलायामेवशय्यायांयत्रैवासनएवासीनःसन्नाततमायुर्जरयतिक्षपय ति ॥ ३० ॥ व्युत्थानदशायांवनावनिविहारेणसमाधौपुनश्चित्तोपशमशोभिनाअसंगसुखसौख्येनशब्दादिसंगसुखादन्यत् यत्सौख्यंतेन अविद्यमानंसंगसुखंयेषांतेषांआत्मारामाणांयत्सौख्यंतेनेतिवास्वरूपसुखमुच्यते तेनचकालंजीवितकालंनयति ॥ ३१ ॥ इयंवस्तुदृष्टिःअ संसंगाभिधायांभूमिकायांयाज्ञानकक्षासेयमित्यर्थः ॥ ३२ ॥

तत्रैवावांतरभेदनिरूपणायाह ॥ तृतीयामिति ॥ तृतीयांभूमिकांप्राप्यबुद्धोज्ञानीसामान्यंश्रेष्ठमेवचद्विःप्रकारमसंसंगमनुभवति ॥ ३३ ॥ नेति ॥ अहंकर्तानिष्क्रियत्वात् भोक्ताचननित्यतृप्तत्वात् बाधकश्चननिर्व्यापारत्वात् ॥ ३४ ॥ इत्येवमर्थेषुयदसंजनंसंगराहित्यंतत्सामान्यासंगनामकम् ॥ ३५ ॥ एतदेवप्रपंचयति ॥ प्रागितिश्लोकत्रयंवाक्यम् ॥ सुखंवादुःखंवासर्वंनिरीश्वरवादेप्राक्कर्मनिर्मितं सेश्वरवादेतु ईश्वराधीनमेव । अत्रास्मिन्पक्षद्वयेऽपिममकैवकर्तृता नकाचिदित्यर्थः ॥ ३६ ॥ भोगाभोगाःविषयविस्तराःमहारोगाःपर्यंतपरितापित्वा

तृतीयांभूमिकांप्राप्यबुद्धोऽनुभवतिस्वयम् ॥ द्विःप्रकारमसंसंगंतस्यभेदमिमंशृणु ॥ ३३ ॥ द्विविधोऽयमसंसंगःसामान्यःश्रेष्ठएवच ॥ नाहंभोक्तानकर्ताचनबाध्योनचबाधकः ॥ ३४ ॥ इत्यसंजनमर्थेषुसामान्यासंगनामकम् ॥ ३५ ॥ प्राक्कर्मनिर्मितंसर्वमीश्वराधीनमेववा ॥ सुखंवायदिवा दुःखंकैवात्रममकर्तृता ॥ ३६ ॥ भोगाभोगामहारोगाःसंपदःपरमापदः ॥ वियोगायैवसंयोगा आधयोव्याधयोधियः ॥ ३७ ॥ कालःकवलनोद्युक्तःसर्वभावान्विनाशयन् ॥ तिष्ठतीतिविचारो यःसामान्योऽसावसंगमः ॥ ३८ ॥ अनेनक्रमयोगेनसंयोगेनमहात्मनाम् ॥ वियोगेनासतामंतःप्रयोगेणात्मसंविदाम् ॥ ३९ ॥

त् । संपदःसमृद्धयःपरमापदः अर्जनरक्षणादिनिमित्तदुःखहेतुत्वात् । आधयश्चिंताधियोव्याधयःबुद्धिक्लेशहेतुत्वात् ॥ ३७ ॥ कालश्चकवलनोद्युक्तःसंहारोद्यतःसन्सर्वभावान्विनाशयन्तिष्ठतीतियोविचारःअसौसामान्यासंगमः ॥ ३८ ॥ श्रेष्ठमसंगमाह ॥ अनेनेतिश्लोकचतुष्टयंवाक्यम् ॥ अनेनपूर्वोक्तक्रमयोगेनअभ्यासयोगेनमहात्मनांसंयोगेनअसतांदुर्जनानांवियोगेनवर्जनेनआत्मसंविदांआत्मविचाराणां प्रयोगेणच ॥ ३९ ॥

पौरुषेणप्रयत्नेनयःसंतताभ्यासःसमाध्यभ्यासःतद्योगतःकरामलकवद्वस्तुनिस्फुटतामागतेसति ॥ ४० ॥ नाहंकर्ताईश्वरःप्राक्तनंवाकर्मैव कर्तेतिशब्दार्थभावनांशब्दार्थानुसंधानंदूरतरेऽत्यंतदूरेकृत्वात्यक्त्वा ॥ ४१ ॥ परमकारणेसर्वकारणेसारेअबाधितेसंसारांबुनिधेःपारेप्रपंचातीतेपरेब्रह्मणिमौनंशांतंचयदासनंतच्छ्रेष्ठासंगउच्यते ॥ ४२ ॥ तदेवविशिनष्टि ॥ यदितिश्लोकद्वयंवाक्यम् ॥ यद्वासनरूपमाश्रितमंतरादिभिःदेशविशेषैर्भावाभावरूपैःजडाजडरूपैर्वस्तुभिर्नपरिच्छिद्यते ॥ ४३ ॥ अभासनंअविद्यमानंस्वव्यतिरिक्तंभासनंप्रकाशकंयस्य । अ

पौरुषेणप्रयत्नेनसंतताभ्यासयोगतः ॥ करामलकवद्वस्तुन्यागतेस्फुटतांदृढम् ॥ ४० ॥ नाहंकर्तेश्वरःकर्ताकर्मवाप्राक्तनंमम ॥ कृत्वादूरतरेनूनमितिशब्दार्थभावनाम् ॥ ४१ ॥ संसारांबुनिधेःपारेसारेपरमकारणे ॥ यन्मौनमासनंशांतंतच्छ्रेष्ठासंगउच्यते ॥ ४२ ॥ यन्नांतर्नबहिर्नाधोनोर्ध्वंनाशासुनांबरे ॥ नपदार्थैर्नापदार्थैर्नजडेनचचेतने ॥ ४३ ॥ आश्रितंभासनंशांतमभासनमभावनम् ॥ अनाद्यंतमजंकांतंतच्छ्रेष्ठासंगउच्यते ॥ ४४ ॥ संतोषामोदमधुरःसत्कार्यामलपल्लवः ॥ चित्तनालाग्रसंलीनोविघ्नकंटकसंकटः ॥ ४५ ॥ विवेकपद्मांरूढोंऽतर्विवेकार्कविकासितः ॥ फलंफलत्यसंसंगांतृतीयांभूमिकामिमाम् ॥ ४६ ॥

भावनंअविद्यमानंभावनंस्वव्यतिरिक्तंकारणंयस्यतादृशं सर्वप्रकाशकंसर्वकारणंचअनाद्यंतमजंशांतंकांतंचतत्तादृशंभासनरूपमाश्रितंश्रेष्ठासंगउच्यते ॥ ४४ ॥ अस्यास्तृतीयभूमिकायाहेतुमाह ॥ संतोषेतिश्लोकद्वयंवाक्यम् ॥ संतोषामोदमधुरः अलंबुद्धिःसंतोषःतज्जन्येनामोदेनहर्षेणमधुरःमकरंदवान् । सत्कार्याण्येवामलानिपल्लवानिपत्राणियस्यसः चित्तमेवनालःतस्याग्रेसंलीनःविघ्नैरेवकंटकैःसंकटःसंकीर्णः ॥ ४५ ॥ अंतर्हृदयेरूढोविवेकरूपेणार्केणविकासितःसनविवेकपद्मांअसंसंगांतृतीयामिमांभूमिकामेवफलंफलति ॥ ४६ ॥

इदानींप्रथमभूमिकायाहेतुमाह ॥ समवायादिति ॥ विशुद्धानांनिष्कल्मषाणांसज्जनानांसमवायात् पुण्यकर्मणांसंचयाच्च काकतालीय योगेनदैवगत्याप्रथमाभूमिकोदेति ॥ ४७ ॥ भूमिरिति ॥ साप्रथमाभूमिरमृतांकुरिकेवप्रोदितमात्रापिविवेकेनविवेकरूपेणांबुसेकेनप्रयत्न तःपाल्यारक्ष्याच ॥ ४८ ॥ येनेति ॥ एषाभूमिकायेनांशेनोल्लसति तमेवांशंविचारेणयत्नादनुदिनंकृषीवलोंऽकुरमिवोदयंनयेत् ॥ ४९ ॥ एषेति ॥ एषाभूमिकाअंतःपरिमृष्टाविचारेणोदयंनीतासतीअन्यासांभूमिकानांप्रसवैकभूः । ततस्तस्याएवभूमिकायाहेतोर्द्वितीयांतृतीयां

समवायाद्विशुद्धानांसंचयात्पुण्यकर्मणाम् ॥ काकतालीययोगेनप्रथमोदेतिभूमिका ॥ ४७ ॥ भूमिःप्रोदितमात्रांतरमृतांकुरिकेवसा ॥ विवेकेनांबुसेकेनरक्ष्यापाल्याप्रयत्नतः ॥ ४८ ॥ येनांशेनोल्लसत्येषाविचारेणोदयंनयेत् ॥ तमेवानुदिनंयत्नात्कृषीवलइवांकुरम् ॥ ४९ ॥ एषाहिपरिमृष्टांतरन्यासांप्रसवैकभूः ॥ द्वितीयांभूमिकांयत्नात्तृतीयांप्राप्नुयात्ततः ॥ ५० ॥ श्रेष्ठासंसंगताह्येषातृतीयाभूमिकात्रहि ॥ भवतिप्रोज्झिताशेषसंकल्पकलनःपुमान् ॥ ५१ ॥ श्रीरामउवाच ॥ मूढस्यासत्कुलोत्थस्यप्रवृत्तस्याधमस्यच ॥ अप्राप्तयोगसंगस्यकथमुत्तरणंभवेत् ॥ ५२ ॥ एकामथद्वितीयांवातृतीयांवैतरांचवा ॥ आरूढस्यमृतस्याथकीदृशीभगवन्गतिः ॥ ५३ ॥ वसिष्ठउवाच ॥ मूढस्यारूढदोषस्यतावत्संसृतिराततता ॥ यावज्जन्मांतरशतैर्नोदिताप्रथमात्रभूः ॥ ५४ ॥

चभूमिकांप्राप्नुयात् ॥ ५० ॥ श्रेष्ठेति ॥ यैषाश्रेष्ठासंसंगतातृतीयाभूमिकास्तिअत्रअस्यांभूमिकायांवर्तमानःपुमान्प्रोज्झिताशेषसंकल्पकलनोभवति ॥ ५१ ॥ मूढस्येति ॥ मूढस्यअज्ञस्यप्रवृत्तस्यकाम्यकर्मनिष्ठस्य ॥ ५२ ॥ एकामिति ॥ द्वितीयांतृतीयामितरांचवाएकांभूमिकामारूढस्यअथानंतरंमृतस्यकीदृशीगतिः ॥ ५३ ॥ मूढस्येति ॥ आरूढदोषस्यप्रवृद्धरागादिदोष

स्यमूढस्यजन्मांतरशतैरपियावत्प्रथमाभूमिकानोदितातावत्संसृतिरेवातताभवति ॥ ५४ ॥ अथवाकाकतालीययोगतःसाधुसंगत्यासंसार स्यपरामर्शाद्दोषदर्शनाद्वैराग्योदये ॥ ५५ ॥ भूमिकोदयात्संसारोनश्यतीतिशास्त्रार्थसंग्रहः ॥ ५६ ॥ द्वितीयप्रश्नस्योत्तरंश्लोकपंचकेना ह ॥ योगेति ॥ योगभूमिकयाप्रथमादिष्वन्यतमयोत्क्रांतजीवितस्यमृतस्यशरीरिणोजीवस्यभूमिकांशानुसारेणभूमिकाप्रकर्षानुसारेणैव पूर्वंदुष्कृतंक्षीयते ॥ ५७ ॥ ततःसुकृतमहिम्नासुरविमानादिषुस्वर्गप्रदेशेषुरमणीसखोरमते ॥ ५८ ॥ ततःपुराकृतेसुकृतसंभारेदुष्कृतेचभोग

अथवासाधुसंगत्याकाकतालीययोगतः ॥ संसारस्यपरामर्शाद्वैराग्यंसमुदेतिहि ॥ ५५ ॥ वैराग्ये ऽभ्युदितेजंतोरवश्यंभूमिकोदयः ॥ ततोनश्यतिसंसारइतिशास्त्रार्थसंग्रहः ॥ ५६ ॥ योगभूमिकयो त्क्रांतजीवितस्यशरीरिणः ॥ भूमिकांशानुसारेणक्षीयतेपूर्वदुष्कृतम् ॥ ५७ ॥ ततःसुरविमानेषु लोकपालपुरेषुच ॥ मेरुपर्वतकुंजेषुरमतेरमणीसखः ॥ ५८ ॥ ततःसुकृतसंभारेदुष्कृतेचपुराकृ ते ॥ भोगक्षयात्परिक्षीणेजायंतेयोगिनोभुवि ॥ ५९ ॥ शुचीनांश्रीमतांगेहेगुप्तेगुणवतांसता म् ॥ जनित्वायोगमेवैतेसेवंतेयोगवासिताः ॥ ६० ॥ तत्रप्राग्भावनाभ्यस्तंयोगभूमिक्रमंबु धाः ॥ दृष्ट्वोपरिपतंत्युच्चैरुत्तरंभूमिकाक्रमम् ॥ ६१ ॥ भूमिकात्रितयंत्वेतद्रामजाग्रदितिस्मृत म् ॥ जाग्रतीवात्रविस्पष्टंभेदबुद्ध्यनुवर्तनात् ॥ ६२ ॥

क्षयात्क्षयहेतोर्भूमिकांशाच्चपरिक्षीणेसतिभुवि ॥ ५९ ॥ शुचीनांगुणवतांश्रीमतांसतांगुप्तेसुरक्षितेगेहेयोगिनोजायंते । जनित्वाचैतेयो गवासितत्वात्योगमेवसेवंते ॥ ६० ॥ तत्रचप्राग्भावनाभ्यस्तंयोगभूमिकाक्रमंदृष्ट्वाउत्तरंभूमिकाक्रमंपरिपतंतिअभ्यसंति ॥ ६१ ॥ भू मिकेति ॥ एतत्पूर्वोक्तंभूमिकात्रितयंजाग्रदितिस्मृतम् । कुतःअत्रअस्यांभूमिकायांजाग्रतोवविस्पष्टंभेदबुद्ध्यनुवर्तनात् ॥ ६२ ॥

उदेतीति ॥ अत्रभूमिकात्रयेयोगयुक्तानांपूर्वमार्यताकेवलमुदेति यामार्यतांदृष्ट्वामूढबुद्धीनामपिमुमुक्षुतोदेति ॥ ६३ ॥ आर्यलक्षणंश्लो
कद्वयेनाह ॥ कर्तव्यमिति ॥ प्रकृताचारःप्रकृतमावश्यकंदेहधारणोपयुक्तमाचरन्यथास्थितंस्थितिर्मर्यादातदनतिक्रम्य ॥ ६४ ॥ ६५ ॥
प्रथमायामिति ॥ आर्यत्वंप्रथमायांभूमावंकुरितंभवति ततोद्वितीयायांविकसितंसत्तृतीयायांफलति ॥ ६६ ॥ ६७ ॥ भूमिकेतिश्लोक

उदेतियोगयुक्तानामत्रकेवलमार्यता ॥ यांदृष्ट्वामूढबुद्धीनामप्युदेतिमुमुक्षुता ॥ ६३ ॥ कर्तव्य
माचरन्काममकर्तव्यमनाचरन् ॥ तिष्ठतिप्रकृताचारोयःसआर्यइतिस्मृतः ॥ ६४ ॥ यथाचारं
यथाचित्तंयथाशास्त्रंयथास्थितम् ॥ व्यवहारमुपादत्तेयःसआर्यइतिस्मृतः ॥ ६५ ॥ प्रथमायामं
कुरितंभूमौविकसितंततः ॥ द्वितीयायांतृतीयायांफलत्यार्यत्वमुत्तमम् ॥ ६६ ॥ आर्यतायांमृ
तोयोगीशुद्धसंकल्पसंभृतान् ॥ भोगान्भुक्त्वाचिरंकालंयोगवान्जायतेपुनः ॥ ६७ ॥ भूमिकात्रि
तयाभ्यासादज्ञानेक्षयमागते ॥ सम्यग्ज्ञानोदयेचित्तेपूर्णचंद्रोदयोपमे ॥ ६८ ॥ निर्विभागमना
द्यंतेयोगिनोयुक्तचेतसः ॥ समंसर्वंप्रपश्यंतिचतुर्थींभूमिकांगताः ॥ ६९ ॥ अद्वैतेस्थैर्यमायातेद्वै
तेप्रशममागते ॥ पश्यंतिस्वप्नवल्लोकंचतुर्थींभूमिकामिताः ॥ ७० ॥ भूमिकात्रितयंजाग्रच्चतुर्थी
स्वप्नउच्यते ॥ चित्तंतुशरदभ्रांशविलायंप्रविलीयते ॥ ७१ ॥

द्वयंवाक्यम् । पूर्वोक्तभूमिकात्रितयाभ्यासात् अज्ञानेक्षयमागतेसम्यग्ज्ञानोदयेचसतिचित्तेपूर्णचंद्रोदयोपमेसति ॥ ६८ ॥ अनाद्यंतेवस्तु
नियुक्तचेतसःचतुर्थींभूमिकांगतायोगिनःसर्वं[illegible]पश्यंति ॥ ६९ ॥ अद्वैतइति ॥ इताःप्राप्ताः ॥ ७० ॥ भूमिकेति ॥ चतु

र्थीभूमिकास्वप्नउच्यते । यस्मात्तस्यांभूमिकायांचित्तंशरदभ्रांशविलायंप्रविलीयते । शरदभ्रांशवत्प्रविलीयतइत्यर्थः ॥ ७१ ॥ सत्तेति ॥ पंचमींभूमिकांगतोयोगीसत्तावशेषएवास्तेसन्मात्ररूपएवास्ते । यस्मात्कारणादत्रभूमिकायांचित्तस्यविलापनात् जगद्विकल्पोनोदेति ॥ ७२ ॥ पंचमीमिति ॥ सुषुप्तपदनामिकांपंचमींभूमिकामासाद्यशांताशेषविशेषांशः। अद्वैतमात्रेतिष्ठति ॥ ७३ ॥ गलितेति ॥ पंचमींभूमिकांगतोयोगीगलितद्वैतनिर्भासोमुदितोंऽतःप्रबोधवान्सुषुप्तघनएवास्तेसुषुप्तवद्घनोभूयएवास्ते ॥ ७४ ॥ अंतरिति॥ अत्रबहिर्वृत्तिपरःसन्नपि

सत्तावशेषएवास्तेपंचमींभूमिकांगतः ॥ जगद्विकल्पोनोदेतिचित्तस्यात्रविलापनात् ॥ ७२ ॥ पंचमींभूमिकामेत्यसुषुप्तपदनामिकाम् ॥ शांताशेषविशेषांशस्तिष्ठत्यद्वैतमात्रके ॥ ७३ ॥ गलितद्वैतनिर्भासोमुदितोंऽतःप्रबोधवान् ॥ सुषुप्तघनएवास्तेपंचमींभूमिकांगतः ॥ ७४ ॥ अंतर्मुखतयातिष्ठन्बहिर्वृत्तिपरोऽपिसन् ॥ परिशांततयानित्यंनिद्रालुरिवलक्ष्यते ॥ ७५ ॥ कुर्वन्नभ्यासमेतस्यांभूमिकायांविवासनः ॥ षष्ठींतुर्याभिधामन्यांक्रमात्पततिभूमिकाम् ॥ ७६ ॥ यत्रानासन्नसद्रूपोनाहंनाप्यनहंकृतिः ॥ केवलंक्षीणमननआस्तेद्वैतैक्यनिर्गतः ॥ ७७ ॥ निर्ग्रंथिःशांतसंदेहोजीवन्मुक्तोविभावनः ॥ अनिर्वाणोऽपिनिर्वाणश्चित्रदीपइवस्थितः ॥ ७८ ॥

अंतर्मुखतयातिष्ठन्परिशांततयानिद्रालुरिवनित्यंलक्ष्यते ॥ ७५ ॥ कुर्वन्निति ॥ एतस्यांपंचम्यांभूमिकायांअभ्यासंकुर्वन् क्रमाद्विवासनस्तुर्याभिधांषष्ठीमन्यांभूमिकांपतति ॥ ७६ ॥ षष्ठभूमिकांप्राप्तस्यस्वरूपमाह ॥ यत्रेतिश्लोकत्रयंवाक्यम् । यत्रयस्यांषष्ठभूमिकायांवर्तमानोयोगीअसत्असद्रूपोनव्यवहर्तृत्वात् सद्रूपश्चननिर्वासनत्वात् अहंनअहमित्यभिमानाभावात् अनहंकृतिश्चन देहेंद्रियादिप्रवर्तकत्वात् किंतर्हिकेवलंक्षीणमननत्वातनिर्विकल्पत्वात् द्वैतैक्यनिर्गतःभेदाभेदाभ्यांनिर्गतोव्यपदेश्यआस्ते ॥ ७७ ॥ किंचनिर्ग्रंथिःअहंकारस्यग्रं

थिरूपस्यविच्छिन्नत्वात् शांतसंदेहोविभावनोविगतवासनश्चजीवन्मुक्तोयोगीअनिर्वाणोऽपिदेहंधारयन्नपिनिर्वाणः निरहंकारत्वात्निर्वासनत्वाच्चचित्रदीपइवआलेख्यगतप्रदीपइवस्थितः ॥ ७८ ॥ अंतरिति ॥ किंचप्रपंचदृष्ट्याअंतःशून्योनिर्वासनत्वात् । बहिःशून्योबहिरपिब्रह्मैवेदंसर्वमित्यनुसंधानात्तथाचअंबरेवर्तमानःशून्यकुंभइवरिक्तोघटइवभवति किंचब्रह्मदृष्ट्याअंतःपूर्णःसर्वदांतर्भावनात् बहिश्चपूर्णोबहिरपिब्रह्मभावनात् तथाचार्णवेवर्तमानःपूर्णकुंभइवचभवति ॥ ७९ ॥ किंचिदिति ॥ एषषष्ठभूमिगतोयोगीकिंचिदेववस्तुसंपन्नोजातःसद्रूप

अंतःशून्योबहिःशून्यःशून्यकुंभइवांबरे ॥ अंतःपूर्णोबहिःपूर्णःपूर्णकुंभइवार्णवे ॥ ७९ ॥ किंचिदेवैषसंपन्नस्त्वथवैषनकिंचन ॥ षष्ठ्यांभूम्यामसौस्थित्वासप्तमींभूमिमाप्नुयात् ॥ ८० ॥ विदेहमुक्ततातूक्तासप्तमीयोगभूमिका ॥ अगम्यावचसांशांतासासीमाभवभूमिषु ॥ ८१ ॥ कैश्चित्साशिवइत्युक्ताकैश्चिद्ब्रह्मेत्युदाहृता ॥ कैश्चिद्विष्णुरितिप्रोक्ताकैश्चिच्छून्यमितिस्मृता ॥ ८२ ॥ अर्थइत्युदिताकैश्चित्कैश्चित्कालइतिस्मृता ॥ कैश्चित्प्रकृतिपुंभावविभागइतिभाविता ॥ ८३ ॥ अन्यैरप्यन्यथानानाभेदैरात्मविकल्पितैः ॥ नित्यमव्यपदेश्यापिकथंचिद्व्यपदिश्यते ॥ ८४ ॥ सप्तैताभूमिकाःप्रोक्तामयातवरघूद्वह ॥ आसामभ्यासयोगेननदुःखमनुभूयते ॥ ८५ ॥

त्वात् । अथवाएषनकिंचनसंपन्नःअव्यपदेश्यत्वात् इत्थंषष्ठ्यांभूमौस्थित्वाअसौयोगीसप्तमींभूमिकामाप्नुयात् ॥ ८० ॥ विदेहेतिश्लोकचतुष्टयंवाक्यम् । सप्तमीयोगभूमिकातुविदेहमुक्ततोक्ताशांतावचसांअगम्याचसाभवभूमिषुसीमाअवधिःइतःपरंभूमिकांतरस्याभावात् ॥ ८१ ॥ साचनिरुपाधिकत्वान्नित्यमव्यपदेश्यापितत्तन्मतभेदेनतैस्तैर्वादिभिःशिवादिशब्दैःकथंचित्कल्पितोपाधिनाव्यपदिश्यते ॥ ८२ ॥ ८३ ॥ ॥ ८४ ॥ अत्रचसप्तानांयोगभूमिकानांनामानिलक्षणानिचपूर्वमुक्तानि [illegible] भूमिकावतांचिन्हान्येवतुपूर्वमनुक्तत्वादिहपृष्टानिप्रपं

चितानिचयश्चात्रनोक्तंनामादिकंतदुत्पत्तिप्रकरणेलवणाख्यानेद्रष्टव्यम् ॥ ८५ ॥ अस्तीति ॥ करिणीनामइच्छातस्याश्चमदोवासनाव्यूहः महादशनौधर्माधर्मावित्यादिरामप्रश्नानंतरंवसिष्ठएवस्पष्टीकरिष्यति महादशनाभ्यामेवशंखिनीशंखवतीकरिणीति ॥ ८६ ॥ ८७ ॥ संपत्समरभूमिषुसंसारसंपदएवसमरभूमयः संसारसंपदोरामतस्याःसमरभूमयइतिवक्ष्यमाणत्वात् ॥ ८८ ॥ ८९ ॥ रामेतिश्लोकद्वयंवाक्यम् । करिणीनामइच्छासाचइच्छाइदंमेअस्त्वित्येवंरूपिणीसाचेच्छारूपाकरिणीशरीरएवकाननेमत्तासतीविविधोल्लासकरणशीला ॥ ९० ॥ म

वसिष्ठउवाच ॥ अस्त्यनंतमदोन्मत्तामृदुमंथरचारिणी ॥ करिणीविग्रहव्यग्रामहादशनशंखिनी ॥ ८६ ॥ माचेन्निहन्यतेनूनमनंतानर्थकारिणी ॥ तदैतासुसमग्रासुभूमिकासुनरोऽजयी ॥ ८७ ॥ करिणीमदमत्तासायावन्नविजितौजसा ॥ कोनामसुभटस्तावत्संपत्समरभूमिषु ॥ ८८ ॥ श्रीरामउवाच ॥ कासौप्रमत्ताकरिणीकाश्चतारणभूमयः ॥ कथंनिहन्यतेचैषाक्वचैषारमतेचिरम् ॥ ८९ ॥ वसिष्ठउवाच ॥ रामेच्छानामकरिणीसेदंमेस्त्वितिरूपिणी ॥ शरीरकाननेमत्ताविविधोल्लासकारिणी ॥ ९० ॥ मत्तेंद्रियोग्रकलभारसनाकलभाषिणी ॥ मनोगहनसंलीनाकर्मदंतद्वयान्विता ॥ ९१ ॥ मदोऽस्यावासनाव्यूहःसर्वतःप्रसरद्वपुः ॥ इच्छानागीनिहंत्येषाकृपणाञ्जीवसंचयान् ॥ ९२ ॥ संसारदृष्टयोरामतस्याःसमरभूमयः ॥ भूयोयत्रानुभवतिनरोजयपराजयौ ॥ ९३ ॥

त्तानींद्रियाण्येवोग्राःकलभायस्यास्तादृशी । रसनाकलभाषिणीरसनैवरसनातदीया तयाकलभाषणशीला । मनएवगहनंदुःप्रवेशस्थानंतत्रसंलीनाकर्मदंतद्वयान्वितापुण्यापुण्यलक्षणदशनद्वयवती ॥ ९१ ॥ मदइति ॥ अस्याःस्वेच्छाकारिण्याःसर्वतःप्रसरद्वपुःवासनाव्यूहएवमदः एषाचेच्छानागीकृपणानेवजीवसंचयान्निहंति ॥ ९२ ॥ संसारेति ॥ नरःपुमान्जयपराजयौभूयोयत्रानुभवतिताःसंसारदृष्टयएवतस्याःस

मरभूमयः ॥ ९३ ॥ वासनेति ॥ आशयकोशगःआशयों ऽतःकरणंसएवकोशःकोशगृहंतद्गतःतद्विषयोयोवासनाईहामनश्चित्तं संकल्पोभा वनंस्पृहेत्यादिःशब्दसमुदायः सोऽस्याइच्छाकरिण्यानाम्नांनिवहः। इत्यादीतिनपुंसकलिंगपाठेवासनेत्यादिपदकदंबकंआशयकोशगोऽस्याः करिण्यानाम्नांनिवहइतियोजनीयम् ॥ ९४ ॥ धैर्येति ॥ अवहेलयाइतरेषांसर्वेषामस्त्राणांअवज्ञयाप्रसृतांसर्वात्मिकांसर्वविषयत्वाद्विषयै स्तादात्म्यापन्नांइच्छारूपांनागींधैर्यनाम्नावरास्त्रेणसर्वात्मनासर्वप्रकारेणापिजयेत् । धैर्येणैवांकुशेनेच्छारूपांनागींकरिणींवशीकुर्यादित्य र्थः। धैर्यंचात्रपरेब्रह्मणिचित्तस्यस्थैर्यम् ॥ ९५ ॥ यावदिति ॥ इदमस्त्वित्येवंरूपाइयमिच्छाकरिणोयावदंतर्विजृंभते तावदेवेयमुग्राकुसंसार

वासनेहामनश्चित्तंसंकल्पोभावनंस्पृहा ॥ इत्यादिर्निवहोनाम्नामस्याआशयकोशगः ॥ ९४ ॥
धैर्यनाम्नावरास्त्रेणप्रसृतामवहेलया ॥ नागींसर्वात्मिकामेतामिच्छांसर्वात्मनाजयेत् ॥ ९५ ॥
यावदस्त्विदमित्येवमियमंतर्विजृंभते ॥ तावदुग्राकुसंसारमहाविषविषूचिका ॥ ९६ ॥ एता
वानेवसंसारइदमस्त्वितियन्मनः ॥ अस्यतूपशमोमोक्षइत्येवंज्ञानसंग्रहः ॥ ९७ ॥ प्रसादका
रिणीस्वच्छानिरिच्छेविमलाकृतौ ॥ तैलबिंदुरिवादर्शेविश्राम्यत्युपदेशवाक् ॥ ९८ ॥

महाविषविषूचिकाविजृंभते कुत्सितःसंसारएवमहतीविषजन्याविषूचिका ॥ ९६ ॥ एतावानेवेति ॥ इदमस्त्वितियन्मनःसंकल्पनमस्त्येता वानेवसंसारः। सर्वस्यापिसंसारस्यमनोमूलत्वात् अस्यतुमनसउपशमएवमोक्षः । इत्येवंज्ञानस्यज्ञानोपदेशस्यसंग्रहःसंक्षेपः ॥ ९७ ॥ प्रसादेति ॥ स्वच्छास्वयंनिर्मलाअतश्चप्रसादकारिणीपरचित्तप्रसादहेतुरुपदेशवाक्परोपदेशपरगुरुवाक्यंनिरिच्छेनिःसंकल्पे अतश्चविमला कृतौशिष्येआदर्शेदर्पणेतैलबिंदुरिवविश्राम्यतिसंक्रामति तैलबिंदुरपिप्रसादहेतुःस्वच्छश्च । दर्पणोऽपिनिरिच्छोविमलाकृतिश्च ॥ ९८ ॥

मनागिति ॥ अनर्थकारिणीइयमिच्छामनागपिउदितैवविषस्यविषवृक्षस्यअंकुरावलीवअसंवेदनशस्त्रेणसंवेदनंबाह्यानुसंधानंतदभावोऽसंवे
दनंतेनैवशस्त्रेणछेत्तव्या ॥ ९९ ॥ इच्छेति ॥ जीवःइच्छयाविच्छुरितःसन्दीनतांइष्टार्थसिद्धिनिमित्तंदैन्यंनविजहाति । भवांकुरइच्छाचअ
संवेदनमात्रेणनोदेति ॥ १०० ॥ किंतदसंवेदनमित्यत्राह ॥ असंवेदनेति ॥ चित्तस्यतूष्णींव्यवस्थितिरेवासंवेदनशस्त्रंसएवचप्रत्याहाररू
पंयोगांगंतेनैवेच्छानिवार्यते ॥ १ ॥ इदमिति ॥ इदंमेस्त्विवतिविज्ञानमेवकल्पनमाहुः अर्थस्यबाह्यस्ययदभावनंतदेवकल्पनात्यागउच्यते

मनागप्युदितैवेच्छाछेत्तव्यानर्थकारिणी ॥ असंवेदनशस्त्रेणविषस्येवांकुरावली ॥ ९९ ॥ इच्छा
विच्छुरितोजीवोविजहातिनदीनताम् ॥ असंवेदनमात्रेणनोदेतीच्छाभवांकुरः ॥ १०० ॥ असं
वेदनशस्त्रंतुतूष्णींचित्तव्यवस्थितिः ॥ प्रत्याहारःसविज्ञेयस्तेनेच्छाविनिवार्यते ॥ १ ॥ इदंमे
स्त्विवतिविज्ञानमाहुःकल्पनमुत्तमाः ॥ अर्थस्याभावनंयत्तत्कल्पनात्यागउच्यते ॥ २ ॥ स्मर
णंविद्धिसंकल्पंशिवमस्मरणंविदुः ॥ तत्रप्रागनुभूतंचनानुभूतंचभाव्यते ॥ ३ ॥ अनुभूतांनानु
भूतांस्मृतिंविस्मृत्यकाष्ठवत् ॥ सर्वमेवाशुविस्मृत्यमूढस्तिष्ठमहामतिः ॥ ४ ॥ ऊर्ध्वबाहुर्विरौ
म्येषनचकश्चिच्छृणोतितत् ॥ असंकल्पःपरंश्रेयःसकिमंतर्नभाव्यते ॥ ५ ॥

॥ २ ॥ स्मरणमिति ॥ स्मरणमेवसंकल्पंविद्धि । अस्मरणंचशिवंशांतंब्रह्मविदुः तत्रचस्मरणेप्रागनुभूतंनानुभूतंचवस्तुभाव्यतेविषयीक्रियते
॥ ३ ॥ अनुभूतामिति ॥ अनुभूतांनानुभूतांअनुभूतविषयामननुभूतविषयांचस्मृतिंविस्मृत्यविहायकाष्ठवत्सर्वमेवविस्मृत्यअननुसंधायम
हामतिरेवसन्मूढस्तिष्ठमूढवत्तिष्ठ ॥ ४ ॥ ऊर्ध्वबाहुरिति ॥ ऊर्ध्वबाहुःसर्वेषांप्रबोधायउद्धृतभुजःसन्नेषोऽहंपरमार्थदर्शीविरौमिघोषयामि अत्र
नकश्चिदपिशृणोति अहोमोहमहिमेतिशेषः । किंतद्विराव्यमित्यत्राह । असंकल्पइति । असंकल्पएवपरंश्रेयःसोऽयंकिमित्यंतःसर्वैरपिमुमु

क्षुभिर्नभाव्यते ॥ ५ ॥ किलेति ॥ परमंसाम्राज्यमपियत्रयस्मिन्पदेभाव्यमानेतृणायतेतृणमिवतुच्छंभातितत्परंपदंतूष्णींस्थितेनैवकिलप्राप्य
ते । अहोसौलभ्यंपरमपदस्येतिशेषः ॥ ६ ॥ गम्येति ॥ गम्यदेशैकनिष्ठस्यगंतव्यदेशतत्परस्यपांथस्यपादयोःस्पंदःसंचारोयथाविगतसंक
ल्पःप्रतिपदंसंकल्पाभावात् तथाज्ञानिनोब्रह्मनिष्ठस्यस्वकर्मसुस्पंदोव्यवहारोविगतसंकल्पः ॥ ७ ॥ ८ ॥ सर्वमिति ॥ सर्वमिदंजगत्शां
तादिलक्षणंभूतार्थचिद्रूपंपरमार्थचिन्मयंपश्यन्शांतोयथासुखमास्व ॥ ९ ॥ अवेदनमिति ॥ शांतंनिर्विकारंउत्तममासनमेवअवेदनयोगंनि

किलतूष्णींस्थितेनैवतत्पदंप्राप्यतेपरम् ॥ परमंयत्रसाम्राज्यमपिरामतृणायते ॥ ६ ॥ गम्यदे
शैकनिष्ठस्ययथापांथस्यपादयोः ॥ स्पंदोविगतसंकल्पस्तथास्पंदःस्वकर्मसु ॥ ७ ॥ बहुनात्र
किमुक्तेनसंक्षेपादिदमुच्यते ॥ संकल्पनंपरोबंधस्तदभावोविमुक्तता ॥ ८ ॥ सर्वंजगदिदंशांतम
नंतंध्रुवमव्ययम् ॥ पश्यन्भूतार्थचिद्रूपंशांतआस्वयथासुखम् ॥ ९ ॥ अवेदनंविदुर्योगंशांतमा
सनमुत्तमम् ॥ योगस्थःकुरुकर्माणिविकर्माण्यथमाकुरु ॥ ११० ॥ अवेदनंविदुर्योगंचित्तक्षयमकृ
त्रिमम् ॥ अत्यंतंतन्मयोभूत्वातथातिष्ठयथासिभोः ॥ ११ ॥ अहंममेतिसंविदन्नदुःखतोविमुच्य
से ॥ असंविदन्विमुच्यसेयदीप्सितंतदाचर ॥ १२ ॥

र्विकल्पसमाधिंविदुः । अतश्चत्वंयोगस्थः सिद्ध्यसिद्ध्योःसमत्वंयोगःतन्निष्ठःकर्माणिकुरु नीरसोनिष्कामोवाकुरु अथवाआत्मारामतयाक
र्तव्याभावान्माकुरु ॥ ११० ॥ अवेदनमिति ॥ अवेदनमेवयोगंअकृत्रिमंअप्रयाससिद्धंचित्तक्षयंचविदुः अतश्चात्यंतंतन्मयोभूत्वायथासियद्रू
पोऽसितथातिष्ठ ॥ ११ ॥ अहमिति ॥ त्वंअहंममेतिचसंविदन्अभिमन्यमानोदुःखतोदुःखमयात्संसारान्नविमुच्यसे । इत्थमसंविदंस्तुविमु
च्यसे । अत्रबंधमोक्षसाधनद्वयेयदीप्सितमभिमतंतदाचरेतिनिपुणोक्तिः ॥ १२ ॥

प्रकृतोपसंहारव्याजेनमहताप्रबंधेनोपपादितमात्माद्वैतविज्ञानमुपसंहरन्नाह ॥ शिवमिति ॥ यत्खलुशिवंब्रह्मसर्वगतंपरिपूर्णंशांतंनिर्विकारंअजंजन्मादिरहितंशुभंअशुभसंसारनिवर्तकंबोधात्मकं विशुद्धज्ञानात्मकंतदेकभावनंतस्यैवब्रह्मणएकमद्वैतंयद्भावनंब्रह्मैवेदंसर्वमितियत्परिपूर्णभावनंतदेवजीर्णपर्णवत्कर्मणांकुट्टनहेतुत्वात्कर्मत्यागइतिस्मृतः इतिविधीयमानकर्मत्यागरूपापेक्षयापुल्लिंगनिर्देशः । असंवेदनमसंक



शिवंसर्वगतंशांतंबोधात्मकमजंशुभम् ॥ तदेकभावनंरामकर्मत्यागइतिस्मृतः ॥ १३ ॥ इतिश्रीवाल्मीकीयेमोक्षोपायेवासिष्ठरामायणेनिर्वाणप्रकरणेयोगसप्तभूमिकोपाख्यानंनामत्रिचत्वारिंशत्तमःसर्गः ॥ ॥ ४३ ॥ प्रसह्यवेधसःसृष्टिंयत्कटाख्यरसांजनम् ॥ वादीवाग्मीकविश्चायंरामकीर्तिंसृजत्यहो ॥ १ ॥ निंदंतियेहरिहरार्यकृपामृताब्धिस्वच्छंदसंचरणसंचितवांछितार्थाः ॥ निंदंतितेजलनिधिंबहिरुत्क्षिपंतेस्नातुंसमागतवतोऽपितरंगहस्तैः ॥ २ ॥ मज्जंतमप्यनुदिनंद्विजराजमेकमद्यापिनैवजलधिर्विमलीकरोति ॥ स्पृष्टोऽप्यहोहरिहरार्यकृपांबुधिस्तेप्रक्षालयत्यमतिपंकमपिद्विजानाम् ॥ ३ ॥ मन्यामहेहरिहरार्यगुरोत्वदीयवाणीसुधाजलधिमेववरंवरेण्यम् ॥ आनंदकंदलितनंदनपारिजातनिष्यदमानमकरंदमहीनदीनाम् ॥ ४ ॥ वाल्मीकिरुवाच ॥ इत्युक्तवत्यथमुनौदिवसोजगामस्नातुंसभाकृतमुनिप्रणतिर्जगाम ॥ सायंतनास्तविधयेऽस्तमितोजगामश्यामाक्षयेरविकरैश्चसभाजगाम ॥ ५ ॥



ल्पनंतूर्ष्णींभावइति यन्नैष्कर्म्यंकर्मप्रकृतंतस्यायमुपसंहारइतिसर्वंसमंजसम् ॥ १३ ॥ इतिसंसारतरणिनाम्नियोगवासिष्ठविवरणेनिर्वाणप्रकरणेसप्तभूमिकोपाख्यानंनामत्रिचत्वारिंशत्तमःसर्गः ॥ ४३ ॥

अष्टादशेतिदिवसान्विदधेगरिष्ठागोष्ठींवसिष्ठमुनिनासहरामचंद्रः ॥ हित्वाभवप्रभवमोहमथावतस्थेनिर्वा
तवारिधिरिवाचलसत्त्वपूर्णः ॥ ६ ॥ तस्मिन्क्षणेकल्पतरुप्रसूतप्रसूनसंघस्यपपातवृष्टिः ॥ संतुष्टगीर्वाणग
णप्रमुक्तामुक्ताफलादभ्रमिताभ्रपूर्णा ॥ ७ ॥ अवतीर्यस्वयंविष्णुर्मानुष्योरामनामधृक् ॥ खिन्नःसंसारजा
लेऽस्मिन्योगज्ञानेनबोधितः ॥ ८ ॥ प्रबुद्धेनाथरामेणसंपूज्याभिष्टुतोमुहुः ॥ पितृभ्रातृसमेतेनप्रणम्याभि
हितोमुनिः ॥ ९ ॥ त्वत्प्रसादाद्धोभगवन्निःसंशयमिदंमनः ॥ विज्वरंशीतलंशांतंसंजातमविकारिमे ॥ १० ॥
सर्वार्तिहर्तासर्वज्ञःसर्वदेवाश्रितोगुरुः ॥ मोहांधकारविध्वंसःसवितेवभवानिति ॥ ११ ॥ ततस्तदानींमुनिना
रामायगगनस्थिताः ॥ श्रोतुमभ्यागतादेवाआहूयप्रकटीकृताः ॥ १२ ॥ यक्षगंधर्वसिद्धर्षिविद्याधरमहोरगाः ॥
रामेणप्रणताश्चैतमूचुःसंतुष्टमानसाः ॥ १३ ॥ श्रुतमस्माभिरखिलंज्ञानमेतन्महोदयम् ॥ त्रैलोक्यमोहार्तिह
रौभवंतौप्रणतावयम् ॥ १४ ॥ भवद्गुरोर्वसिष्ठस्यभवतश्चमहात्मनः ॥ मिथःसंवादमखिलंज्ञानमेतन्महोद
यम् ॥ १५ ॥ ततःसिद्धैरयोध्यायांस्तुत्वैतदवतारितम् ॥ काश्मीरमंडलस्यांतर्भूतानामनुकंपया ॥ १६ ॥ अ
थसर्वाणिकार्याणिज्ञाततत्त्वोगतव्यथः ॥ निर्ममोनिर्ममेरामोनिष्कामोजनकोयथा ॥ १७ ॥ यथांबुबिसिनी
पत्रेसज्जतेनांबुमज्जनैः ॥ तथास्यराज्यभोगेननचेतोरज्यतेऽमलम् ॥ १८ ॥ नास्यभूतिमतोभ्रांतिर्बभूवभव
भोगिनः ॥ यथाजांगलिकस्यादिमुखदत्तांगुलेरपि ॥ १९ ॥ शास्त्रंत्विदंविरक्तायेसत्संगाःसत्क्रियापराः ॥ ते
षांधर्मात्मनामेवप्रदातव्यंप्रयत्नतः ॥ २० ॥ सर्वासर्वोपकारायमतिश्चेदस्तिवःशुभा ॥ तदिदंसर्वथादेयंवि

द्यादानंमहाफलम् ॥ २१ ॥ दुर्ग्रहग्रस्तमनसामसाधूनांप्रमादिनाम् ॥ निंदकानामिदंशास्त्रंरहस्यंनप्रकाशयेत् ॥ २२ ॥ पूर्वंनाराधितोयेनभगवानिंदुशेखरः ॥ हरिर्ब्रह्मारविश्चापिनलभेदिदमद्भुतम् ॥ २३ ॥ महेश्वरेणयत्प्रोक्तंदेव्यायच्चापिविष्णुना ॥ मुनीनांनारदादीनांतदिदंज्ञानमुत्तमम् ॥ २४ ॥ महारामायणाख्यंयन्मोक्षोपायपराभिधम् ॥ ततःक्षीरनिधिप्रख्यात्पीयूषमिदमुद्धृतम् ॥ २५ ॥ सामान्येनविचारेणक्षयमायातिदुष्कृतम् ॥ सम्यगस्यविचारेणकोनयातिपरंपदम् ॥ २६ ॥ एकवेलमधीतेनशास्त्रेणानेनकिल्बिषम् ॥ प्रणश्यतिनृणांसर्वंक्षिप्रंबोधश्चजायते ॥ २७ ॥ अप्रबुद्धोऽपियश्चेदंभावयेद्भक्तिभावितः ॥ तस्यनिर्मलतासिद्धंचित्तंनास्त्यत्रसंशयः ॥ २८ ॥ मूढैर्मुमुक्षुभिर्वापिसंयतैर्वाप्यसंयतैः ॥ परमार्थमिदंचिंत्यंदुर्लभंब्रह्मदर्शनम् ॥ २९ ॥ किंचित्संस्कृतबुद्धीनांश्रुतंशास्त्रमिदंयथा ॥ सौख्यापहंतथाशास्त्रमन्यदस्तिनकिंचन ॥ ३० ॥ भुक्तिमुक्तिप्रदमिदंयोगिनांपरमंप्रियम् ॥ हस्तस्थंप्राप्यचिद्रूपंप्राक्पुण्यैरेवलभ्यते ॥ ३१ ॥ सर्वागमार्थसंवेत्तावसिष्ठःपरमोमतः ॥ मोक्षोपायस्यसारोऽयमितिसर्वत्रगीयते ॥ ३२ ॥ प्रियार्थादिवियोगेनजातखेदस्यदेहिनः ॥ शास्त्रंविनाकिमत्रस्यादंतःसंतापशांतिदम् ॥ ३३ ॥ चिदंबरात्प्रोदितएवपूर्णःशास्त्रेंदुरानंदनिधिःसुपादः ॥ सांद्रामृतःकाव्यरसोपशोभास्फुरन्प्रकाशःक्षपितोऽधकारः ॥ ३४ ॥ स्नातंतेनसमस्ततीर्थसलिलैःसर्वापिदत्तावनिर्यज्ञानांचकृतंसहस्रमखिलादेवाश्चसंपूजिताः ॥ संसाराच्चसमुद्धृताःस्वपितरस्त्रैलोक्यपूज्योऽप्यसौयस्यब्रह्मविचारणेक्षणमपिस्थैर्यंमनःप्राप्नुयात् ॥ ३५ ॥ इतिश्रीमोक्षोपायेनिर्वाणप्रकरणेशास्त्रग्रहण

फलनिर्देशोनामचतुश्चत्वारिंशःसर्गः ॥ ४४ ॥ वाल्मीकिरुवाच ॥ इतिवरमुनिप्रोक्तंज्ञानसारंपुराणेसकलमनु
निशम्यश्रीरघूणांकुलाग्र्यः ॥ विमलमतिरपृच्छत्किंचिदन्यत्स्वयंवैशमसुखपरिपूर्णःपूर्णबोधस्थितोऽसौ ॥
॥ १ ॥ सखलुपरमयोगीविश्ववंद्यःसुरेन्द्रोजननमरणहीनःशुद्धबोधस्वरूपः ॥ सकलगुणनिधानंसंनिधानंर
मायास्त्रिजगदुदयरक्षानुग्रहाणामधीशम् ॥ २ ॥ शक्तिपालवशोन्मेषप्रकटामलचिद्घनः ॥ मुहूर्तमासीद्बुद्बुद
श्चैतन्यानंदसागरः ॥ ३ ॥ प्रश्नोत्तरविभागादिपरिपाटीविवर्जितः ॥ आनंदामृतपूर्णाश्रुरोमकंटकितांगकः
॥ ४ ॥ महासामान्यरूपत्वचिद्व्यापकतयास्थितः ॥ नित्यमष्टगुणैश्वर्यंतृणप्रायमनोरथः ॥ ५ ॥ नकिंचि
दूचेसंपन्नःशिवेपरिणतःपदे ॥ ६ ॥ भरद्वाजउवाच ॥ अहोखलुमहाश्चर्यंरामःप्राप्तोमहत्पदम् ॥ कथमेतादृ
शीप्राप्तिरस्माकंमुनिनायक ॥ ७ ॥ मूर्खाःशोच्याश्चकिंचित्तामादृशाःक्वचपापिनः ॥ क्वचब्रह्मादिभिःप्रार्थ्या
दुर्लभारामसंस्थितिः ॥ ८ ॥ अहोमुनीश्वरगुरोकथंविश्राम्यतांमया ॥ दुष्पारश्चभवांभोधिस्तीर्यतेतद्वदाशुमे
॥ ९ ॥ वाल्मीकिरुवाच ॥ श्रीरामवृत्तांतमशेषमादितोवसिष्ठवाक्यानुगतंनिरूपितम् ॥ धियाविचार्यानुप
रामृशस्वयंमयापिवेद्यंकथनीयमत्रते ॥ १० ॥ अविद्ययाप्रपंचोऽयंनास्तिसत्यमिहाण्वपि ॥ विवेचयंतिविबु
धाविवदंत्यविवेकिनः ॥ ११ ॥ नास्तिभिन्नंचितःकिंचित्किंप्रपंचेनरुद्ध्यते ॥ अभ्यासेनरहस्यानांवयस्यवि
शदोभव ॥ १२ ॥ प्रपंचविषयावृत्तिर्जाग्रन्निद्रेतिकीर्तिता ॥ सप्रबुद्धस्तुयस्यांताश्चित्प्रदीपोनिरंजनः ॥ १३ ॥
शून्यमूलप्रपंचोऽयंशून्यताशिखरंसखे ॥ सारशून्यतयामध्येऽप्यनास्थासन्मनीषिणा ॥ १४ ॥ अनादिवास

नादोषादसन्नेवायमीक्ष्यते ॥ गंधर्वनगराकारःसंसारबहुविभ्रमः ॥ १५ ॥ चित्तेऽनभ्यस्यकल्याणींचैतन्या
मृतकंदलीम् ॥ संमुह्यसिकिमध्यास्यवासनाविषवीरुधः ॥ १६ ॥ जाग्रदेतन्निपतितंज्ञानालंबग्रहादधः ॥ व
सत्युपरिसर्वेषांयेनिरालंबसंविदः ॥ १७ ॥ तावद्दृढस्फुराकाररसाविद्यामहानदी ॥ नयावदात्मरूपेणनिपुणै
रवगाह्यते ॥ १८ ॥ प्राङ्नास्तिचरमंनास्तिवस्तुसर्वमिदंसखे ॥ सिद्धिमध्येऽपितन्नास्तिस्वप्नवृत्तमिदंजगत्
॥ १९ ॥ अविद्यायोनयोभेदाःसर्वेऽमीबुद्बुदाइव ॥ क्षणमुद्भूयगच्छंतिज्ञानैकजलधौलयम् ॥ २० ॥ सुशीतलो
दकनदींविदित्वाप्रविगाह्यताम् ॥ बहिर्भ्रांतिनिदाघास्तेनियांतुकलिताःशुचा ॥ २१ ॥ एकश्चाज्ञानजलधि
र्जगदात्माव्यतिष्ठति ॥ ज्येष्ठोऽयमहमित्यूर्मिरविद्यावातसंभवः ॥ २२ ॥ चित्तस्खलनभेदालीरागाद्याश्चप्रक
ल्पिताः ॥ ममतोत्कलितावर्तस्ततःस्वैरंप्रवर्तते ॥ २३ ॥ रागद्वेषावतिग्राहौगृहीतसमनंतरम् ॥ ततश्चानर्थपा
तालप्रवेशःकेनवार्यते ॥ २४ ॥ प्रशांतामृतकल्लोलेकेवलामृतवारिधौ ॥ मत्तमज्जसिकिंद्वैतग्रहक्षाराब्धिवीचि
षु ॥ २५ ॥ कस्तिष्ठतिगतःकोवाकस्यकेनकिमागतम् ॥ किंनिमज्जसिमायायामेतत्तत्त्वमतंद्रितः ॥ २६ ॥ त
त्त्वमेकंयदात्मेतिजगदेतत्प्रचक्षते ॥ ततोऽन्यःकस्तवातीतोयस्ताविषयःशुचाम् ॥ २७ ॥ बालान्प्रतिविव
र्तोऽयंब्रह्मणःसकलंजगत् ॥ अविवर्तितमानंदमास्थिताःकृतिनःसदा ॥ २८ ॥ अविविक्तोजनःशोचत्यकस्मा
च्चप्रहृष्यते ॥ तत्त्ववित्तुहसन्नास्तेतस्यमोहोविडंबनम् ॥ २९ ॥ तच्चसूक्ष्ममिदंतत्त्वंतिरोहितमविद्यया ॥ यथा
स्थलेषुलोकानांजलेष्वात्मसुसंशयः ॥ ३० ॥ पृथिव्यादिमहाभूतपरमाणुमयंजगत् ॥ स्थितंयदातदापीहको

गतोयोऽनुशोच्यते ॥ ३१ ॥ असतःसंभवोनास्तिनास्त्यभावःसतःसखे ॥ आविर्भावतिरोभावसंस्थानाना
मयीपरे ॥ ३२ ॥ किंत्वनेकपुरोत्साहाद्द्विषतामुपगच्छति ॥ भजसंचरिताभोगंपरमेशंजगद्गुरुम् ॥ ३३ ॥ दुरि
तानिसमस्तानिपच्यंतेऽद्यापिनध्रुवम् ॥ द्रुतमेवास्यदेवस्यपाशाःप्रश्रयतांगताः ॥ ३४ ॥ साकारंभजतावत्त्वंया
वत्सत्वंप्रसीदति ॥ निराकारेपरेतत्त्वेततःस्थितिरकृत्रिमा ॥ ३५ ॥ इममुद्दामतमसंजित्वाशत्रुंबलाद्ध्रुवम् ॥ य
मस्यानुसरध्यानंविश्वस्तेनांतरात्मना ॥ ३६ ॥ समाधायक्षणंपश्यप्रत्यगात्मानमात्मनि ॥ इयंविभातुसंव्यक्तं
द्राग्बुद्धिरजनीतव ॥ ३७ ॥ कृतंपुरुषकारेणकेवलेनचकर्मणा ॥ महेशानुग्रहादेवप्राप्तव्यंप्राप्यतेनरैः ॥ ३८ ॥
नाभिजात्यंनचारित्र्यंननयोनचविक्रमः ॥ बलवंतिपुराणानिसखेकर्माणिकेवलम् ॥ ३९ ॥ अप्रतर्क्यात्प्रतीका
रात्किमेवमवसीदति ॥ नलुंपतिललाटस्थामीश्वरोऽप्यक्षमालिकाम् ॥ ४० ॥ क्वचिद्दत्ताक्वचैदग्ध्यंक्वचेयंमो
हवल्लरी ॥ अचिंतनीयानियतिर्निर्णयेद्वंद्वमोहितम् ॥ ४१ ॥ हेभरद्वाजमोहंत्वंविवेकेनजहिस्फुटम् ॥ असा
मान्यमिदानींतेज्ञानंप्राप्स्याम्यसंशयम् ॥ ४२ ॥ दूरमुत्सहतेराजामहासत्वोमहापदि ॥ अल्पसत्वोजनःशो
चत्यल्पेऽपिहिपरिक्षये ॥ ४३ ॥ बोधंपुण्यपराधीनंप्राप्यतेबहुजन्मभिः ॥ अनुमीयेतधीरेषुजीवन्मुक्तेषुकार्य
तः ॥ ४४ ॥ द्विषद्भूतेनयेनैवकर्मणाबंधईदृशः ॥ सुहृद्भूतेनतेनैवमोक्षमाप्स्यासिपुत्रक ॥ ४५ ॥ सतांसत्कर्मसं
वेगःपुराणंप्रणुदन्नयम् ॥ वर्षौघइवभूतानांदावानलमसेचयत् ॥ ४६ ॥ सखेसन्यस्यकर्माणिब्रह्मणःप्रणयीभ
व ॥ नेष्यतेयदिसंसारचक्रावर्तभ्रमभ्रमम् ॥ ४७ ॥ तावदेतद्विकल्पोत्थमिदंयावद्बहिर्ग्रहः ॥ प्रतिकूलेऽब्धि

कल्लोलेकेवलंनिश्चलंपयः ॥ ४८ ॥ अयंकिमंधंकरणस्त्वयाशोकोऽवलोक्यते ॥ निर्वाहयतुसैवत्वाप्रज्ञायाष्टिर
भंगुरा ॥ ४९ ॥ नजातुतेविगण्यंतेगणनांसुगरीयसीम् ॥ येतरंगैस्तृणानीवह्रियंतेहर्षशोकयोः ॥ ५० ॥
समारूढदशादोलामहोरात्रमिदंजगत् ॥ क्रीडयतेषड्विधैःप्रेक्ष्यैःसखेकिमितिखिद्यसे ॥ ५१ ॥ सूतेसंहरति
क्षिप्रंपुनःसृजतिहंतिच ॥ जगंतिबहुपर्यायैःकालएवकुतूहली ॥ ५२ ॥ नविशेषग्रहःकश्चिन्नकश्चिन्नचकश्चन ॥
जंतुष्वभ्यवहार्येषुप्रकाम्यंकालभोगिनः ॥ ५३ ॥ काकथामर्त्यपिंडानांनिमेषांतरवासिनाम् ॥ अपिदेवनिका
यायेतेदुःकालस्यगोचराः ॥ ५४ ॥ स्वयंनृत्यसिकिंप्रीतेविपत्तौविकलेन्द्रियः ॥ क्षणंनिखिन्नमासीनःपश्यसं
सारनाटकम् ॥ ५५ ॥ अस्यानेकतरंगस्यजगतःक्षणभंगिनः ॥ नविषीदतिमनस्वीभारद्वाजमनागपि ॥ ५६ ॥
त्यजशोकममंगल्यंमंगलानिविचिन्तय ॥ चिदानंदघनस्वच्छमात्मानंचविभावय ॥ ५७ ॥ देवद्विजगुरु
प्राज्ञामरसाधुषुचेतसाम् ॥ सदागमप्रमाणानांमहेशानुग्रहोभवेत् ॥ ५८ ॥ इतिश्रीवाल्मीकीयेमोक्षोपायेभ
रद्वाजानुशासनंनामपंचचत्वारिंशःसर्गः ॥ ४५ ॥ भरद्वाजउवाच ॥ ज्ञातंतवप्रसादेनसर्वमेतदशेषतः ॥
नवैराग्यात्परंभाग्यंनसंसारात्परोरिपुः ॥ १ ॥ इदानींश्रोतुमिच्छामिवसिष्ठेनोपपादितम् ॥ ज्ञानसारमशे
षेणग्रंथेनोक्तंयदात्मना ॥ २ ॥ वाल्मीकिरुवाच ॥ भरद्वाजशृणुष्वेदंमहाज्ञानंविमुक्तिदम् ॥ यस्यश्रवणमा
त्रेणभवाब्धौनानिमज्जसि ॥ ३ ॥ संहृतिस्थितिसंभूतभेदैर्योऽनेकधास्थितः ॥ एकोऽपिसन्नमस्तस्मैसच्चिदानं
दमूर्तये ॥ ४ ॥ कृतेप्रपंचविलयेयथातत्त्वंप्रकाशते ॥ तदोपायंप्रवक्ष्यामिसंक्षेपाच्छ्रुतिशासनात् ॥ ५ ॥

शांतोदांतश्चोपरतोनिषिद्धात्पापकर्मणः ॥ विषयेंद्रियसंश्लेषसुखाच्चश्रद्धयान्वितः ॥ ६ ॥ मृद्वासनेसमासी
नोजितचित्तेंद्रियक्रियः ॥ ओमित्युच्चारयेत्तावन्मनोयावत्प्रसीदति ॥ ७ ॥ प्राणायामंततःकुर्यादंतःकरणशु
द्धये ॥ इंद्रियानाहरेत्पश्चाद्विषयेभ्यःशनैःशनैः ॥ ८ ॥ देहेंद्रियमनोबुद्धिक्षेत्रज्ञानांचसंभवः ॥ पश्चाद्भवतित
द्भावात्तेषुपश्चाद्विलापयेत् ॥ ९ ॥ विराजिप्रथमंस्थित्वातत्रात्मनिततःपरम् ॥ अव्याकृतेस्थितःपश्चात्स्थि
तेपरमकारणे ॥ १० ॥ मांसादिपार्थिवंभागंपृथिव्यांप्रविलापयेत् ॥ आप्यंरक्तादिकंचाप्सुतैजसंतेजसिक्षि
पेत् ॥ ११ ॥ वायव्यंचमहावायौनभस्यंनभसिक्षिपेत ॥ पृथिव्यादिषुविन्यस्यचेंद्रियाण्यात्मयोनिषु ॥
॥ १२ ॥ श्रोत्रादिलक्षणोपेताःकर्तुर्भोक्तुःप्रसिद्धये ॥ दिक्षुन्यस्यात्मनःश्रोत्रंत्वचंविद्युतिनिक्षिपेत ॥ १३ ॥
चक्षुरादित्यबिंबेचजिह्वामप्सुविनिक्षिपेत् ॥ प्राणंवायौवाचमग्नौपाणिमिंद्रेविनिक्षिपेत् ॥ १४ ॥ विष्णौत
थात्मनःपादौपायुंमित्रेतथैवच ॥ उपस्थंकश्यपेन्यस्यमनश्चंद्रेनिवेशयेत् ॥ १५ ॥ बुद्धिंब्रह्मणिसंयच्छेदे
ताःकरणदेवताः ॥ इंद्रियव्यपदेशेनव्यादिश्यंत्येवदेवताः ॥ १६ ॥ श्रुतिवाक्यमनुस्मृत्यनस्वतःप्रकटीकृ
ताः ॥ एवंन्यस्यात्मनोदेहंविराडस्मीतिचिंतयेत् ॥ १७ ॥ ब्रह्मांडांतःस्थितोयोऽसावर्धनारीश्वरःप्रभुः ॥
आधारःसर्वभूतानांकारणंतद्बुदाहृतम् ॥ १८ ॥ सयज्ञसृष्टिरूपोऽसौजाग्रद्वृत्तौव्यवस्थितः ॥ द्विगुणांडाद्बहिः
पृथ्वीपृथिव्याद्विगुणंजलम् ॥ १९ ॥ सलिलाद्विगुणंतेजस्तेजसोद्विगुणोऽनिलः ॥ वायोर्द्विगुणमाकाशमूर्ध्वं
मेकैकशःक्रमात् ॥ २० ॥ व्यस्तेनचसमस्तेनमहताग्रथितंजगत ॥ क्षितिंचाप्सुसमावेश्यसलिलंचानलेक्षि

पेत ॥ २१ ॥ अग्निंवायौसमावेश्यवायुंचनभसिक्षिपेत् ॥ नभश्चमहदाकाशेसमस्तोत्पत्तिकारणे ॥ २२ ॥ स्थित्वातस्मिन्महायोगीलिंगमात्रशरीरधृक् ॥ वासनाभूतसूक्ष्माश्चकर्माविद्येतथैवच ॥ २३ ॥ दशेंद्रियमनोबुद्धिरेतल्लिंगंविदुर्बुधाः ॥ ततश्चांडाद्बहिर्वायौसूत्रात्मास्मीतिचिंतयेत् ॥ २४ ॥ चतुर्मुखोग्रकेवायौभूतसूक्ष्मव्यवस्थितः ॥ लिंगमव्याकृतेसूक्ष्मेन्यस्याव्यक्तेचबुद्धिमान् ॥ २५ ॥ नामरूपविनिर्मुक्तंयस्मिन्संतिष्ठते जगत् ॥ तामाहुःप्रकृतिंकेचिन्मायामेकेपरेत्वणून् ॥ २६ ॥ अविद्यामपरेप्राहुस्तर्कविभ्रांतचेतसः ॥ तत्रसर्वेलयंगत्वातिष्ठंत्यव्यक्तरूपिणः ॥ २७ ॥ निःसंबोधानिरास्वादाःसंभवंतिततःपुनः ॥ तत्स्वरूपेणतिष्ठंतियावत्सृष्टिःप्रवर्तते ॥ २८ ॥ आनुलोम्यात्स्मृतासृष्टिःप्रातिलोम्येनसंहृतिः ॥ अतःस्थानत्रयंत्यक्त्वातुरीयंपदमव्ययम् ॥ २९ ॥ ध्यायेत्तत्प्राप्तयेलिंगंप्रविलाप्यपरंविशेत ॥ भूतेंद्रियमनोबुद्धिवासनाकर्मवायवः ॥ ३० ॥ अज्ञानंचप्रविष्टाःस्युर्लिंगमव्याकृतेसति ॥ इदानींलिंगनिगडान्मुक्तोऽहंसर्वथायतः ॥ ३१ ॥ चिदंशत्वात्प्रविष्टोऽहंचैतन्यानंदसागरे ॥ अभेदात्परमात्मास्मिसर्वोपाधिविवर्जितः ॥ ३२ ॥ कूटस्थःकेवलोव्यापीचिदचिच्छक्तिमानहम् ॥ घटाभावेघटाकाशकलशाकाशयोर्यथा ॥ ३३ ॥ तमाहुःश्रुतयोब्रह्मएवमेवैक्यमादरात् ॥ यथाग्निरग्नौसंक्षिप्तःसमानत्वमनुव्रजेत् ॥ ३४ ॥ तदाख्यस्तन्मयोभूत्वागृह्यतेनविशेषतः ॥ यथातृणादिकंक्षिप्तंरुमायांलवणंभवेत् ॥ ३५ ॥ अचेतनंजगन्न्यस्तंचैतन्येचेतनंभवेत् ॥ यथावैलवणग्रंथिःसमुद्रेसैंधवोयथा ॥ ३६ ॥ नामरूपादिनिर्मुक्ताःप्रविश्यापःसमुद्रताम् ॥ यथाजलेजलंन्यस्तंक्षीरेक्षीरंघृतेघृतम् ॥ ३७ ॥

अविनष्टाभवंत्येतेगृह्यंतेनविशेषतः ॥ तथाहंसर्वभावेनप्रविष्टश्चेतनेसति ॥ ३८ ॥ नित्यानंदेसमस्तज्ञेपरेप
रमकारणे ॥ नित्यंसर्वगतंशांतंनिरवद्यंनिरंजनम् ॥ ३९ ॥ निष्कलंनिष्क्रियंशुद्धंतद्ब्रह्मास्मिपरंपदम् ॥
केवलंसत्यसंकल्पंशुद्धंब्रह्मास्म्यहंपरम् ॥ ४० ॥ पुण्यपापविनिर्मुक्तंकारणंजगतःपरम् ॥ अद्वितीयंपरंज्यो
तिर्ब्रह्मास्म्यानंदमद्वयम् ॥ ४१ ॥ एवमादिगुणैर्युक्तंसत्वादिगुणवर्जितम् ॥ आविष्टंसकलंब्रह्मसदाध्याये
त्सुकर्मकृत ॥ ४२ ॥ एवमभ्यसतःपुंसोमनोऽस्तंयातितत्रवै ॥ मनस्यस्तंगतेतस्यस्वयमात्माप्रकाशते ॥ ४३ ॥
प्रसादेसर्वदुःखानांहानिःस्यात्सुखमात्मनि ॥ स्वयमात्मात्मनात्मानमानंदंप्रतिपद्यते ॥ ४४ ॥ इतिते
वर्णितंसर्वंवसिष्ठस्योपदेशितम् ॥ अनेनज्ञानमार्गेणयोगमार्गेणपुत्रक ॥ ४५ ॥ भरद्वाजमहाप्राज्ञसर्वज्ञास्य
सिनिश्चितम् ॥ परामर्शेनशास्त्रस्यगुरुवाक्यार्थबोधनात् ॥ ४६ ॥ अभ्यासात्सर्वसिद्धिःस्यादितिवेदानु
शासनम् ॥ तस्मात्त्वंसर्वमुत्सृज्यकुर्वभ्यासेस्थिरंमनः ॥ ४७ ॥ भरद्वाजउवाच ॥ रामःप्राप्तःपरंयोगं
स्वात्मनात्मनिहेमुने ॥ कथंवसिष्ठदेवेनव्यवहारःपरःकृतः ॥ ४८ ॥ इतिज्ञात्वाहमप्येवमभ्यासार्थंयतेय
था ॥ तथैवव्यवहारोऽपिव्युत्थानेमेभविष्यति ॥ ४९ ॥ वाल्मीकिरुवाच ॥ यदापरिणतःसाधुःस्वस्वरू
पेमहामनाः ॥ विश्वामित्रस्तदोवाचवसिष्ठमृषिसत्तमम् ॥ ५० ॥ विश्वामित्रउवाच ॥ हेवसिष्ठमहाभाग
ब्रह्मपुत्रमहानसि ॥ गुरुत्वंशक्तिपातेनतत्क्षणादेवदर्शितम् ॥ ५१ ॥ दर्शनात्स्पर्शनाच्छब्दात्कृपयाशिष्य
देहके ॥ जनयेद्यःसमावेशंशांभवंसहिदेशिकः ॥ ५२ ॥ रामोऽप्ययंविशुद्धात्माविरक्तःस्वात्मनैवहि ॥ वि

श्रांतिमात्राकांक्षीचसंवादात्प्राप्तवान्पदम् ॥ ५३ ॥ शिष्यप्रज्ञैवबोधस्यकारणंगुरुवाक्यतः ॥ मलत्रयम
पक्वंचेत्कथंबुद्ध्यतिपक्ववत् ॥ ५४ ॥ ज्ञानंप्रत्यक्षमेवेदंगुरुशिष्यप्रयोजनम् ॥ उभावपिततस्तज्ज्ञौसर्वेषांमा
दृशामपि ॥ ५५ ॥ इदानींकृपयारामव्युत्थानंकर्तुमर्हसि ॥ परेणपरतस्त्वंहिकार्याविष्टोऽर्चयंयतः ॥ ५६ ॥
स्मरकार्यंममविभोयदुद्दिश्याहमागतः ॥ प्रार्थितश्चातिकष्टेनराजादशरथःस्वयम् ॥ ५७ ॥ तद्वृथामाकृथाःस
र्वंशुद्धेनमनसामुने ॥ देवकार्यंचरामान्यदवतारप्रयोजनम् ॥ ५८ ॥ सिद्धाश्रमंमयानीतोरामोराक्षसमर्दनः ॥
करिष्यतिततोऽहल्यामुक्तिंचजनकात्मजाम् ॥ ५९ ॥ परिणेष्यतिकोदंडभंगेनकृतनिश्चयः ॥ रामस्यजामद
ग्न्यस्यकर्तानैश्चित्यमात्मनः ॥ ६० ॥ पितृपैतामहंराज्यंत्यक्ष्यतेऽत्रैवनिःस्पृहः ॥ वनवासच्छलेनेवदंडकारण्य
वासिनः ॥ ६१ ॥ उद्धरिष्यतितीर्थानिप्राणिनोदुःखिनोहिये ॥ सीताहरणदौर्गत्यच्छलनेभुविशोच्यताम्
॥ ६२ ॥ दर्शयिष्यतिसर्वेषांरावणादिवधादपि ॥ स्त्रीसंगिनांसमासंगंवानरादिपरार्थताम् ॥ ६३ ॥ सीतावि
शुद्धिमन्विच्छन्लोकानुगतमात्मनः ॥ जीवन्मुक्तोनिस्पृहोऽपिक्रियाकांडपरायणः ॥ ६४ ॥ भविष्यतिप
रिप्रष्टुंज्ञानकर्मसमुच्चयम् ॥ यैर्दृष्टोयैःस्मृतोवापियैःश्रुतोबोधितस्तुयैः ॥ सर्वावस्थागतानांतुजीवन्मुक्तिंप्र
दास्यति ॥ ६५ ॥ इतिकार्यमशेषेणत्रैलोक्यस्यसमापिहि ॥ अनेनरामचंद्रेणपुरुषेणमहात्मना ॥ ६६ ॥ न
मोऽस्मैजितमेवैतेकोऽप्येवंचिरमेधताम् ॥ वसिष्ठकृपयात्वंहिव्यवहारंपरंकुरु ॥ ६७ ॥ वाल्मीकिरुवाच ॥ इ
त्युक्त्वावस्थितस्तूष्णींविश्वामित्रोमहामुनिः ॥ वसिष्ठस्तुमहातेजारामचंद्रमभाषत ॥ ६८ ॥ वसिष्ठउवाच ॥

रामराममहाबाहोमहापुरुषचिन्मय ॥ नायंविश्रांतिकालोहिलोकानंदमयोभव ॥ ६९ ॥ यावल्लोकपरामर्शो
निरूढोनास्तियोगिनः ॥ तावद्रूढसमाधित्वंनभवत्येवनिर्मलम् ॥ ७० ॥ तस्माद्राज्यादिविषयान्पर्यालो
च्यविनश्वरान् ॥ देवकार्यादिभारांश्चत्यजपुत्रसुखीभव ॥ ७१ । वाल्मीकिरुवाच ॥ इत्युक्तोऽपियदारामः
किंचिन्नोचेलयंगतः ॥ तथासुषुम्नयासोऽपिप्रविष्टोहृदयंशनैः ॥ ७२ ॥ शक्तिप्राणमनःप्रशांतकरणोजीवप्र
काशात्मकोनाडीरंध्रसुषुप्तसर्वकरणःप्रोन्मील्यनेत्रेशनैः ॥ हृष्टोत्कृष्टवसिष्ठमुख्यविदुषोनिर्मुक्तसर्वैषणःकृ
त्याकृत्यविचारणाद्विरहितःसर्वान्प्रतीक्ष्यस्थितः ॥ ७३ ॥ श्रीरामउवाच ॥ नविधिर्ननिषेधश्चत्वत्प्रसादा
दहंपुनः ॥ तथापितववाक्यंतत्करणीयंचसर्वदा ॥ ७४ ॥ वेदागमपुराणेषुस्मृतिष्वपिमहामुने ॥ गुरुवाक्यंवि
धिःप्रोक्तोनिषेधस्तद्विपर्ययः ॥ ७५ ॥ वाल्मीकिरुवाच ॥ इत्युक्त्वाचरणौतस्यवसिष्ठस्यमहात्मनः ॥ शिर
स्याधायसर्वात्मासर्वान्प्राहघृणानिधिः ॥ ७६ ॥ सर्वेशृणुतभद्रंवोनिश्चयेनसुनिश्चितम् ॥ आत्मज्ञानात्परं
नास्तिगुरोरपिचतद्विदः ॥ ७७ ॥ सिद्धाऊचुः ॥ रामैवमेवसर्वेषांमनोऽपिस्थितिमागतम् ॥ त्वत्प्रसादाच्चसक
लसंवादेनदृढीकृतम् ॥ ७८ ॥ सुखीभवमहाराजरामचंद्रनमोऽस्तुते ॥ वसिष्ठेनाप्यनुज्ञातागच्छामोऽद्ययथा
गतम् ॥ ७९ ॥ एवमुक्त्वागताःसर्वेरामसंस्तवनेरताः ॥ रामचंद्रस्यशिरसिपौष्पीवृष्टिःपपातह ॥ ८० ॥ वा
ल्मीकिरुवाच ॥ एतत्तेसर्वमाख्यातंरामचंद्रकथानकम् ॥ अनेनक्रमयोगेनभरद्वाजसुखीभव ॥ ८१ ॥ इतिर
घुपतिसिद्धिःप्रोदितायामयातेवरमुनिवचनालीरत्नमालाविचित्रा ॥ निखिलकविकुलानांयोगिनांसेव्यरूपाप

रमगुरुकटाक्षान्मुक्तिमार्गं ददाति ॥ ८२ ॥ यदिदंशृणुयान्नित्यंविधिंरामवशिष्ठयोः ॥ सर्वावस्थोऽपिश्रवणान्मुक्तिमार्गंनिगच्छति ॥ ८३ ॥ इहवैराग्यमुमुक्षुव्यवहारोत्पत्तिकस्थितयः ॥ उपशमनिर्वाणाख्येवासिष्ठेषट्प्रकरणानि ॥ ८४ ॥ इतिश्रीतर्कवादीश्वरसाहित्याचार्यगौडमंडलालंकारश्रीमदभिनंदपंडितसमुद्धृतेवासिष्ठरामायणेमोक्षोपायेसारोद्धारेभरद्वाजोपाख्याने निर्वाणप्रकरणेश्रीवसिष्ठरामचंद्रसंवादोनामाष्टचत्वारिंशः सर्गः ॥ ४८ ॥ ॥ समाप्तोऽयं ग्रंथः ॥ ॥ शुभंभूयात् ॥

अयं लघुयोगवासिष्ठाख्योऽतीव दुर्लभोऽप्रसिद्धश्च ग्रंथो महदायासेन श्रीमत्त्रिलोकरामजिस्वामिभ्यः संपाद्य श्रीमज्जयकृष्णजीवनराममहाराजनिकटवर्त्यन्यत्पुस्तकमप्यानीय तत्संयोजनेन पंडितद्वारा संशोध्य श्रीमत्पीतांबरमहाराज, शरीफसालेमहंमद एतदुभाभ्यां कृतसूचनातः मुंबय्यां निर्णयसागराख्यमुद्रणयंत्रालयाधिपतिना स्वकीये मुद्रणयंत्रे स्थूलाक्षरैर्मुद्रयित्वा प्रसिद्धिं नीतः ॥ शकाब्दाः १८१० संवत् १९४४.

